# MANUSAMHITA.

## CHAPTER II.

EDITED
WITH NOTES AND TRANSLATIONS
BY

**BIDHUBHUSHAN GOSWAMI, M. A.,**
SENIOR PROFESSOR OF SANSKRIT LITERATURE,
GOVT. COLLEGE, DACCA.

AND

**BASANTA KUMAR RAY, M. A. B. L.**
SOMETIME PROFESSOR, JAGANNATH COLLEGE,
DACCA.



KEDARNATH BOSE, B. A.
28-4 AKHIL MISTRY'S LANE, CALCUTTA.
1910.

# द्वितीयाध्यायस्य विषयानुक्रमकथनम् ।





| श्लोकाः | | | विषयाः |
|---|---|---|---|

*Note.* – उपसंहारश्लोके नैष्ठिकस्य ब्रह्मचारिणो ब्रह्मप्राप्तिफलोपदेशात् नैष्ठिको भवेत् अतो सत्यामित्युपदेश इति । ( Vide छान्दोग्य भाष्यम् )

# मानवधर्म्मशास्त्रस्य विवरणम्



परमात्मा हि ब्रह्मापरनामधेयहिरण्यगर्भरूपेणावस्थित: पश्चात् स्वदेहं द्विधा चकार अर्द्धेन पुरुष: अर्द्धेन नारी च बभूव। तस्यां नार्य्यां मैथुनधर्म्मेण स विराडितिसंज्ञितं पुरुषं जनयामास। विराड़पि पुरुषो भगवानेव। स स्वयं विराट् पुरुष: मनुं सर्व्व लोकस्य स्रष्टारं जनयामास। मनुश्च मरीच्यत्रिप्रभृतीन् दश प्रजापतीन् जनयामास। ते च प्रजापतय: देवान् देवस्थानानि यथादीश्च जनयामासु:। तस्मात् मनुर्हि भगवान् देवतानां प्रजापतीनां च आदिभूत: हिरण्यगर्भात्मक: स्वयं भगवान् अवतारूपीति विनिर्णय:।

तेनच मनुना स्वायम्भुवेन इदं शास्त्रं कृतं तत्पुत्रेण भृगुणाच प्रजापतिना मुनिभ्य उक्तम् ततश्च जगति प्रकाशं गतम् शिष्यपरम्परया। आदौ एतच्छास्त्रं लक्षश्लोकात्मकं तत: द्वादशसहस्रात्मकं तत: अष्टसाहस्रसमन्वितं तत चतु:सहस्रश्लोकात्मकं संक्षिप्तं कृतम्।

तस्य प्रथमाध्याये – जगत: समुत्पत्ति:। द्वितीये – संस्कारविधि: व्रतचर्य्या स्नान-विधि:। तृतीये – विवाह:, विवाहानां लक्षणं महायज्ञविधानं श्राद्धकल्प:। चतुर्थाध्याये – वृत्तीनां लक्षणं स्नातकव्रतानि भक्ष्याभक्ष्यनिर्णय-शौचद्रव्यशुद्धि:। पञ्चमे – स्त्रीणां धर्म्म:, षष्ठे – वानप्रस्थधर्म्म: सन्न्यासधर्म्म:। सप्तमे – नृपतिधर्म्म:। अष्टमे – व्यवहारदर्शनम्। नवमे – स्त्रीपुंसयोर्धर्म्म: दायविभाग: द्यूतविधानम् कण्टकशोधनं वैश्यशूद्रयोर्धर्म्मश्च। दशमे – सङ्करजातीनां उत्पत्ति: आपद्धर्म्म:। एकादशे – प्रायश्चित्तम्। द्वादशे—शुभाशुभकर्म्मजनितविविधजन्मात्मज्ञानकर्म्मणां गुणदोषौ। अमुष्मान्यदपि बहु निर्णीतम्।

---

# द्वितीयोऽध्यायः

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधत ॥ १ ॥

PROSE.—अद्वेषरागिभिः सद्भिः विद्वद्भिः नित्यं सेवितः हृदयेन अभ्यनुज्ञातः यो धर्मः तं निबोधत ॥ १ ॥

*N. B.* About the different constructions of the sloka vide elucidation.

EXPLANATION.—ब्रह्मज्ञानमेव परमधर्मः। प्रथमाध्याये सृष्टिवर्णनव्यपदेशेन ब्रह्मज्ञानाख्यं परमधर्मं मुक्त्वा तस्य अङ्गीभूतं धर्मं जातकर्म-दानादिरूपं वक्तुं द्वितीयादयो अध्यायाः आरभ्यन्ते। धर्मलक्षणमज्ञात्वा धर्मो नैव ज्ञायते इति हेतो रस्मिन् श्लोके धर्मलक्षणमाह विद्वद्भिरिति। अद्वेषरागिभिः द्वेषः विषयेषु द्वेषस्ववृत्तिः रागश्च विषयेषु आसक्तिरनुरागो वा तौ द्वेषरागौ विद्येते येषां ते द्वेषरागिणः न द्वेषरागिणः अद्वेषरागिणः नञ्समासः। तैः सद्भिः धार्मिकैः नित्यं सततं सेवितः अनुष्ठितः हृदयेन मनसा करणेन अभ्यनुज्ञातः आनुकूल्येन प्रीतिजनकतया ज्ञातः अवगतः यो धर्मः अनुष्ठानात्मकः तं धर्मं निबोधत जानीत यूयं इति शेषः। अस्मिन् श्लोके वेदविद्भिः हृदयेन अभ्यनुज्ञातः इति पदद्वयं प्राधान्येन धर्मलक्षणं निरूपयति तदर्थग्रहणे यत्नः कर्त्तव्य इति। लक्षणप्रकारस्तु वेदविद्भिः हृदयेन अभ्यनुज्ञातः यः सः धर्मः। तं निबोधत इति। वेदविद्भिः ज्ञातः अर्थात् वेदात् ज्ञातः ज्ञातुं शक्य इत्यर्थः। हृदयेन अभ्यनुज्ञातः यो वेदज्ञानां हृदयं प्रीणाति अतः यो लोकानां ऐहिकपारलौकिकमङ्गलं करोति इत्यर्थः। तस्मात् यो वेदेन उक्तः मङ्गलकरश्च स धर्म्म इति लक्षणं उक्तं भवति। अनेन लक्षणेन धर्मं ज्ञात्वा वक्ष्यमाणश्लोकसमूहोक्तप्रकारेण धर्मं चरत यूयमिति निष्कर्षः ॥ १ ॥

ELUCIDATION.—This sloka has been construed by others in a different way. We stick to the commentary of Kulluka. विद्वद्भिः is regarded by some as the subject of सेवितः, and सद्भिः as the subject of अभ्यनुज्ञातः. It is for this reason that Sir W.

Jones and others translated "revered or followed by the learned in the vedas" (विद्वद्भि: सेवित:) and "impressed on the heart of the pious" (सद्भि: हृदयेन अभ्यनुज्ञात:). But Kulluka Bhatta takes विद्वद्भि: as the subject both of सेवित: and अभ्यनुज्ञात:. He says in his commentary "वेदविद्भि: ज्ञात इति विशेषणात्" &c. &c. &c. "हृदयेनाभिमुख्येन ज्ञात" इति। It is not विद्वद्भि: सेवित: and अद्वेषरागिभि: सद्भि: नित्यं हृदयेन अभ्यनुज्ञात:, but विद्वद्भि: with its epithets सद्भि: &c. &c. सेवित: अभ्यनुज्ञातश्च (vide our prose order).

The words विद्वद्भि: हृदयेन अभ्यनुज्ञात: are the most important ones in the text. It is out of these words that Kullaka Bhatta has evolved the definition of धर्म्म which conforms to that given by Jaimini in his Dharma sutras or Purba Mimansa Philosophy. Bharat Siromany translates it as "যে ধর্ম্ম, রাগদ্বেষহীন সাধু বিদ্বানেরা একান্ত হৃদয়ে ধারণা করিয়াছিল।"

MEANING IN ENGLISH.—Learn that system of duty or sacred law which is followed and assented to in their heart by those who are learned in the Vedas, and free from hatred and inordinate affection.

PURPORT.—वेदज्ञा यं निषेवन्ते हृदयेन अनुजानन्तिच अथवा यो वेदेन विहित: लोकानां श्रेयस्करश्च स एव धर्म्म इति धर्म्मलक्षणम्। तं धर्म्मं मत्त: यूयं शृणुत॥ १॥

BENGALI.—যাহা রাগদ্বেষশূন্য ধার্ম্মিক বিদ্বদ্গণ কর্ত্তৃক অনুষ্ঠিত ও হৃদয়ানুমোদিত সেই ধর্ম্ম অবগত হউন॥ ১॥

BENGALI TRANSLATION.—রাগদ্বেষশূন্য ধার্ম্মিক বেদজ্ঞগণ যাহা নিত্য অনুষ্ঠান করেন, অর্থাৎ যাহা কেবল বেদে প্রাপ্ত হওয়া যায় অথচ যাহাতে বেদজ্ঞগণের চিত্ত অনুকূল, অর্থাৎ যাহা লোকের শ্রেয়স্কর, তাহাকে ধর্ম্ম বলে। আপনারা উক্ত লক্ষণবিশিষ্ট ধর্ম্ম আমার নিকট অবগত হউন॥ ১॥

ENGLISH TRANSLATION.—Learn the *dharma* which is followed (and practised) by the learned (in the Vedas) and the pious and the good, who are ever free from spite and passion, and which is approved by the heart (*i. e.* to say conscience). (1).

KULLUKA.—प्रकृष्टपरमात्मज्ञानरूपधर्म्मज्ञानाय जगत्कारणं ब्रह्म प्रतिपाद्य अधुना ब्रह्मज्ञानाङ्गभूतं संस्कारादिरूपं धर्म्मं प्रतिपिपादयिषुर्धर्म्मसामान्यलक्षणं प्रथममाह

विद्वद्भिरिति। विद्वद्भिर्वेदविद्भिः सद्भिर्धार्म्मिकैरागद्वेषशून्यै रनुष्ठितो हृदयेनाभिमुखेन ज्ञात इत्यनेन श्रेयःसाधनमभिमतम्। तत्र हृदयेनेति स्वरसात् मनोऽभिमुखीभवति। वेदविद्भिर्ज्ञात इति विशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितं खड्गधारिणा हत इत्युक्ते धृतखड्गस्यैव हनने प्राधान्यम् अतो वेदप्रमाणकः श्रेयःसाधनं धर्म्म इत्युक्तम् एवंविधो यो धर्म्मस्तन्निबोधत। उक्तार्थसंग्रहश्लोकाः। वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम्। वेदादेव परिज्ञातो धर्म्म इत्युक्तवान्मनुः। हृदयेनाभिमुखेन ज्ञात इत्यपि निर्द्दिशन्। श्रेयः साधनमित्याह तत्र ह्यभिमुखं मनः। वेदप्रमाणकः श्रेयःसाधनं धर्म्म इत्यतः। ननूक्तमेव मुनयः प्रणिन्युर्धर्म्मलक्षणम्। अतएव हारीतः—अथातो धर्म्मं व्याख्यास्यामः श्रुतिप्रमाणको धर्म्मः, श्रुतिश्च द्विविधावैदिकी तान्त्रिकी च। भविष्यपुराणे—धर्म्मः श्रेयःसमुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्। स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः। अस्य सम्यगनुष्ठानात् स्वर्गो मोक्षश्च जायते। इह लोके सुखैश्वर्य्यमतुलञ्च खगाधिप। श्रेयः श्रेयःसाधनमित्यर्थः। जैमिनिरपि इदमपि धर्म्मलक्षणमसूत्रयत् चोदनालक्षणोऽर्थो धर्म्म इति। उभयचोदनया लक्ष्यतेऽर्थः श्रेयःसाधनं ज्योतिष्टोमादि, अनेन चोदनालक्षणेन अनर्थो,धर्म्म इति अधर्म्मलक्षणं सूचितमनर्थः प्रत्यवायसाधनं श्येनादिः तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादि धर्म्म इति सूत्रार्थः। स्मृत्यादयोऽपि वेदमूलत्वेनैव धर्म्मप्रमाणमिति दर्शयिष्यामः। गोविन्दराजस्तु हृदयेनाभ्यनुज्ञात इत्यन्तःकरणविचिकित्साशून्य इति व्याख्यातवान्,तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म्म इति धर्म्मलक्षणं स्यात्। एतच्च दृष्टार्थग्रामगमनादिसाधारणं धर्म्मलक्षणं विचक्षणा न श्रद्दधते। मेधातिथिस्तु हृदयेनाभ्यनुज्ञातः इति यत्र चित्तं प्रवर्त्तयतीति व्याख्याय अथवा हृदयं वेदः सह्यधीतो भावनादिरूपेण सन्तहृदयस्थितिः हृदयमित्युच्यते इत्युक्तवान्॥ १॥

KULLUKA EXPLAINED.—"प्रकृष्टपरमात्मज्ञानरूपधर्म्मज्ञानाय जगत्कारणं ब्रह्म प्रतिपाद्य अधुना ब्रह्मज्ञानाङ्गभूतं संस्कारादिरूपं धर्म्मं प्रतिपिपादयिषु र्धर्म्मसामान्यलक्षणं प्रथममाह विद्वद्भिरिति।"

अस्मिन् कुल्लूकवाक्ये केचित् तर्का अतिसंक्षिप्ताः सन्निविष्टास्तिष्ठन्ति तान् परिस्फुटरूपेण अज्ञात्वा कुल्लूकवाक्यं बोद्धुं न शक्यते इति ते तर्काः आदौ स्फुटीक्रियन्ते ततश्च वाक्यस्य प्रतिपदव्याख्यानं भविष्यति। धर्म्मो हि द्विविधः परमधर्म्मः धर्म्मश्च। ब्रह्मज्ञानं परमात्मज्ञानं वा परमधर्म्मः, जातकर्म्म—विवाहोपनयनधनदान-विद्यादान-वापी-कूपखनन-दीपदानादिरूपकर्म्माणि धर्म्मः। परमधर्म्म एव प्रकृष्टधर्म्मशब्देन उच्यते। परमधर्म्मेण मोक्षलाभः धर्म्मेण ऐहिकसम्वृद्धिः पारलौकिकस्वर्गादिलाभश्च भवति। तस्मात् परमधर्म्मात् धर्म्मः हीनतरः। तथासति मनुः परमात्मज्ञानरूपं परमधर्म्मं प्रकृष्टधर्म्मं वा अनुक्त्वा कथं हीनतरं धर्म्मं अस्मिन् शास्त्रे उक्तवान्? नैवं प्रथमाध्याये हि मनुः संक्षेपेण ब्रह्मज्ञानं

उक्तवान्। नैवं प्रथमाध्याये ब्रह्मणः जगत् इदं जातमिति कथितवान् ननु ब्रह्मज्ञानम्। तस्य उत्तरमाह जगत्कारणं ब्रह्म प्रतिपाद्य इति अर्थात् ब्रह्मणः जगत् जातमिति वाक्येन ब्रह्म प्रतिपादितं भवति यतो जगत् जातं तद् ब्रह्म इत्येव ब्रह्मलक्षणम्। उक्तञ्च उपनिषत्सु यतो वा इमानि भूतानि जायन्ते तद् ब्रह्म इति शेषः। तथा ब्रह्मप्रतिपादकब्रह्मसूत्रेच जन्माद्यस्य यत इति अर्थात् यतो यस्मात् सत्यवस्तुनः अस्य जगतः जन्मस्थितिप्रलया भवन्ति तत् ब्रह्म इति ब्रह्मलक्षणमुक्तम्। मनुनाऽपि तेनैव प्रकारेण यत् तत्कारणम् इति जगत्कारणत्वेन ब्रह्मलक्षणं उक्तम्। ब्रह्मलक्षणमेव ब्रह्म प्रतिपादनम् तदेव ब्रह्मज्ञानम् तदेव परमधर्मः। तस्मात् मनुना प्रथमाध्याये ब्रह्मप्रतिपादितम्। तत्र ब्रह्म प्रतिपाद्य हीनतरम् धर्मं द्वितीयादिषु अध्यायेषु प्रतिपादयिष्यति। तत्र प्रश्नः, प्रथमाध्याये परमधर्मे उक्ते सति हीनतरेण धर्मेण किं प्रयोजनम्? तदाह ब्रह्मज्ञानाङ्गभूतमिति। धर्मज्ञानं परमधर्मस्य अङ्गम्, धर्मज्ञानादृते परमधर्मज्ञानं न सम्भवति चित्तशुद्धेरभावात्। धर्मेण हि चित्तशुद्धिः ततः परं परमात्मज्ञानरूपः परमधर्मः विशुद्धे चित्ते पदं करोति। धर्मलक्षणात् विना धर्मो ज्ञातुं न शक्यते तस्मात् विद्वद्भिरिति श्लोके मनुः धर्मस्य लक्षणं आह।

अधुना प्रतिपदव्याख्यानम् सुबोधं भविष्यति। "प्रकृष्टपरमात्मज्ञानरूपधर्मज्ञानाय" परमात्मज्ञानरूप यो धर्मः स प्रकृष्टः धर्मः, तस्य ज्ञानाय ज्ञानार्थं प्रकृष्टधर्मस्य अवबोधाय इत्यर्थः "जगत्कारणं ब्रह्म प्रतिपाद्य" प्रथमाध्याये ब्रह्म जगतः कारणं इति उक्त्वा तेनैव वाक्येन ब्रह्मप्रतिपाद्य निरूप्य तेन प्रकारेण वेदान्तेषु अपि ब्रह्मणः प्रतिपादितत्वात्, "अधुना" द्वितीयाध्यायारम्भे "ब्रह्मज्ञानाङ्गभूतम्" ब्रह्मज्ञानस्य प्रथमाध्याये उक्तस्य परमधर्मस्य अङ्गभूतं चित्तशुद्धिहेतुत्वात् आनुषङ्गिकम "संस्कारादिरूपम्" संस्काराः उपनयनादिरूपाः षोड़श आदयो येषां ते संस्कारादयः अर्थात् षोड़श संस्कार—कूपादिखनन—दीपदान—धनदान—परोपकारादयः रूपं स्वरूपं यस्य सः तं धर्मं कर्मरूपं "प्रतिपिपादयिषुः प्रतिपादयितुं इच्छुः सन् धर्मस्य सामान्यलक्षणं धर्मस्य साधारणं लक्षणं "प्रथमम्" आदौ आह मनुरिति शेषः "विद्वद्भिरिति" विद्वद्भिरिति श्लोकेन।

After demonstrating Brahma as the First cause of the Universe, for the attainment of the knowledge of the Supreme Self which is technically styled as Paramadharma, the sage now intending to demonstrate dharma which is subsidiary to the knowledge of the Surpreme Soul, and which consists in the performance of ten ceremonies and other duties prescribed by the Vedas, first of all defines "dharma" in the couplet commencing with the word *Vidwadbhi.*

"विद्वद्भि र्वेदविद्भिः सद्भि र्धार्म्मिकैः रागद्वेषशून्यैः अनुष्ठितः।"

विद्वद्भिः वेदविद्भिः अर्थात् वेदं विदद्भिः इति वक्तव्ये विद्वद्भिरित्युक्तम्। विद्वत् शब्देन अत्र वेदवित् बोध्यते नतु पण्डितः। अवेदज्ञस्य धर्म्मज्ञानाभावात्। सद्भिः धार्म्मिकैः धर्म्मं चरति इति पाणिनिवचनात् धार्म्मिकशब्देन धर्म्मानुष्ठानशील एव गम्यते नतु अन्यः। अत्र सत्शब्देन धार्म्मिक एव बुध्यते नतु पण्डितः धर्म्मस्य प्राकरणिकत्वात्। रागद्वेषशून्यैरिति अद्वेषरागिभि रित्यस्यार्थः। अनुष्ठित इति सेवित शब्दस्यार्थः।

विद्वान् means learned in the Vedas, not learned in the general sense of the word. सद्भिः means those who discharge the duties enjoined by the Vedas, and does not mean honest men generally. अद्वेषरागिभिः means persons exempt from hatred against and inordinate attachment for the objects of senses.

"हृदयेन आभिमुख्येन ज्ञात इत्यनेन श्रेयःसाधनमभिमतम्।"

हृदयेन चित्तेन (अभि अनु) आभिमुख्येन अनुकूलतया इत्यर्थः ज्ञातः अवगतः इति अनेन अंशेन श्रेयःसाधनम् पुरुषार्थसाधनम् मङ्गलजनकत्वं अभिमतं मनोरिति शेषः। अर्थात् हृदयेन अभ्यनुज्ञात इति वाक्येन यत् श्रेयःसाधनं शुभकरं तत् वेदोक्तं कर्म्म धर्म्म इति मनोरभिप्रायः।

"तत्र हृदयेनेति स्वरसात् मनोऽभिमुखो भवति।"

अर्थात् श्लोकस्थहृदयेन इति पदेन इदमेव बुध्यते यत् यस्मिन् वेदोक्ते कर्म्मणि मनः स्वरसात् स्वभावेन अभिमुखीभवति अनुकूलं भवति यदभिलक्ष्य वेदज्ञस्य चित्तं प्रवणं लोलं भवति तत् धर्म्मः।

"वेदविद्भि र्ज्ञात इति विशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितं, खड्गधारिणा हत इत्युक्ते धृतखड्गस्यैव प्राधान्यम्"।

वेदविद्भिः ज्ञात इति धर्म्मशब्दस्य विशेषणम्, एवम्प्रकारस्य वेदविद्भिर्ज्ञात इतिप्रकारकविशेषणस्य उपादानसामर्थ्यात् प्रयोगसामर्थ्यात् हेतोः ज्ञातस्य वेदस्य एव श्रेयःसाधनज्ञाने अनेन धर्म्मेण एतत् श्रेयः ऐहिकपारत्रिकमङ्गलं साध्यते इति ज्ञाने बोधे कारणत्वं हेतुत्वं विवक्षितं वक्तुमीप्सितं मनुना। यतः खड्गधारिणा गृहीतखड्गेन मनुष्येण स हतः इति केनचित् जनेन उक्ते कथिते सति धृतखड्गस्य धृतस्य हस्ते गृहीतस्य खड्गस्य एव नतु घातकस्य जनस्य प्राधान्यं प्रधानत्वं हननकर्म्मणि इत्यर्थः। अयं भावः अस्मिन् मनुवचने यो वेदविद्भि र्ज्ञातः स धर्म्म इत्युक्तम्। वेदविद्भिर्ज्ञात इति हि धर्म्मस्य विशेषणम्। को धर्म्मः? वेदविद्भि र्ज्ञातः यः स धर्म्म इति विशेषणप्रकारः। वेदविद्भि र्ज्ञात इत्यनेन वेदेन ज्ञातः (ज्ञातुं शक्यः) इत्यर्थोभवति,

खड्गधारिणा देवदत्तेन हत: यज्ञदत्त: इत्युक्ते देवदत्तेन धृतो य: खड्ग स एव यज्ञदत्तस्य वधकर्म्मणि प्रधान आसीत् इति गम्यते।

By the specification (वेदविद्भिर्ज्ञात:) "known by the learned in the Vedas" it is intended to convey that it is the known Veda (and not the knower of it) that plays the principal part in the acquisition of knowledge which leads to श्रेय:, welfare; because when it is said "He was killed by a swordsman", we understand that the sword played the principal part in the act of killing. "*Dharma* known by the learned-in-the-Vedas" means *dharma* known through the Vedas. It is from the Vedas that *dharma* can be known, and from nothing else.

"अतो वेदप्रमाणक: श्रेय:साधनं धर्म्म इत्युक्तम्।"

अत: पूर्व्वोक्तात् कारणसमूहात् हेतो: वेदप्रमाणक: वेदा: प्रमाणं बोधकं मानलक्षणो यस्य स वेदप्रमाणक: अर्थात् वेदे यो विहित: स धर्म्म:। ननु श्येनयागं कृत्वा शत्रुं हन्यात् इति वेदविधिरप्यस्ति स किं धर्म्म: ? नैवं यो वेदोक्त: तथा श्रेय:साधनं मङ्गलकर: लोकस्य सधर्म्म: श्येनयागेन मनुष्यहननं न श्रेयस्करं किन्तु अनिष्टकरं तस्मात् वेदविहितमपि तत् धर्म्मो न भवति किन्तु अधर्म्मो भवतीत्यर्थ:।

Therefore *dharma* is intended to be defined as follows:— That which is authorised by the Vedas, and is conducive to the welfare (of mankind) is *dharma.*

"एवम्बिधो यो धर्म्म स्तं निबोधत।"

एवम्बिध: एवं विधा प्रकार: परिचय: लक्षणं यस्य स: पूर्व्वोक्तलक्षणविशिष्ट इत्यर्थ: यो धर्म्म: ( नतु वेदवाह्ययवनादिरचितशास्त्रोक्त: स्वकीयबुद्ध्या उद्भावितो वा धर्म्म: ) तं वेदोक्तं धर्म्मं यज्ञ-संस्कार-दानादिरूपं निबोधत जानीत यूयम्। Know from me *dharma* (a system of duty) as defined above.

Those who are not controlled by the Vedas, have also a sort of *dharma* not sanctioned by the Vedas, such *dharma* is not discussed in this book.

"उक्तार्थसंग्रहश्लोका:"।

उक्तानां प्रतिपादितानां अर्थानां व्याख्यानानां संग्रह: समाहार: एकत्र स्थापनं येषु ते उक्तार्थसंग्रहा:। उक्तार्थसंग्रहाश्चैते श्लोकाश्च ते उक्तार्थसंग्रहश्लोका:। Couplets-

containing a summary of the foregoing discussions (are composed and put down below).

"वेदविद्भिः ज्ञात इति प्रयुञ्जानो विशेषणम्। वेदादेव परिज्ञातो धर्म्म इत्युक्तवान् मनुः।"

मनुः वेदविद्भिः अर्थात् विद्वद्भिः ज्ञातः अवगतः यः स धर्म्म इति धर्म्मशब्दस्य विशेषणं प्रयुञ्जानः योजयन् यस्मात् योजितवान् तस्मात् हेतोरित्यर्थः वेदात् एव नतु अन्यस्मात् यो ज्ञातः स धर्म्म इति उक्तवान्।

"हृदयेनाभिमुख्येन ज्ञात इत्यपि निर्द्दिशन्। श्रेयःसाधनमित्याह तत्र ह्यभिमुखं मनः।"

मनुः हृदयेन आभिमुख्येन ज्ञातः (अर्थात् हृदयेन अभ्यनुज्ञातः) इति निर्द्दिशन् श्लोके कथयन् यः श्रेयःसाधनम् हितसाधकः स धर्म्म इति आह धर्म्मलक्षणमाह। हि यस्मात् तत्र तस्मिन् धर्म्मे मनः धार्म्मिकाणां इत्यर्थः अभिमुखं लोलं भवति।

"वेदप्रमाणकः श्रेयःसाधनं धर्म्म इत्यत। मनूक्तमेव मुनयः प्रणिन्युर्धर्म्मलक्षणम्"

सिद्धान्तमाह वेदप्रमाणक इति। तस्मात् वेदप्रमाणकः वेदमूलकः श्रेयःसाधनं ऐहिकामुष्मिककल्याणकरः च यः स धर्म्म इति मुनयः अन्ये मुनयः व्यासवशिष्ठादयः यत् धर्म्मस्य लक्षणं प्रणिन्युः प्रणीतवन्तः संगृहीतवन्तः तत् लक्षणं मनूक्तं धर्म्मलक्षणमेव। अर्थात् अन्ये मुनयः मनूक्तं धर्म्मलक्षणमेव स्वकीयसंहितासु प्रणीतवन्तः। अन्ये मुनयः मनूक्तं धर्म्मलक्षणं मनूक्तधर्म्मस्य सारं च स्वकीयसंहितासु उपनिबद्धवन्तः।

"अतएव हारीतः अथातो धर्म्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्म्मः। श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च।"

अतः अस्मात् एव हेतोः मनूक्तधर्म्मलक्षणानुसरणपरत्वात् इत्यर्थः। हारीतो मुनिः आह इति शेषः। किमाह तदुच्यते अथ शुभमस्तु इत्यर्थः अथ शब्दस्य मङ्गलार्थत्वात् ओंकारश्चाथशब्दश्च माङ्गलिकौ इति वचनात् अतः अतःपरं धर्म्मं व्याख्यास्यामः निरूपयिष्यामः। एकवचनार्थे बहुवचनप्रयोगः। व्याख्यानञ्च यथा श्रुतिप्रमाणकः वेदमूलकः यः स धर्म्मः। श्रुतेः द्वैविध्यं आह वैदिकी वेदोक्ता तथा तान्त्रिकी तन्त्रोक्ता च। तन्त्राणामाथर्वणिकत्वम् स्वामिपादप्रमुखै र्व्याख्यातम्। तन्त्रस्य शास्त्रस्य न स्वातन्त्र्येण प्रामाण्यं यावद्वेदमूलकत्वं तावत्प्रामाण्यं वेदाधीनत्वात्। उक्तञ्च भगवता भाष्यकारेण कथं तन्त्रस्य प्रामाण्यं शिवेन उक्तत्वात्। कथं शिवस्य प्रामाण्यं तन्त्रे तस्य प्रामाण्यस्थापनात् तस्मात् अन्योन्याश्रयमेतत् अप्रमाणम्। भवति च प्रामाण्यं यावत् वेदमूलकत्वं। वेदस्य स्वतः प्रामाण्यात् शिवादिवत् पुरुषविशेषेण अरचितत्वात् वेदाधीनत्वेन सर्व्वस्य प्रामाण्यम्।

अत: हारीतोऽपि मनु मनुसृतवान्। तथा व्यासश्चेति व्यासोक्तपुराणे धर्म्म-लक्षणमाह—

Thus following Manu, the sage Harit says, "Blessings to all, now I shall explain *dharma. Dharma* is that which is authorised by *Sruti. Sruti* is divided into two classes what is recited in the Vedas, and what recited in the Tantras."

"भविष्यपुराणे। धर्म्म: श्रेय: समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्। स तु पञ्चविध: प्रोक्तो वेदमूल: सनातन:। अस्य सम्यगनुष्ठानात् स्वर्गो मोक्षश्च जायते। इहलोके सुखैश्वर्य्यं मतुलञ्च खगाधिप। श्रेय: श्रेय: साधनमित्यर्थ:।"

भविष्यपुराणे व्यासोक्ते भविष्याख्यपुराणेऽपि तथैव मनो रनुसरणं दृश्यते इत्यर्थ:। धर्म्म: श्रेय: श्रेय:साधनम् इति कुल्लूकस्य योजनायुक्तैव। श्रेय: श्रेय:साधनं यत् उद्दिष्टं लक्षितम् तत् धर्म्म इत्यर्थ:। श्रेय: किं? यत् अभ्युदयलक्षणम् अभ्युदयेन समृद्धिसमृद्धेन लक्ष्यते बुध्यते तत् श्रेय:। ऐहिकाभ्युदय: भोगादि:। पारलौकिकाभ्युदय: स्वर्ग: मोक्षश्च। भाष्यकारस्तु अभ्युदयशब्देन भोगं स्वर्गञ्चाह ; मोक्षं नि:श्रेयसशब्देन आह। स धर्म्म: वेदमूल: वेदप्रमाणक: सनातन: नित्य: पञ्चविध: पञ्चप्रकार: भवति। धर्म्मस्य पञ्चविधत्वं भविष्यपुराणोक्तं द्वितीयाध्यायीयपञ्चविंशश्लोकस्य कुल्लूकटीकायां द्रष्टव्यम्। अस्य धर्म्मस्य वेदोक्तस्य सम्यक् अनुष्ठानात् आचरणात् स्वर्गो देवलोक-प्राप्ति: मोक्षश्च मुक्तिश्च जायते मरणात् परम्। जीवितकालेऽपि इह अस्मिन् मनुष्य-लोके अतुलं सुखैश्वर्य्यम् सुखञ्च ऐश्वर्य्यं सम्पत् च एकवद्भाव: जायते। हे खगाधिप खगानां अधिप गरुड़ त्वं शृणु। भविष्यपुराणोक्तवचनस्थितस्य श्रेय: शब्दस्य अर्थं माह श्रेय:साधनमित्यर्थ:। धर्म्म: साक्षात् श्रेय: न भवति किन्तु श्रेयस: कारणं साधनं भवति। धर्म्मेण श्रेय: प्राप्यते नतु धर्म्म: एव श्रेय:। तस्मात् धर्म्म: श्रेय: इत्यत्र श्रेय:शब्देन श्रेय:साधनम् इत्येव बुध्यते इति कुल्लूकाभिप्राय:।

We have in the Bhabishyapurana also "Dharma is that which is conducive to welfare. Welfare is prosperity. Such dharma which has its source in the Vedas, and which is ever-lasting, is divided into five classes. By the thorough practice of it, one may derive celestial abode and final emancipation (after death). And even in this life one may attain incomparable happiness and wealth. O, king of the birds, hear from me. The word welfare (श्रेय:) in the couplet of Bhabishya-

purana quoted above implies "means to welfare" (श्रेयः साधनम्) (as श्रेयः and धर्म्म are two different things, one cannot be the other.)

"जैमिनिरपि इदमेव धर्म्मलक्षणमसूत्रयत् चोदनालक्षणोऽर्थो धर्म्म इति।"

न केवलं हारीतो व्यासश्च मनु मनुमतवान् धर्म्मसूत्रस्य पूर्व्वमीमांसाख्यस्य दर्शनस्य वक्ता जैमिनिरपि इदमेव मनूक्तमेव धर्म्मलक्षणं असूत्रयत् सूत्राकारेण उपनिबद्धवान्। सूत्रप्रकारमाह चोदनालक्षणोऽर्थो धर्म्म इति अभिनयः। अस्य सूत्रस्य व्याख्या कुल्लूकेनेव कृता अत तामेव व्याख्यास्यामि।

Jaimini also put this very definition in the form of an aphorism. His aphorism is "chodanalakshanartho dharma". (explanation follows).

"उभयचोदनया लक्ष्यतेऽर्थः श्रेयःसाधनं ज्योतिष्टोमादिः"।

सूत्रं व्याचष्टे (explains) उभयेति। चोदनालक्षणोऽर्थः धर्म्म इति हि जैमिनिसूत्रम्। तस्य सूत्रस्य व्याख्यानं कुल्लूकभट्टः करोति। चोदनालक्षणः चोदना प्रेरणा प्रवर्त्तना इति यावत्। चोदनया लक्ष्यते प्राप्यते इति चोदनालक्षणः कृत्यल्युटो बहुलमिति कर्म्मणि ल्युट्। यजेत यजनं कुर्य्यात् इत्यादिरूपं वाक्यं चोदनामूलकं प्रवर्त्तनामूलकं। तथाभूतं वाक्यं कर्म्मणि यज्ञादिरूपे प्रेरयति प्रवर्त्तयति चोदयति वा। तथाभूतेन वाक्येन लक्ष्यते प्रदर्श्यते अर्थः हितकरः ज्योतिष्टोमादिनामकयज्ञादिः। धर्म्मः। श्रेयःसाधनं ज्योतिष्टोमादिना हि श्रेयः ऐहिकामुष्मिककल्याणं साध्यते। वेदोक्तप्रवर्त्तनावाक्येन यत् कर्म्म कर्त्तव्यत्वेन ज्ञातं यच्च श्रेयस्करं तत् धर्म्मः। चोदना हि उभयविधा एवं कुर्य्यात् इति विधिरूपा एवं न कुर्य्यात् इति निषेधरूपा च। ज्ञानविषया कर्म्मविषया च इति द्वैविध्यञ्च गम्यते। तस्मात् उक्तं कुल्लूकेन उभयचोदनया लक्ष्यते इति। सविस्तरव्याख्यानन्तु शाबरे द्रष्टव्यम्।

अयं भावः वेदोक्तप्रवर्त्तनावाक्येन प्राप्तं ज्योतिष्टोमादिरूपं श्रेयस्करं कर्म्म एव धर्म्मः इति जैमिनिसूत्रार्थः। तस्मात् जैमिनिरपि मनूक्तधर्म्मलक्षणं स्वीचकार।

Duties, such as the performance of sacrifices like Jyotishtom and others conducive to the welfare of man and known from *Vedik* injunctions both affirmative and negative, are called *dharma.*

"अनेन चोदनालक्षणो अनर्थोऽधर्म्म इति अधर्म्मलक्षणं सूचितम्। अनर्थः प्रत्यवायसाधनं श्येनादिः।"

अनेन पूर्व्वोक्तप्रकारेण चोदनालक्षणे वेदोक्तप्रवर्त्तनारूपवाक्यात् लक्षिते प्राप्ते कर्म्मसमूहे अनर्थः अहितकरः यः सः अधर्म्मः : अनर्थशब्दं व्याचष्टे प्रत्यवायसाधनं पापजनकं श्येनादिः श्येनयागादिः। वेदेन उक्ते सत्यपि यत् कर्म्म अनिष्टजनकं तत् अधर्म्मः, वेदेनोक्तं यत् कर्म्म श्रेयस्करं पुण्यजनकं तत् धर्म्मः। श्येनाख्यं यज्ञं कृत्वा शत्रुं नाशयेत् इति वेदे उक्तम्। श्येनयागस्य उपदेशोऽपि वेदे एव प्राप्तः। तथापि स अधर्म्मः अनर्थकरत्वात् प्रत्यवायजनकत्वात् नरकफलत्वात्।

From this we get a definition of a *dharma.* Duty which follows from the Vedik injunction, but is productive of injurious consequences, is not a dharma. From it sin arises, such as the performance of Syena sacrifice (for the destruction of enemies).

"तत्र वेदप्रमाणकं श्रेयःसाधनं ज्योतिष्टोमादि धर्म्म इति सूत्रार्थः।"

Therefore the meaning of the sutra is "Duties which are authorised by the Vedas, and are conducive to good such as the performance of Jyotishtom and others, is dharma."

The Vedik injunctions are to be interpreted strictly according to the rules laid down by Jaimini. The collection of these rules is called the Purba Mimansa Philosophy of Jaimini. It is therefore necessary to show that Jaimini is merely a follower of Manu in the light of interpretation put upon by Harit, Vyas, Vashishtha &c. &c. Jaimini was a disciple of Vyas. He became proficient in the Sama Veda.

Thus in the Vishnupurana :—

अथ शिष्यान् स जग्राह चतुरो वेदपारगान्। ऋग्वेदश्रावकः पैलं जग्राह स महामुनिः। वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत्। जैमिनिं सामवेदस्य तथैवाथर्व्ववेदवित् सुमन्तुस्तस्य शिष्योऽभूत् वेदव्यासस्य धीमतः इति।

कर्म्ममीमांसकस्य जैमिनेर्वाक्येन मनुवाक्यस्य विरोधे सर्व्वं विध्वस्तं भवेत् मनुविरुद्धस्य वाक्यस्य अप्रामाण्यात् जैमिनिना च वैदिकानां कर्म्मणां अनुशिष्टत्वात् व्याख्यातत्वात्। तस्मात् मनुवाक्येन सह जैमिनिवाक्यस्य एकवाक्यतास्थापनार्थं कुल्लूकस्य परिश्रमः।

"कृत्यादश्रोऽपि वेदमूलत्वेनैव धर्म्मे प्रमाणमिति दर्शयिष्यामः।"

स्मृतिः मन्वादीनां धर्म्मविषयकाणि वाक्यानि आदि येषां ते स्मृत्यादयः स्मृति पुराणेतिहासादयः अपि वेदमूलत्वेनैव वेदाः मूलं येषां ते तथात्वेन एव धर्म्मे धर्म्मविषये प्रमाणं भवन्ति इति तत्र तत्र दर्शयिष्यामः। अयं भावः स्मृत्यादीनां स्वातन्त्र्येण न प्रामाण्यम्। किन्तु यतस्ते वेदमूलका अतस्तेषां प्रामाण्यम्। वेदा एव मूलं प्रमाणं तदाश्रयत्वे सति अन्येषां शास्त्राणां प्रामाण्यम्।

We shall show that treatises like Smriti ; Purana &. &., are authorities on matters touching dharma only because they are based on the Vedas.

Now the commentator after explaining the text fully, criticises the explanation as furnished by Govindaraj and Medhatithi.

"गोविन्दराजस्तु हृदयेनाभ्यनुज्ञात इति अन्तःकरणविचिकित्साशून्य इति व्याख्यातवान्। तन्मते वेदविद्भि रनुष्ठितः संशयरहितश्च धर्म्म इति धर्म्मलक्षणं स्यात्।"

गोविन्दराजनामा कश्चित् टीकाकृत् हृदयेनाभ्यनुज्ञात इत्यस्य अंशस्य अन्तःकरणविचिकित्साशून्य आन्तरिकसन्देहरहित इति व्याख्यातवान् तस्य टीकायाम्। अर्थात् हृदयेनाभ्यनुज्ञातः अन्तःकरणविचिकित्साशून्य अर्थात् सन्देहशून्य इति गोविन्दराजस्य व्याख्यानम्। तस्मात् तन्मते गोविन्दराजस्य मते वेदविद्भिः अनुष्ठितः संशयरहितश्च धर्म्म इति धर्म्मस्य लक्षणं स्यात्। तच्च दोषावहम्। अयं भावः वेदज्ञैर्यत् अनुष्ठितं संशयशून्यञ्च तच्चेत् धर्म्मो भवेत तदा सर्व्वं विध्वस्तं भवेत्। वेदज्ञो हि जनः कामक्रोधादिभिः वशीभूतः वेदोक्तं वेदविरुद्धं च आचरति तस्मात् तदाचरणं धर्म्मप्रमाणं न भवति। संशयशून्यत्वमपि न लक्षणम् लोकानां भिन्नरुचित्वात् वेदविरुद्धवादी संशयरहितः सन् एव गोमांसाद्यभक्ष्यं भक्षयति। यदि वेदविरुद्धे न वेदो लक्ष्यते तदा अस्मद्व्याख्यानमेव गृह्यतामिति कुल्लूकाशयः। किञ्च वेदविद्भिः ज्योतिष्टोमादिः क्रियते तेन स्वर्गादिलाभः स्यान्नवेति संशयं वेद एव निराकर्त्तुं शक्तः नान्यः अप्रत्यक्षत्वात् कर्म्मफलानाम्। तस्मात् वेद एव धर्म्मे प्रमाणम्।

"Assented to by the heart" was explained by Govindaraja as "without doubt." According to him the definition of dharma therefore amounts to this. "That which is performed by the learned in the Vedas, and about which there is no doubt or misgiving in the mind, is dharma."

"एतच्च दृष्टार्थग्रामगमनादिसाधारणं धर्म्मलक्षणं विवक्षया न सङ्गच्छते।"

एतच्च धर्म्मलक्षणं गोविन्दराजोक्तं दृष्टार्थं प्रत्यक्षफलकं यत् ग्रामगमनादि कर्म्म तेन साधारणं समानं धर्म्मलक्षणं स्यात्। ग्रामे गमनं ग्रामगमनं तद्धि दृष्टार्थं दृष्टः अर्थः फलं यस्य तत्। प्रत्यक्षफलककर्म्मवत् धर्म्मो भवति तच्च न पण्डितानां मनोज्ञम्।

"मेधातिथिस्तु हृदयेनाभ्यनुज्ञात इति यत चित्तं प्रवर्त्तयतीति व्याख्याय अथवा हृदयं वेदः सम्यगधीतो भावनादिरूपेण कृतहृदयस्थितिर्हृदयमुच्यते इत्युक्तवान्।"

मेधातिथिर्नाम टीकाकृत् तु हृदयेनाभ्यनुज्ञात इति इत्यस्य यत चित्तं प्रवर्त्तयतीति यत हृदयं चित्तं प्रवर्त्तयति प्रेरयतीति व्याख्याय पुनरपि उक्तवान्। किं? हृदयं वेदः अर्थात् हृदयेनाभ्यनुज्ञात इत्यत्र हृदयशब्दस्य वेदः अर्थः। व्याख्याप्रकारं कथयति हृदयं वेदः, कथं हृदयशब्दस्य वेदः अर्थो भवितुमर्हति मेधातिथि राह, स वेदः अधीतः पठितः सन् भावनादिरूपेण संस्काररूपेण कृतहृदयस्थितिः कृता हृदये स्थिति येन स अर्थात् हृदये स्थित्वा हृदयं उच्यते, वेद एव हृदयमधिकृत्य हृदयाकारेण तिष्ठति अतो वेदस्य हृदयं वेद एव इत्यर्थः। एतच्च असमनोज्ञं व्याख्यानम्। वेदो हि कदापि हृदयशब्देन नोच्यते लक्षणया तद्रूपार्थविधानमपि निष्प्रयोजनं विद्वद्भिरिति शब्दस्य एव वेदश्च इति अर्थः वेदशब्देन वेदस्यैव प्रमाणत्वं आयाति यथा व्याख्यातं कुल्लूकभट्टः। तस्मात् कुल्लूकव्याख्यानमेव सम्यक्।

इति कृष्णपदाम्भोजं भजता मनुजीविना।
क्रियते वालबोधार्थां कुल्लूकार्थविबोधिनी॥

Medhatithi by way of explaining "assented to by the heart" says "that which the heart permits to do"; he adds "or the heart is the Veda; because the Veda being well read, takes its seat in the heart in the form of impression; hence heart means the Veda. This explanation is hardly tenable, says Kulluka.

ELLUCIDATION.—अस्य श्लोकस्य व्याख्यारम्भे उक्तं हि कुल्लूकभट्टः:—प्रकृष्टपरमात्मज्ञानरूप धर्म्मज्ञानाय जगत्कारणं।

ब्रह्म प्रतिपाद्य इति। तत्र वयं धर्म्मो हि द्विविधः धर्म्मः परमधर्म्मश्च इति उक्तवन्तः। तत्र विषये आचार्य्याणां मतं संक्षेपेण विव्रियते। कुल्लूकभट्टा हि शाङ्करभाष्यमतानुसारेणैव प्रायशः परमात्मविषयकसिद्धान्तं उपनिबवन्धुः। तस्मात् प्राधान्येन धर्म्मविषये भगवच्छङ्कराचार्य्यस्य मतं भाष्यानुरोधेन कथ्यते। तेन सर्व्वं विशदं भविष्यतीति। उक्तं हि भाष्ये—

"स भगवान् सृष्ट्वेदं जगत् तस्य स्थितिं चिकीर्षुर्मरीच्यादीन् अग्रे सृष्ट्वा प्रजापतीन्, प्रवृत्तिलक्षणं धर्म्मं ग्राहयामास वेदोक्तं; ततोऽन्यांश्च सनकसनन्दादीन् उत्पाद्य निवृत्तिधर्म्मं ज्ञानवैराग्यलक्षणं ग्राहयामास।"

अर्थात् भगवान् परमेश्वरः नारायणः इदं जगत् सृष्ट्वा सृष्टस्य जगतः पालनं कर्त्तुमिच्छुः अग्रे मरीचिं अत्रिं अङ्गिरसं पुलस्त्यं पुलहं क्रतुं प्रचेतसं वशिष्ठं नारदं भृगुं च प्रजापतीन् स्वायम्भुवमनुरूपेण उत्पाद्य स्वायम्भुवमनुरूपेण वेदोक्तं प्रवृत्तिलक्षणं चोदनालक्षणं प्रवर्त्तनालक्षणं वा धर्म्मं ग्राहयामास। तेषां दशानां प्रजापतीनां मध्ये भृगुर्नाम प्रजापतिः मनोरादेशेन अन्येभ्यो मुनिभ्यः पश्चात् उक्तवान् यं धर्म्मं तत् मनुशास्त्रं कथयन्ति। किन्तु सर्व्वे मनुष्या न प्रवृत्तियुक्ताः केचित् वैराग्ययुक्ताः च सन्त्येव पूर्व्वोक्तैः भृग्वादिभिः तेषां अनुशासनं नस्यात्। ततः विषयेषु अनासक्तान् वैराग्यशीलान् जनान् मोक्षमार्गे यथाशास्त्रं स्थापयितुं सनकसनन्द-सनातनादि नामकान् चतुरो मानसान् महावैराग्यशालिनः लोकगुरून् उत्पाद्य तान् निवृत्तिधर्म्मं ज्ञानवैराग्ययुक्तं ग्राहयामास।" भृग्वादिभिर्गृहीतो धर्म्मः। सनकादिभिः गृहीतः परमधर्म्मः। द्वावेव धर्म्मौ वेदोक्तौ। उक्तञ्च भगवता भाष्यकारेण—

"द्विविधो हि वेदोक्तो धर्म्मः। प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च तत्र एको जगतः स्थितिकारणं प्राणिनां साक्षात् अभ्युदयनिःश्रेयसहेतु यः स धर्म्मः ब्राह्मणाद्यैः वर्णिभिः आश्रमिभिः...अनुष्ठीयमानः दीर्घेण कालेन अधर्म्मेण अभिभूयमाने धर्म्मे...जगतः स्थितिं परिपिपालयिषुः स आदिकर्त्ता नारायणाख्यो विष्णुः...रक्षणार्थं देवक्यां वसुदेवात् अंशेन कृष्णः किल सम्बभूव। इति।

अर्थात् वेदोक्तः धर्म्मः द्विविधः प्रवर्त्तनामयः धर्म्मरूपः निवर्त्तनामयः परमधर्म्मरूपश्च। तयोर्मध्ये एकः यो धर्म्मः सः प्राणिनां ऐहिकपारत्रिकश्रेयस्करः तस्मात् व्यापी। अन्यः परमधर्म्मस्तु पारलौकिकमोक्षप्रदमात्रम्। स हि धर्म्मः ब्राह्मण क्षत्रिय वैश्यशूद्रैरनुष्ठीयते ब्रह्मचारि गृहस्थवानप्रस्थ-भिक्षुकैश्च।

एवं सति बहुकाले अतीते सति रागद्वेषातिशयेन अधर्म्मेण धर्म्मः पराभूतः अभवत्। अस्मिन् एव काले द्वापरयुगस्य अन्ते पुनरपि तं धर्म्मं स्थापयितुं जगतां सृष्टिस्थितिप्रलयकर्त्ता जगतां आदिकर्त्ता यस्मात् परतरः कर्त्ता कोऽपि नास्ति न बभूव न भविष्यति स नारायणसंज्ञः विष्णुः जगतां रक्षणार्थं यदुवंशीय-वसुदेवात् देवक्यां तस्य पत्न्यां अंशेन मनुष्याकारेण इत्यर्थः (इति आनन्दगिरिः स्वामी च) कृष्णः कृष्णाख्यः जगतां परमगुरुः सम्बभूव जातः किल सर्व्वेषु शास्त्रेषु प्रसिद्धत्वात्। नहि त्रिभुवनगुरुं विना ईदृशं नित्यशुद्धबुद्धमुक्तम् अपापविद्धं षडैश्वर्य्यमयं जन्म कस्यापि सम्भवतीति आनन्दगिरिप्रभृतयः।

एतदेव भगवच्छङ्कराचार्य्यस्य मतम् भाष्ये विस्पष्टं प्रतिपादितमिति।

*Q.* Who was the Manu to whom the authorship of Manudharmashastra is attributed according to the orthodox view?

*Ans.* मनवो हि चतुर्द्दश। तेषां मध्ये स्वायम्भुवाख्यो स आदिमनुः स एव इदं धर्म्मशास्त्रं ब्रह्मणः प्राप्तवान्।

इदं शास्त्रन्तु कृत्वाऽसौ मामेव स्वयमादितः। विधिवद्ग्राहयामास इति मनुः।

स्वायम्भुवस्तु मनुर्ब्रह्मणः सकाशात् प्राप्य तत्प्रतिपादकं इमं ग्रन्थं कृतवान् कृत्वा च स्वपुत्रान् भृगुमरीच्यादीन् ग्राहयामास। भृगुस्तु मुनिभ्य उवाच।

परमात्मनः ब्रह्मा ब्रह्मणः विराट् विराजो मनुः। परमात्मानं आरभ्य मनुमूर्त्ति-पर्य्यन्तं सर्व्वे परमात्म-ब्रह्म-विराट्-मनवः एकस्यैव परमेश्वरस्य मूर्त्तिभेदाः। यथोक्तं कुल्लूकभट्टैः एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिं इति परमात्मन एव संसारस्थितये सार्व्वज्ञैश्वर्य्यादिसम्पन्न मनुरूपेण प्रादुर्भावात् इति च तस्मात् जगत्पालनार्थं येनावतारेण स्वयं परमेश्वरः आदौ मरीचिभृगुप्रभृतिभ्यः धर्म्मं कथितवान् स एव षडैश्वर्य्यशाली अवतारः मनुरिदं शास्त्रं कृतवान्। अन्ये त्रयोदशसंख्यका मनवस्तु शक्तिशालिनो जीवाः।

शातातप-वशिष्ठ-दक्षादयः प्रजापतयः मुनयश्च मनूक्तधर्म्मशास्त्रस्य व्याख्यानाय पृथक् पृथक् संहितां कृतवन्तः तस्मादुक्तं मन्वर्थविपरीता या सा स्मृतिर्नैव शस्यते इति। मनूक्तशास्त्रस्यमूलरूपत्वात् अन्येषां शास्त्राणां तस्य व्याख्यारूपत्वात् इति।

*Q.* Who are the other thirteen Manus?

*Ans.* स्वारोचिष औत्तमिश्च तामसो रैवत स्तथा। चाक्षुषश्च महातेजा विवस्वत् सुत एव च। मनुः। स्वायम्भुवेन सह एवं सप्त मनवः। वैवस्वतमनो वैमातृको भ्राता अष्टमः सावर्णो मनुः। नवमो दक्षसावर्णो भैव्य भविता मनुः। दशमो ब्रह्मसावर्णि र्भविष्यति मुने मनुः एकादशश्च भविता धर्म्मसावर्णिको मनुः। रुद्रपुत्रस्तु सावर्णो भविता द्वादशो मनुः। त्रयोदशो रौच्यनामा भविष्यति मुने मनुः। भौत्य। श्चतुर्द्दशश्चात्र मैत्रेय भविता मनुः इति विष्णुपुराणे।

भागवते तु त्रयोदशो मनु र्देवसावर्णिरित्युक्तम्। रौच्य एव देवसावर्णिः। भौत्याख्य श्चतुर्द्दशो मनु र्भागवते इन्द्रसावर्णिरिति कथ्यते।

एतेषाञ्च पुराणोक्तवंशादिविवरणं विस्तरभयात् न वर्णितमिति।

MEANING OF WORDS.—विद्वद्भिः means वेदविद्भिः। सद्भिः means धार्म्मिकैः। धार्म्मिक means one who practises धर्म्मकर्म्म। हृदयेनाभ्यनुज्ञातः=श्रेयःसाधनम्। *Q.* Show how Kulluka evolves this meaning. How does Govindaraj explain it? How does मेधातिथि explain हृदयम्? What is your own view of his explanation? How has धर्म्म been defined? *Ans.*—वेदप्रमाणकः श्रेयःसाधनं धर्म्मः।

*Q.* Explain this definition. How does Jaimini define धर्म्म? Quote his definition, and explain it? Explain the definition as given by Harit and Vyas. Criticise the definition of Govindaraja as stated by Kulluka. Explain in your own Sanskrit "प्रकृष्टपरमात्मज्ञानरूपधर्म्मज्ञानाय जगत्कारणं ब्रह्मप्रतिपाद्य संस्कारादिरूपं धर्म्मं प्रतिपिपादयिषुः धर्म्मसामान्यलक्षणं प्रथममाह". Reproduce the couplets which summarise Kulluka's discussions leading to the definition of धर्म्म। Explain the sloka in the manner of Mallinath. वेदविद्भिः ज्ञात इति प्रयुञ्जानो विशेषणम्। वेदादेव परिज्ञातो धर्म्मं इत्युक्तवान् मनुः। Deduce this conclusion from the text as done by Kulluka. What is परमधर्म्मः? How is it related to धर्म्मः? How does धर्म्म help परमधर्म्म? How मनु explains धर्म्म? Where is परमधर्म्म demonstrated by मनु? How is it demonstrated? How Manu defines Brahma? What is the object of परमधर्म्म? Give the meaning of the sloka in English.

GRAMMAR. 1. विद्वद्भिः विद् + शतृ तत्स्थाने वसुः। विद्वान्। 2. सेवितः—सेव + क्तः कर्म्मणि। सेव्यते स्मिषेवे असेविष्ट। 3. सद्भिः—अस् + शतृ सत्। कर्त्तरि तृतीया। 4. नित्यम्—नि + त्यप्। सततम्। क्रियाविशेषणम्। 5. अद्वेषरागिभिः—द्वेषश्च रागश्च द्वेषरागौ द्वन्द्वः। द्वेषरागौ विद्येते एषां द्वेषरागिणः। द्वेषरागशब्दात् अस्त्यर्थे इनिः। न द्वेषरागिणः अद्वेषरागिणः नञ् समासः। तैः। रञ्ज + घञ् रागः। रञ्जेर्भावकरणयोरिति करणे घञ् विधानात् नकारलोपः। रज्यते अनेनेति रागः। द्विष + घञ् हलश्चेति घञ। 6. हृदयेन—करणे तृतीया। 7. अभ्यनुज्ञातः—अभि—अनु—ज्ञा + क्तः कर्म्मणि। जानाति अज्ञासीत्। 8. धर्म्मः—धरतीति धर्म्म इति श्रुतार्थो मन्। अस्तीति क्रिया। 9. तम्—निबोधत इत्यस्य कर्म्म। 10. निबोधत—नि—बुध (भ्वादि) लोट् त। बोधति।

*Change of voice*—...सेवितेन...अभ्यनुज्ञातेन येन भूयते स निबुध्यताम्।१।

**कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्म्मयोगश्च वैदिकः॥ २॥**

PROSE—कामात्मता प्रशस्ता न (भवति) इह अकामता च नास्ति एव, हि वेदाधिगमः वैदिकः कर्म्मयोगश्च काम्यः॥ २॥

EXPLANATION.—वेदविहितानि श्रेयःसाधनानि कर्म्माणि धर्म्म इति धर्म्मलक्षणे उक्तो काम्यस्य वेदविहितस्य कर्म्मणोऽपि धर्म्मत्वात् काम्यकर्म्मरूपे धर्म्मे मत्यासक्तिर्माभूदिति वक्तुं काम्यं कर्म्म निन्दति कामात्मतेति। कामात्मता कामः फलकामना आत्मा स्वभावो यस्य स कामात्मा कर्म्मफलाभिलाषी तस्य भावः कामात्मता फलाभिलाषशीलत्वं न प्रशस्ता न उत्कृष्टा निन्दनीया इति भावः। फलकामनया कर्म्मणि कृते सति फलभोगार्थं पुनर्जन्म भवति ततश्च पुनर्जन्म इति फलानां बन्धकत्वम्। भवतु काम्यं कर्म्म त्याज्यं बन्धकत्वात् नित्यनैमित्तिकानि तु कर्म्माणि कर्त्तव्यानि न वा इति प्रश्ने सति वक्तव्यं नित्यनैमित्तिकानि कर्त्तव्यानि एव तेषां फलाभावात्, अकरणे च प्रत्यवायसमुत्पत्तेः। काम्ये कर्म्मणि कामात्मता निन्दनीया तथापि इहसंसारे अकामता कामनाशून्यता इच्छाशून्यता नास्ति हि यस्मात् वेदाधिगमः वेदस्य अधिगमः स्वीकारः ग्रहणमित्यर्थः उपनयनपूर्व्वकवेदग्रहणम् तथा वैदिकः वेदोक्तः कर्म्मयोगः कर्म्मभिः योगः सम्बन्धः कर्म्मयोगः कर्म्मसम्बन्धश्च काम्यः कामनाविषयः इच्छाविषय एव। नहि इच्छां विना कोऽपि कश्चित् अपि कर्म्मणि प्रवृत्तो भवति। अभिलाषमात्रमेव न निषिध्यते फलाभिलाष एव निषिध्यते। नित्यनैमित्तिकेषु फलाभिलाषकारणं नास्ति तेषां फलाभावात्। तस्मात् ज्ञानस्य सहकारितया तानि कर्त्तव्यानि॥ २॥

KULLUKA—कामात्मतेति। यथाभिलाषशीलत्वं पुरुषस्य कामात्मता सा न प्रशस्ता बन्धहेतुत्वात् स्वर्गादिफलाभिलाषेण काम्यानि कर्म्माण्यनुष्ठीयमानानि पुनर्जन्मनो कारणं भवन्ति नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षाय कल्पन्ते न पुनरिच्छामात्रमनेन निषिध्यते। तदाह न चैवेहास्त्यकामतेति। यतो वेदस्वीकरणं वैदिकसकलधर्म्मसम्बन्धश्चेच्छाविषय एव॥ २॥

KULLUKA EXPLAINED—"फलाभिलाषशीलत्वं पुरुषस्य कामात्मता'।

Kulluka explains the word कामात्मता in the text as पुरुषस्य फलाभिलाषशीलत्वम् *i. e.* habit of performing action from a desire for rewards. पुरुषस्य धार्म्मिकस्य जनस्य फलाभिलाषशीलत्वं फलस्य स्वकृतकर्म्मणां फलस्य अभिलाषः कामना फलाभिलाषः स एव शील स्वभावो यस्य स फलाभिलाषशीलः तस्य भावः फलाभिलाषशीलत्वम्। अहं अस्य फलस्य लाभाय इदं कर्म्म करोमि इति मनसि निधाय यत् कर्म्मकरणं तदेव फलाभिलाषशीलत्वं तदेव कामात्मता इत्युक्तं मनुना। स्वर्गकामो यजेत अर्थात् यः स्वर्गं वाञ्छति स इमं यज्ञं कुर्य्यात्। तथा पुत्रकामो यजेत यः पुत्राकाङ्क्षी स यज्ञं कुर्य्यात्। इत्यादिवेदवाक्यानि श्रुत्वा यो जनः सतत् स्वर्गपुत्रादिफलकामनया यज्ञादिकर्म्माणि करोति स कामात्मा फलाभिसन्धिपूर्व्वककर्म्मकरणात्। तस्मात् उक्तं कुल्लूकेन फलाभिलाषशीलत्वं कामात्मता।

"सा न प्रशस्ता बन्धहेतुत्वात्"।

सा पूर्व्वं या व्याख्याता फलाभिलाषशीलताद्रूपा कामात्मता (Desire for rewards) न प्रशस्ता न प्रशस्ता (not laudable). कथं न प्रशस्ता ? कारणमाह: कुल्लूकभट्टः (Kulluka assigns reasons as follows) :—बन्धहेतुत्वात् (Because it becomes the cause of bondage) बन्धस्य संसारबन्धनस्य हेतुः कारणं बन्धहेतुः तस्य भावः बन्धहेतुत्वम् तस्मात् हेतोः बन्धहेतुत्वात्।

"स्वर्गादिफलाभिलाषेण काम्यानि कर्म्माणि अनुष्ठीयमानानि पुनर्जन्मने कारणं भवन्ति।"

केन प्रकारेण कामात्मता बन्धहेतु र्भवति इति प्रश्नस्य उत्तरमाह भट्टः स्वर्गादीति। स्वर्गादिफलाभिलाषेण स्वर्ग-पुत्र-धन-पश्वी-सुखादिफललाभेच्छया काम्यानि कर्म्माणि धर्म्मरूपाणि अनुष्ठीयमानानि पुनर्जन्मने पुनरागमनाय पुनर्भवाय इति यावत् कारणं हेतुर्भवन्ति। अयं भावः धर्म्मरूपं कर्म्म तावत् त्रिविधम्, काम्यं नित्यं नैमित्तिकम्। उक्तञ्च विष्णुपुराणे नित्यां नैमित्तिकीं काम्यां क्रियां पुंसां मशीयत इति। पुंसां पुरुषाणां नित्या नैमित्तिकी काम्या इति त्रिविधा क्रिया वेदोक्ता। त्रिविधक्रियासु सर्व्वकर्म्मसमाहारः। तत्र काम्यं कर्म्म कामाय हितं अग्निष्टोमादिकम् येन पुत्रादिवाञ्छितफलानि प्राप्यन्ते नित्यं कर्म्म यत् अहरहः क्रियते सन्ध्यावन्दनादिरूपं एतस्य अकरणे प्रत्यवायः भवति। नैमित्तिकीं यत् कर्म्म राहुदर्शनादिनिमित्ते जाते सति प्रत्यवायपरिहारार्थं क्रियते स्नानदानादि प्रायश्चित्तरूपम्। एतेषां त्रिविधानां कर्म्मणां मध्ये काम्यं अग्निष्टोमादि फलाभिसन्धिपूर्व्वकं क्रियमाणं बन्धनस्य हेतु र्भवति। फलाभिलाषेण काम्ये कर्म्मणि कृते सति अदृष्टनामकं फलबीजं जायते तच्च बीजं कदापि न नश्यति किन्तु फलदानार्थं पुनर्जन्म घटयति नूतने जन्मनि पुत्रादिरूपं फलं ददाति, कस्मिन् जन्मनि सर्व्वं फलं न ददाति पुनरन्यत् जन्म घटयति तस्मिन् तस्मिन् नूतने जन्मनि पुनरपि काम्यादि कर्म्म करोति पुनरपि जन्मकारणं जायते एवं अनन्तकालपर्य्यन्तं जन्ममरणं च भवति। एवं ये जन्ममरणे गमनागमने ते एव संसरणं चलनं संसार इत्यर्थः जन्ममृत्युरूपेण गमनागमने एव संसरणम्। संसरणमेव संसारशब्देन कथ्यते। तस्मात् फलाभिलाषेण काम्ये कर्म्मणि कृते सति संसाररूपात् बन्धनात् मोचनं मोक्षो न भवेत् अपि तु संसरणं जन्ममृत्युरूपं बन्धनं घटते। अत उक्तं फलाभिलाषेण कृतानि कर्म्माणि पुनर्जन्मने कारणं भवन्तीति।

Actions technically called "actions of desire" when performed from a desire for rewards such as celestial abode and the like, lead to re-birth (and not to final liberation).

"नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षावहकानि"।



3051

But duties technically called *nitya* (compulsory) and *naimittika*, being auxiliary to the knowledge of self lead to final liberation.

नित्यं नैमित्तिकञ्च कर्म्म व्याख्यातम। नित्यानि नैमित्तिकानि च कर्म्माणि तु पक्षान्तरे आत्मज्ञानसहकारितया आत्मज्ञानस्य आत्मतत्त्वज्ञानस्य इत्यर्थः सहकारितया सह युगपत् करोतीति सहकारी तस्य भावः सहकारिता तया सहभावित्वेन सहायत्वेन च हेतुना मोक्षाय मुक्तये कल्पन्ते भवन्ति। क्लृपि सम्पद्यमाने च इति चतुर्थी। अयं भावः फलाभिलाषयुक्तं काम्यं कर्म्म क्रियमाणं सत् बन्धनाय भवति। चेत् एवं, तर्हि नित्यं नैमित्तिकञ्च कर्म्म बन्धनाय भवति यतः तदपि कर्म्म एव। तस्मात् तदपि बन्धकं भवति। अतो नित्यं नैमित्तिकञ्च कर्म्म त्याज्यम्। वस्तुतस्तु नित्यं नैमित्तिकञ्च कर्म्म तदकरणे जातं पापं यत् नाशयति तदेव तस्य फलं तस्य अन्यत् फलं स्वर्गादिप्रापकं जन्मान्तरघटकं वा नास्ति। तस्मात् तत् न त्याज्यम्। तत् हि आत्मज्ञानस्य सहकारि भवति। फलाभिसन्धिपूर्व्वककाम्यकर्म्मणां अकरणेन काम्यकर्म्मणः फलाभावात् पुनर्जन्मनः कारणं न जायते, नित्यनैमित्तिकानां कर्म्मणां करणात् तदकरणजनितं पापं न जायते, आत्मज्ञानं च नित्यनैमित्तिककर्म्मणा समकालं उत्पद्यते आचार्य्योपदेशात्। तस्मात् नित्ये नैमित्तिके च कर्म्मणि कृते सति पुनर्जन्मनः कारणाभावात् मोक्षो अनायासलभ्यो भवति। नित्यनैमित्तिककर्म्मणां अकरणे पापं जायते तेन च नरकादिगमनं दुर्ज्जन्म च भवति तच्च आत्मज्ञानस्य अरिर्भवति नित्यनैमित्तिककर्म्मकरणे तदकरणजनितपापाभावात् नित्यनैमित्तिककर्म्म आत्मज्ञानस्य सहकारि अर्थात् सहाय एव भवतीति तत् न त्याज्यम्।

It is held that performance of actions called नित्यनैमित्तिक produces no other result than the prevention of sin which would result from their non-performance. Thus the performance of नित्यनैमित्तिक as merely preventive of sin occurring from its non-performance, does not become a cause of bondage or rebirth. It is thus not only not inconsistent with the knowledge of self, but actually helps it, as a man burdened with sin resulting from non-performance of नित्यनैमित्तिक would not be fit for true knowledge.

"न पुनरिच्छामात्रं अनेन निषिध्यते। तदाह न चैवेहास्त्यकामता इति।" अर्थात् काम्यकर्म्मणां फलार्थं या इच्छा सा एव निषिध्यते वार्य्यते। सर्व्वा इच्छा

इच्छाभावम् सा न निषिध्यते। यतः इतः परमेव नचैवेहास्त्यकामता इति इच्छान्तरे अनुमतिं करोति।

The text prohibits the desire for rewards, but not desires generally. Because the sage immediately adds "yet exemption from desire is not to be found in this world."

"यतो वेदस्वीकरणं वैदिकसकलधर्मसम्बन्धश्च इच्छाविषय एव"।

Because one's acceptance of the vedas as object of study, and his connection with the performance of vedic ceremonies is an object of desire *i. e.* a man entirely divested of desire can neither study the vedas nor perform actions prescribed by them.

यतः यस्मात् वेदस्वीकरणं वेदानां स्वीकरणं ग्रहणं वेदपाठ इत्यर्थः तथा वैदिकसकलधर्मसम्बन्धश्च वैदिकाः वेदोक्ताः सकलधर्म्माः यज्ञदानादिरूपाः क्रियाः वैदिकसकलधर्म्माः तेषां सम्बन्धः कर्त्तृत्वकर्मत्वादिरूपः इच्छाविषयः इच्छायाः अभिलाषस्य विषयः पदम् एव। इच्छारहितेन जनेन वेदपाठः वेदोक्तकर्म्मकरणञ्च दुर्घट मित्यर्थः। तस्मात् काम्यकर्म्मणः फलविषयिणी इच्छा एव निषिद्धा न तु सर्व्वा इच्छाः इत्यर्थः। सन्ध्यावन्दनवेदपाठपितृयज्ञादिनित्यकर्म्माणि प्रायश्चित्तादिरूपे नैमित्तिके कर्म्मणि आत्मज्ञानलाभे च इच्छा कर्त्तव्या।

Elucidation.—This sloka has been introduced rather abruptly. Two or three slokas introductory to this have been perhaps lost. "नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षाय कल्पन्ते।" This assertion of Kulluka Bhatta would not be acceptable to the Vedantists of Sankar's school whom Kulluka is supposed to have followed. Because according to Sankar's school neither काम्यकर्म्म nor नित्यनैमित्तिक कर्म्म can be सहकारि of ज्ञानम्। The सहकारिता of नित्यनैमित्तिक कर्म्म to ज्ञान is fiercely contested by Sankaracharya. Thus in his Bhashya "नापि ज्ञानस्य कर्म्मसाहाय्यापेक्षा, अविद्यानिवर्त्तकत्वेन च विरोधात्, नहि तमस्तमसो निवर्त्तकम्; अतः केवलं ज्ञानं निःश्रेयसकरणम्" *i. e.* knowledge of self does not require any help from any sort of action, action and knowledge are inconsistent with each other. Darkness cannot dispel darkness, hence action cannot lead to non-action and knowledge. He adds "निष्कामाश्च

कर्म्मणां पुण्यलोकफलश्रुतेः वर्णा आश्रमाश्च स्वकर्म्मनिष्ठाः पुण्यलोकाभवन्तीत्यादिस्मृतेश्च कर्म्मक्षयानुपपत्तिः" *i. e.* it is incorrect to say that नित्यकर्म्म is productive of no other result than prevention of sin arising from its non-performance because we know from the Srutis that नित्यकर्म्म is productive of other results, *i. e.* it leads to the attainment of celestial bliss. The Smritis also lay down that *barnis* and *asramis* by the performance of their respective duties (*i. e.* नित्यकर्म्म) get celestial abode. Thus नित्यकर्म्म never leads to cessation of work. The great Vedantist lays down his conclusion with the greatest force he could command in the following passage: "तस्मात् ईषन्मात्रेण श्रौतेन स्मार्त्तेन वा कर्म्मणा आत्मज्ञानस्य समुच्चयो न केनचित् दर्शयितुं शक्यः" Therefore it is impossible on the part of any one to prove that the knowledge of self can ever be accumulated by any sort of action in any degree however slight.

Why does then कुल्लूक explain the text by stating that नित्यनैमित्तिक कर्म्म may be सहकारि companion, auxiliary or a help to आत्मज्ञान, and lead to final liberation? The answer is this:—Kulluka Bhatta is a follower of the Mimansa school of philosophy as expounded by Kumarila. According to this school there is समुच्चयवाद *i. e.* they maintain that आत्मज्ञान itself cannot give salvation, but that in order to attain liberation it must be supplemented by vedic action or karma. They hold that knowledge of self and नित्यनैमित्तिक कर्म्म are not inconsistent like light and darkness, and that they can and should accompany each other. The whole energy of Sankaracharya was directed to demolish this theory. He puts the views of this school in a nutshell. "केचित् आहुः सर्व्वकर्म्मसन्न्यासपूर्व्वकात् आत्मज्ञाननिष्ठामात्रात् एव केवलात् कैवल्यं न प्राप्यते। किं तर्हि? अग्निहोत्रादिश्रौतस्मार्त्तकर्म्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति" Some (*i. e.* the Brittikar) hold that final liberation cannot be secured by abandoning all actions, and by adhering to the knowledge of self alone. How is

it then to be secured? They answer the question by saying that final liberation is obtained by the knowledge of the self, accompanied by actions like sacrifices and so on as prescribed by the Vedas and Smritis. This is called ज्ञानकर्मसमुच्चयवाद। Sankaracharya holds that समुच्चयवाद has no leg to stand upon, it is wrong and mischievous. According to him ज्ञान and कर्म are as inconsistent as light and darkness. ज्ञान is light, it dispels ignorance, and every action or karma is the result of ignorance. One cannot accompany the other.

Therefore Kulluka is a follower of Brittikar, and not of Sankar. We may however reconcile him to Sankar by supposing that Kulluka has not stated for the present the whole truth which he has in his mind, as it may create confusion at this stage. According to Sankar कर्म may prepare the way for ज्ञान, but no sooner ज्ञान makes appearance कर्म must withdraw altogether. Thus there can be no सहकारिता or co-operation of कर्म with ज्ञान।

What is the meaning of कामात्मता? Explain fully कामात्मता न प्रशस्ता giving reasons in support of your explanation. How can काम्यकर्म be rendered harmless as far as final liberation is concerned? Into how many classes is vedic action divided? What are they? "नित्यनैमित्तिकानि तु आत्मज्ञानसहकारितया मोक्षाय कल्पन्ते।" Give a thorough exposition of this view. Do you know the view of Sankar's school on this point? State it briefly if you can. What is the meaning of अकामता? With what object has limitation been put to कामात्मता न प्रशस्ता?

Meaning in English.—To perform actions (prescribed by the Vedas) from a desire for rewards only is not laudable, because such a disposition becomes the cause of bondage as it leads to rebirth; yet exemption from desire altogether is not to be met with in this world; because both the study of the

Vedas and the performance of actions prescribed by them, depend on desire.

Grammatical notes. (*a*) On the text. 1.—कामात्मता—काम. कामना आत्मा स्वभावो यस्य स कामात्मा बहुव्रीहिः तस्य भावः कामात्मता। काम परता कामनया सह फलस्यैव सम्बन्धात् कामनाशब्देन फलाभिलाषो गम्यते। तस्मात् कामात्मता फलाभिलाषशीलतेति कुल्लूकः। Nom. to भवति understood. कम + घञ् कामः। काम्यते इति कामः भावे घञ्। कामयते कामयाञ्चक्रे अकमि। अचीकमत् अचकमत। कमेर्णिङ् इति स्वार्थे णिङ् प्रत्ययात् कामयते स्यात्। अतति अलति मायावच्छिन्नजीवरूपेण जन्ममृत्युभ्यां आत्मा। न तस्य प्राणा उत्क्रामन्तीतिश्रुतेरात्मनस्य उत्क्रमणाभावश्रवणात् परमात्मनि एव लय इति। 2. प्रशस्ता—प्र शन्स् + क्त। न प्रशस्ता निन्दनीया इत्यर्थः। शंसति शशंस अशंसीत्। Qualifies (I.) 3. न च—अव्ययम्। न इति नञ् निषेधार्थकः। 4. एव—अव्ययम्। अवधारणे। 5. इह—अव्ययम्। इदम् + ह सप्तमी स्थाने by इदमोह। इदमः स्थाने इशादेशः + ह = इह। तद्धितश्चासर्व्वविभक्ति रिति सूत्रेण अव्ययत्वम्। इह अस्मिन् जगति दिग्वाचिनामपि लक्षणया देशवाचित्वम्। 6. अस्ति —अस् लट् तिप्। बभूव भविष्यति अभूत्। 7. अकामता—न विद्यते कामः इच्छा यस्य स अकामः बहुव्रीहिः। तस्य भावः अकामता इच्छाशून्यता इत्यर्थः। 8. वेदाधिगमः—वेदानां अधिगमः ग्रहणम् वेदाधिगमः। विदन्ति कर्म्म ज्ञानञ्च अनेन इति वेदः। विद + घञ्। वेदयतीति वा वेदः णिजन्त विद धातोः कर्त्तर्य्यच् प्रत्ययः। वेत्तीति वेदः। अधि - गम + घञ्। वेत्ति। विवेद। अवेदीत्। 9. काम्यः —कम + ण्यत्। 10. वैदिकः—तत्र भव इत्यर्थे वेद शब्दात् ठक् by द्व्यजृद्ब्राह्मणर्क्ष &c. &c. वेद has two vowels. Hence ठञ् (णिक)। Qualifies कर्म्मयोगः। 11. कर्म्मयोगः—क्रियते इति कर्म्म। कृ धातो र्मनिन्। कर्म्मणा योगः कर्म्मयोगः तृतीया समासः। or कर्म्मणो योगः कर्म्मयोगः षष्ठी समासः। युज् + घञ् योग। युनक्ति युङ्क्ते। युयोज युयुजे। अयौक्षीत् अयुक्त अयुजत्।

*Change of voice*—कामात्मतया न प्रशस्तया भूयते। न च एव इह अकामतया भूयते। वेदाधिगमेन वैदिकेन कर्म्मयोगेन च काम्येन भूयते ॥ २ ॥

Bengali.—ফলকামনা করিয়া কাম্য কর্ম্ম অনুষ্ঠান করা প্রশংসার্হ নহে; কেননা স্বর্গাদি ফললাভের ইচ্ছায় কাম্য কর্ম্ম করিলে পুনর্ব্বার জন্ম হইবার হেতু উৎপন্ন হয়; নিত্য ও নৈমিত্তিক কর্ম্ম আত্মজ্ঞানের সহকারিরূপে মোক্ষলাভের সহায়তা করে। আবার কামনা বা ইচ্ছামাত্রই যে নিষেধের বিষয়ীভূত তাহাও

নহে ; এই সংসারে কোথায়ও কামনাশূন্যতা নাই ; এমন কি বেদপাঠ এবং বৈদিক কর্ম্ম সম্পাদনও কামনা বা ইহার বিষয়ীভূত ॥ ২ ॥

ENGLISH.—The state or habit of (entertaining) desires for fruits of actions (apart from the consideration of duty) is not praiseworthy ; and yet the want or abnegation of desires for fruits of actions does not exist here. For, the study of the vedas and the practice of vedic rites are for selfish consideration. (2).

सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः ।
व्रतानियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः ॥ ३ ॥

PROSE—कामः सङ्कल्पमूलः वै, यज्ञाः सङ्कल्पसम्भवाः सर्व्वे व्रता नियमधर्म्माश्च सङ्कल्पजाः स्मृताः (भवन्ति) ॥ ३ ॥

KULLUKA.—अत्रोपपत्तिमाह सङ्कल्पमूलः इति अनेन कर्म्मणा इदमिष्टं फलं साध्यत इत्येवं विषया बुद्धिः सङ्कल्पः तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते तदर्थं प्रयत्नं कुरुते च इत्येवं यज्ञाः सङ्कल्पप्रभवा व्रतानियमरूपाश्च धर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः, सर्व्वं इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्ते इच्छानन्तरैव तान्यपि न सम्भवन्तीत्यर्थः । गोविन्दराजस्तु व्रतान्यनुष्ठेयरूपाणि यमधर्म्माः प्रतिषेधार्थका इत्याह ॥ ३ ॥

KULLUKA EXPLAINED.—"अत्र उपपत्तिं आह सङ्कल्पमूल इति।"

In the couplet demonstration (of the proposition that performance of vedic actions is grounded on desire) is given. The sloka commences with the word *Sankalpamula.*

अत्र अस्मिन् श्लोके उपपत्तिं युक्तिसिद्धिं आह मनुरितिशेषः कुत्र ? सङ्कल्पमूल इति श्लोके । कस्य उपपत्ति माह ? ननु काम्यो हि वेदाधिगमः कर्म्मयोगश्च वैदिक इति सिद्धान्तस्य प्राग्वर्णितस्य । उपपद + क्तिन् ।

"अनेन कर्म्मणा इदं फलं साध्यते इत्येवं विषयाबुद्धिः सङ्कल्पः।"

A conception that a particular act yields a particular result is called sankalpa.

अनेन कर्म्मणा इदं फलं साध्यते सम्पाद्यते इत्येवंविषया बुद्धिः ज्ञानं सङ्कल्प सङ्कल्पशब्देन कथ्यते ।

"तदनन्तर मिष्टसाधनतयावगते तस्मिन् इच्छा जायते तदर्थं प्रयत्नं कुरुते च इत्येवं यज्ञाः सङ्कल्पसम्भवाः।"

After such a conception, when it is known that the action will serve one's purpose, one is desirous of it, and then makes exertions for it, it is thus that sacrifices are performed in consequence of conception (sankalpa) stated above.

तदनन्तरं सङ्कल्पात् परं तस्मिन् कर्म्मणि इष्टसाधनतया इष्टस्य अभिलषितस्य पुत्रादेः साधनं प्राप्त्युपायः तस्य भावः इष्टसाधनता तया ज्ञाते अवगते सति तस्मिन् पुत्रादिरूप-फलके कर्म्मणि इच्छा जायते उत्पद्यते ततश्च कर्म्मार्थं प्रयत्नं कुरुते इति एवं प्रकारेण यज्ञाः यागादिकर्म्माणि सङ्कल्पसम्भवाः सङ्कल्पाः अनेन कर्म्मणा एतत् फलं साध्यते इति ज्ञानं तदेव सम्भवः उत्पत्तिर्येषां तथाभूताः। अर्थात् सङ्कल्पात् इष्टसाधनताज्ञानं इष्टसाधनताज्ञानात् इच्छा (कामः) इच्छायाः प्रयत्नः प्रयत्नात् एव कर्म्म सिध्यति। अतः कामः इच्छा सङ्कल्पमूलः।

"व्रता नियमरूपाश्च धर्म्माः चतुर्थाध्याये वक्ष्यमाणाः।"

(व्रत) Rules of religious austerities (नियम) and abstinence from sin, are described in the fourth chapter. (These also arise from Sankalpa).

व्रताः or व्रतानि (Both masc. and neuter).

"सर्व्वे इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्ते इच्छामन्तरेण तान्यपि न सिध्यन्तीत्यर्थः।"

The word all (सर्व्वे) in the text implies that other injunctions of the sastras also arise from sankalpa ; without desire they also become impossible.

"सर्व्वे" इति पदेन व्रतनियमव्यतिरिक्ताः अन्ये अवशिष्टाः अपरे अपि शास्त्रार्थाः शास्त्राणां अर्थाः विषयः शास्त्रोक्तकर्म्माणि सङ्कल्पात् एव मान्यत इति भावः जायन्ते उत्पद्यन्ते। कारणमाह इच्छामन्तरेण इच्छां विना तानि अपि कर्म्माणि न सिध्यन्ति न घटन्ते।

"गोविन्दराजस्तु व्रतानि अनुष्ठेयरूपाणि यमधर्म्माः प्रतिषेधार्थका इत्याह।"

But Govindaraja splits व्रतानियमधर्म्माश्च into two parts making व्रतानि as one word and यमधर्म्माः another word (instead of making t व्रताः and नियमधर्म्माः as done by Kulluka) ; and then explains व्रत as positive injunctions, and यमधर्म्माः as prohibitive injunctions.

तु पक्षान्तरे गोविन्दराजाख्यः टीकाकृत् व्रतानियमधर्म्माश्च इति व्रतानि यमधर्म्माश्च

इति प्रकारेण विभज्य व्रतशब्देन अनुष्ठेयरूपाणि विधेयरूपाणि कर्म्माणि च एवं कुर्य्यात् इति विधिनामानि प्राप्तानि तानि कर्म्माणि आह यमधर्म्मशब्देन यमेन नियमनेन अदोषप्रापकवाक्येन अर्थात् न कुर्य्यात् इति निषेधरूपवाक्येन यत् प्राप्तं कर्म्म तस्य त्यागमाह। तु शब्देन गोविन्दराजस्य व्याख्यानं निन्दति। कुतः यज्ञरूपाणि कर्म्माणि अपि यजेत इति विधिवाक्येन प्राप्तानि। विधिनिषेधप्रकारेण सर्व्वेषां कर्म्मणां सङ्कल्पमूलत्वे वक्तव्ये सति व्रतानि यमधर्म्माश्च सङ्कल्पसम्भवा इत्युक्ते नैव कार्य्यं स्यात् सामान्यमुखेनहि उक्ता पुनर्व्विशेषस्य यज्ञरूपविषयस्य वचनं अनर्थकं स्यात् यज्ञानामपि विधेयत्वात् अनुष्ठेयकर्म्मसु अन्तर्भावात्। तस्मात् गोविन्दराजस्य व्याख्यानं निन्दनीयमित्यर्थः।

ELUCIDATION.—काम्योहि वेदाधिगमः कर्म्मयोगश्च वैदिकः इत्यस्य उपपत्ति रस्मिन् श्लोके दर्शिता पूर्व्वस्मिन् श्लोके उक्तम् फलेच्छा न कर्त्तव्या, शास्त्रोक्ते अन्यस्मिन् विषये इच्छा कर्त्तव्या, यत इच्छां विना किमपि कर्त्तुं न शक्यते। इच्छया सह कर्म्मणां साक्षात् सम्बन्धो नास्ति तत् कथं उच्यते इच्छां विना कर्म्म न सिध्येत्? उच्यते (*i. e.* it is answered in the following way) कर्म्मणा सह इच्छायाः साक्षात् सम्बन्धो नास्ति सत्यम् किन्तु परम्पराक्रमेण सम्बन्धः अस्ति। तामेव परम्परा अस्मिन् श्लोके प्रदर्शयति। प्रथमं अनेन कर्म्मणा एतत् फलं भवेत् इति ज्ञानं प्रयोजनम्, तदेव ज्ञानं सङ्कल्पः। ततश्च यदि तत् फलं कर्त्तुः अभिलषणीयं भवेत् तदा तत् कर्म्म अभिलषितस्य फलस्य उपायरूपं इति ज्ञानं भवति, तदेव कर्म्मणः इष्टसाधनताज्ञानं। ततश्च तत्कर्म्मविषयिणी इच्छा भवति ततश्च कर्म्मणि प्रयत्नः स्यात् तेन कर्म्मसिद्धिः स्यात्। किन्तु सङ्कल्पेष्टसाधनताज्ञानेच्छाप्रयत्नरूपाणां चतुर्णां कर्म्मसाधकानां मध्ये इच्छायाः प्राधान्यात् सर्व्व एव कर्म्म काम्यं अर्थात् इच्छाविषयं इच्छामूलमित्युक्तम् इच्छायामेव अवशिष्टानां त्रयाणां अन्तर्भाव इव।

वेदोक्तमेव कुर्व्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः। ४६। ४। ११ भागवतम्।

निःसङ्गोऽभिनिवेशशून्यः। ईश्वरे अर्पितं सत् फलोद्देशेन। ननु फलस्य उक्तत्वात् फलं भवेदेव तदाह न भवति। फलश्रुति स्तु रोचनार्थाप्ररोचनार्थं भवति। ईश्वरे अर्पिते सति कर्म्मणः फलं नस्यात्। स्वर्गकामो यजेत इत्यनेन अभिलषितस्य एव स्वर्गादेः फलत्वेन ज्ञातत्वात् अनभिलषितः स्वर्गो न भवति कर्म्मणि कृतेऽपि। तेन नैष्कर्म्म्यां सिद्धिं लभते कर्म्म कुर्व्वन् अपि।

एवं भारतपुराणादिषु सर्व्वत्र द्रष्टव्यम्।

THE MEANING IN ENGLISH.—The desire has its root in the conception that a certain act will yield the desired rewards, the performance of a sacrifice is the consequence of

such a conception. Vows, and laws enjoining restraint, are also stated to be observed through the idea that they will produce the desired result.

PURPORT.—कामात् एव सर्व्वं कर्म्मसिध्यति। प्रथमं सङ्कल्पः तत इष्टसाधनताज्ञानं ततः कामः ( इच्छा ) ततः प्रयत्नः ततः कर्म्मसिद्धिः। एतेषां मध्ये कामस्य अर्थात् इच्छायाः प्राधान्यम्। तस्मात् पूर्व्वस्मिन् श्लोके यत् उक्तं सर्व्वं कर्म्म काममूलं इच्छाकृतं तत् उपपन्नम्। २।

GRAMMATICAL NOTES.-(*a*) On the text :—1. सङ्कल्पमूलः संकल्प्यते निश्चीयते इति सङ्कल्पः। सङ्कल्पो मूलं यस्य स बहुव्रीहिः। सं क्लृप + घञ् संकल्पः। कल्पते। चक्लृपे कल्प्स्यति कल्प्स्यते कल्पिष्यते। अकल्पिष्ट अक्लृपत् अक्लृप्त। 2. कामः काम्यते इति कामः। कम् + घञ्। इच्छा इत्यर्थः। कामयते। अचीकमत अचकमत। 3. यज्ञाः यज + नङ् यज्ञ। यज याच यत विच्छ प्रच्छ रक्षो नङ्। यज्ञः याच्ञा यत्नः विश्नः प्रश्नः रक्ष्णः। स्वपो नन् इति स्वप्नः। यजते यजति इयाज ईजे अयष्ट अयाक्षीत्। यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुरित्यमरः। 4. सङ्कल्पसम्भवः—सङ्कल्पः सम्भवः कारणं यस्य स सङ्कल्पसम्भवः। बहुव्रीहिः। सम्भवति अस्मात् इति सम्भवः। सम्—भू + अप्। सम्—क्लृप + घञ्। 5. व्रताः—व्रज + घः जस्यतः। व्रतं व्रतः। नियमः पुण्यकं व्रतमिति हेमचन्द्रः। 6. नियमधर्म्माः—नियम्यते अनेन इति नियमः। नियमस्य धर्म्माः नियमधर्म्माः षष्ठी समासः। नि—यम + अप्। यमः समुपनिविषु च। एषु अनुपसर्गे च यमे रप् वा स्यात् पक्षे घञ्। यमः यामः। उपयमः उपयामः। नियमः नियामः। वियमः वियामः। 7. सर्व्वे—Qualifies (5) and (6). 8. सङ्कल्पजाः—सङ्कल्पात् जायन्ते इति सङ्कल्पजाः। उपपद समासः। सङ्कल्प—जन + ड जायते जज्ञे अजनि। 9. स्मृताः—स्मृ + क्तः कर्म्मणि। स्मरति सस्मार अस्मार्षीत्।

CHANGE OF VOICE.—सङ्कल्पमूलेन कामेन भूयते। यज्ञैः सङ्कल्पसम्भवैः भूयते। व्रतैः नियमधर्म्मैश्च सर्व्वैः सङ्कल्पजैः ......स्मृतैर्भूयते ॥ ३ ॥

BENGALI.—এই কর্ম্ম দ্বারা এইরূপ ফল হয়, ইত্যাকার জ্ঞানকে সঙ্কল্প বলে; সঙ্কল্পের পর এই কর্ম্ম অভীষ্ট সাধন করিবে এরূপ জ্ঞান জন্মিলে সেই কর্ম্মটি করিবার জন্য ইচ্ছা জন্মে, অতএব সঙ্কল্পই ইচ্ছার মূল; যজ্ঞ মাত্রই সঙ্কল্প হইতে উৎপন্ন; কি ব্রত কি সংযম ধর্ম্ম প্রভৃতি, সমস্ত কর্ম্মই সঙ্কল্প হইতে জাত বলিয়া স্মৃতিতে লিখিত। ( অতএব সমস্ত কর্ম্মই যে ইচ্ছামূলক তাহা উপপন্ন হইল ) ॥ ৩ ॥

ENGLISH.—A desire has its root in a purpose or motive (for some gain). Sacrifices have their origin in some motive or purpose. All vows and proscriptive injunctions and rules are said to have their origin in some motive or purpose. (3).

अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते किञ्चित् तत्तत् कामस्य चेष्टितम्॥ ४॥

PROSE.—इह अकामस्य काचित् क्रिया कर्हिचित् न दृश्यते। (ततः पुरुषः) यत् यत् किञ्चित् कुरुते तत् तत् कामस्य चेष्टितम्॥ ४॥

KULLUKA.—"अत्रैव लौकिकं नियमं दर्शयति अकामस्येति। लोके या काचिद्भोजनगमनादिक्रिया साप्यनिच्छतो न कदाचिद्दृश्यते ततश्च सर्व्वं कर्म्म लौकिकं वैदिकञ्च यद्यत् पुरुषः कुरुते तत्तदिच्छाकार्य्यम्॥ ४॥

KULLUKA EXPLAINED—अत्रैव लौकिकनियमं दर्शयति अकामस्येति" The conclusion is now supported by rules of conduct observed in the performance of worldly actions. "लोके या काचित् भोजनगमनादिक्रिया साऽपि अनिच्छतः न कदाचित् दृश्यते।"

लोक्यते दृश्यते इति लोकः दृश्यमानं जगत् लोक इत्युच्यते। तस्मिन् या काचित् सर्व्वा इत्यर्थः भोजनगमनादिक्रिया भोजनं गमनञ्च भोजनगमने ते आदिनी यासां ता भोजनगमनादयः ता एव क्रियाः कर्म्म दृश्यते सापि अदृश्यमाना तु दूरे अस्तु अनिच्छतः न इच्छतः भोजनादिक्रियायां इच्छां अकुर्व्वतः जनस्य न कदाचित् कर्हिचिच्छब्दस्यार्थः

We see temporal or worldly actions like eating, going etc. etc. But we have never seen such actions being done by one who has no desire for them.

"ततश्च सर्व्वं कर्म्म लौकिकं वैदिकं च यद् यत् पुरुषः कुरुते तत्तत् इच्छाकार्य्यम्।"

ततः यस्मात् लौकिकं कर्म्ममात्रं इच्छाकार्य्यं तस्मात् इत्यर्थः सर्व्वं कर्म्म तदेव विशदयति लौकिकं वैदिकञ्च कर्म्म इति यद् यद् पुरुषः जनः कुरुते तत्तत् सर्व्वं इच्छाकार्य्यम्। अयं भावः—वैदिकं कर्म्म एव धर्म्मः। तत् कर्म्म इच्छामूलकं न वेति विचार्य्यं भवति। वैदिककर्म्मणः मूलं धर्म्मेऽस्य्ये लौकिककर्म्मणः मूलं धर्म्मेतरमित्थं

भवति उभयकर्म्मणि एव मनसः कर्त्तृत्वात्। लौकिककार्य्येषु इच्छा एव कारणं तस्मात् वैदिकेऽपि कर्म्मणि मनस इच्छा एव कारणं इति सिद्धान्त इत्यर्थः।

Therefore every action whether vedic or worldly done by a man is the consequence of desire.

ELUCIDATION.—In the former sloka it has been demonstrated psychologically that desire is the root of all actions. This sloka supports the same conclusion by reference to ordinary rules of conducting and controlling human actions as far as worldly matters are concerned.

GRAMMATICAL NOTES. (*a*) On the text.—1. अकामस्य—न विद्यते कामो यस्य सः अकामः बहुव्रीहिः। तस्य शेषे षष्ठी। 2. क्रिया—Acc. of दृश्यते। प्रातिपदिकार्थे प्रथमा। कृ+श क्रिया। 3. काचित्—किम् स्त्रियां सु ततः चित्। 4. दृश्यते—दृश्+कर्म्मणि लट् यगागमः। पश्यादेशः लुक् कर्म्मणि। 5. न—नञ् अव्ययम्। 6. इह—इदम्+ह। 7. कर्हिचित्—कर्हिचित्। सप्तम्यर्थे किम् शब्दात् र्हिल् प्रत्ययः। By अनद्यतने र्हिल् अन्यतरस्याम्। कर्हि कदा इत्यर्थः। ततः चित्। 8. यद्यत् तत्तत्—कर्म्मकारकम् वीप्सायां द्विरुक्तिः। By नित्यवीप्सयोः। 9. कुरुते—कृञ्—लट् ते। Nom. पुरुषः understood. 10. कामस्य—शेषे षष्ठी। 11. चेष्टितम्—Nom. to भवति understood. चेष्ट्+नपुंसके भावे क्तः। चेष्टते विचेष्टे अचेष्टिष्ट।

CHANGE OF VOICE.—क्रियां काञ्चित् न पश्यन्ति लोकाः। यद् यद्...... क्रियते तेन तेन कामस्य......चेष्टितेन भूयते॥ ४॥

PURPORT.—लौकिकव्यवहारे च दृश्यते सर्व्वा क्रिया इच्छायुक्तेन पुरुषेण सम्पाद्यते। तस्मात् न केवलं लौकिकं कर्म्म वेदोक्तं यत् कर्म्म तदपि इच्छामूलकं एव यतः मनसा सर्व्वं एव क्रियते॥ ४॥

MEANING IN ENGLISH.—Not a single act appears ever to be done by any one who has no desire for it; therefore every act of a man whether worldly or vedic (spiritual) is the result of desire.

BENGALI.—লৌকিকব্যবহারে ভোজন গমন ইত্যাদি যত ক্রিয়া দেখা যায়, তাহার কোনটিই ইচ্ছাশূন্য ব্যক্তি করিয়াছেন এরূপ কদাচ দেখা যায় না; অতএব পুরুষের কি লৌকিক কি বৈদিক সমস্ত কর্ম্মই ইচ্ছার কার্য্য মাত্র। ৪।

ENGLISH.—Nowhere in this world is seen any action of a man having no disire ( for reward a fruit of action). For, whatever one does is the outcome of a desire or purpose. (4)

तेषु सम्यग्वर्त्तमानो गच्छत्यमरलोकताम्।
यथासङ्कल्पितांश्चेह सर्व्वान् कामान् समश्नुते ॥ ५ ॥

PROSE.—तेषु सम्यग्वर्त्तमानः ( पुरुषः ) अमरलोकतां गच्छति, इह च यथा सङ्कल्पितान् सर्व्वान् कामान् समश्नुते। ५।

KULLUKA.—सम्प्रति पूर्व्वोक्तं फलाभिलाषनिषेधं नियमयति तेषु सम्यग्वर्त्तमान इति। नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्म्मसु सम्यग्वृत्तिर्विधीयते बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्म्मणामनुष्ठानं तेषु सम्यग्वृत्तिः सम्यग् वर्त्तमानोऽमरलोकताम् अमरधर्म्मकं ब्रह्मभावं गच्छति मोक्षं प्राप्नोतीत्यर्थः। तथाभूतश्च सर्व्वेश्वरत्वादिहापि लोके सर्व्वानभिलषितान् प्राप्नोति। तथाच छान्दोग्येऽपि स यदा पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादि ॥ ५ ॥

KULLUKA EXPLAINED.—"सम्प्रति फलाभिलाषनिषेधं नियमयति तेषु इति"। फलाभिलाषः निषिद्धः स च निषेधः न सर्व्वत्र किन्तु शास्त्रीयेषु कर्म्मस्वेव इति नियमं स्थापयति अस्मिन् तेष्विति श्लोके इत्यर्थः।

"नात्र इच्छा निषिध्यते किन्तु शास्त्रोक्त कर्म्मसु सम्यग्वृत्तिर्विधीयते।"

अत्र अस्मिन् श्लोके इच्छा कामना न निषिध्यते वार्य्यते किन्तु शास्त्रोक्तकर्म्मसु सम्यग्वृत्तिः वक्ष्यमाणप्रकाराविधीयते। अस्मिन् श्लोके न इच्छेत् इति निषेधः न प्राप्तः किन्तु सम्यग् वर्त्तेत इति विधिः प्राप्यते इत्यर्थः।

In this sloka a negative injunction as regards desire is not found, but a positive injunction for discharging duties without desire for reward is laid down.

"बन्धहेतु फलाभिलाषं विना शास्त्रीयकर्म्मानुष्ठानं तेषु सम्यग्वृत्तिः।"

का नाम सम्यग्वृत्तिः? ननु बन्धस्य हेतुभूतः यः फलाभिलाषः तं विना शास्त्रीयाणां कर्म्मणां अनुष्ठानं तेषु कर्म्मसु सम्यग्वृत्तिः इति कथ्यते। फलाभिलाषं परित्यज्य शास्त्रोक्तकर्म्मानुष्ठानं सम्यग्वर्त्तनम्। अयं जनः कर्म्मसु सम्यग् वर्त्तमानः=अयं जनः फलाभिलाषं त्यक्त्वा शास्त्रीयं कर्म्म करोति।

Performance of duties prescribed by the Sastras without any desire for reward is *samyakbritti* (proper application of oneself).

"सम्यग्वर्त्तमानः अमरलोकतां अमरधर्म्मकं ब्रह्मभावं गच्छति मोक्षं प्राप्नोति।"

सम्यग्वर्त्तमानः पूर्व्वोक्तप्रकारेण फलाभिलाषं वर्ज्जयित्वा कर्म्म कुर्व्वन् पुरुषः अमरलोकतां अर्थात् अमरधर्म्मविशिष्टं ब्रह्मभावं ब्रह्मणः परमात्मनः भावः प्रकृतिः मायातीतत्वं केवलत्वं नैर्गुण्यं तं गच्छति मोक्षं मुक्तिं कैवल्यं प्राप्नोति। आपेर्ग्गमेश्च अत्तमार्द्धत्वात् तुल्यत्वम्।

One who performs actions without expecting rewards (*samyak bartamana*) acquires deathless state *i. e.* final absorption or state in which the pure Brahma exists.

"तथाभूतश्च सर्व्वेश्वरत्वात् इहाऽपि लोके सर्व्वान् अभिलषितान् प्राप्नोति।"

तथाभूतः अमरलोकतां प्राप्तः सन् सर्व्वेश्वरत्वात् यदा एवम्भूतः इहैव अमरलोकतां प्राप्नोति तदा स सर्व्वेश्वरः सर्व्वेषां स्थावरजङ्गमानां दृष्टादृष्टानां ईश्वरः प्रभुः भवति तथा शास्त्रे दृष्टत्वात् अतः एवम्भूतः न केवलं परलोके इहलोके अपि सर्व्वान् अभिलषितान् वाञ्छितान् कामान् इच्छामात्रेण प्राप्नोति। यथा भरद्वाजो भगवान् सङ्कल्पमात्रेण ससैन्यं भरतं देवदुर्लभै र्द्रव्यैः अर्च्चयामास।

"After attaining deathless state, he becomes lord of all, and even in this world, gets every th ing that his fancy can suggest (for there are authorities on the point).

"तथा च छान्दोग्येऽपि स यदा पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीति।"

तथा यथा उक्तं तद्वत् छान्दोग्ये छन्दोगानां सामवेदिनां इदं छान्दोग्यम् ब्राह्मणग्रन्थविशेषः तस्मिन् वेदैकदेशेऽपि न केवलं मनुस्मृतौ इति भावः इदं स्वीकृतं अस्ति। सः पुरुषः यदा पितृलोककामो भवति पितृलोकं इच्छति सङ्कल्पात् इच्छामात्रादेव तदा तस्य पितरः पितृदेवताः समुत्तिष्ठन्ति आगच्छन्ति इति।

We have likewise in the Chhandogya Upanishad "When he is desirous of connection with his ancestors (the manes), they appear before him no sooner are they called to memory."

ELUCIDATION.—There can be no doubt that the text has direct reference to the theory as quoted by Kulluka Bhatta from the Chhandogya Upanishad. This couplet lays down an injunction not found before. It is कर्म्मसम्यगनुतिष्ठेत् *i. e.* perform actions prescribed by the Vedas without expecting any reward. It then lays down an अर्थवाद or फलश्रुति or praise. The फलश्रुति

portion is directly taken from the Upanishad. सर्व्वान् कामान् समश्नुते is taken almost verbatim from छान्दोग्य—

Thus अथ स यदि पितृलोककामोभवेत् सङ्कल्पदेवास्य पितरः समुत्तिष्ठन्ति।
अथ यदि मातृलोक कामो भवति.........। अथ यदि भ्रातृलोक कामोभवति...।
अथ यदि स्वसृलोक कामो................। अथ यदि सखिलोक कामः.........।
अथ यदि गन्धमाल्य लोक................। अथ यदि अन्नपान लोक............।
अथ यदि गीतवादित्र लोक............। अथ यदि स्त्रीलोक काम.........।
यं यं अन्तं अभिकामो भवति यं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते।

Though the ritualistic side is exhibited in Manu, the spiritual side also exists and cannot be concealed so ably brought to light by Kulluka Bhatta.

The word ब्रह्मभाव creates difficulties to a beginner. ब्रह्मभाव described in this text is not final ब्रह्मभाव but secondary stage, having some environment of माया।

PURPORT.—शास्त्रोक्तानि कर्म्माणि फलाभिलाषशून्यः सन् कुर्व्वीत। तथा कृतेषु सत्सु पुरुषः सगुणब्रह्मणः सत्यसङ्कल्पत्वादिगुणयुक्तः मोक्षं गौणं प्राप्नोति, ब्रह्मणो, गुणान् च सत्यसङ्कल्पादिकान् प्राप्य अस्मिन् एव लोके यद् यत् कामयते तत् तत् सपदि प्राप्य महीयते॥ ५॥

MEANING IN ENGLISH.—He who performs duties without expecting reward obtains deathless state, the state of perfect liberation, or the condition of Brahma in its purity; and thus attaining the condition of the Lord of the Universe, even in this life, secures fulfilment of every desire he may have conceived.

GRAMMATICAL NOTES. (*a*) On the text.—**1.** तेषु—Qualifies कर्म्मसु understood. **2.** सम्यग्-वर्त्तमानः—सम्यक् वर्त्तमानः सम्यग् वर्त्तमानः। कुगति प्रादयश्च इति समासः। वृत+शानच् कर्त्तरि। वर्त्तते वृतते अवृतत् अवर्त्तिष्ट फलाभिलाषशून्यत्वेन अनुष्ठानपर इत्यर्थः। **3.** गच्छति गम् लट् ति। लुङ् अगमत्। प्राप्नोतीत्यर्थः। Governs अमरलोकताम्। **4.** अमरलोकताम्—न मरा अमराः। अमरा एव सुखहेतुत्वेन भोग्यत्वात् लोकाः अमरलोकाः। (भाष्योक्त व्याख्यानम्) तेषां भावः अमरलोकता अमरभावः ताम्। Acc. of

गच्छति। म्रियते ममार अमरत। मृङ्+अच्। 5. यथा सङ्कल्पितान्—सङ्कल्पितं अनतिक्रम्य यथासङ्कल्पितं अव्ययीभावः। यथा सङ्कल्पितम् अर्थे आदिश्च अच्=यथा—सङ्कल्पिताः। तान्। 6. इह—इदम्+ह। 7. सर्व्वान्—Qualifies कामान्। 8. समश्नुते—सम्—अश+लट् ते। अश्नुते आत्मनेपदी आशिष्ट आप्ट।

CHANGE OF VOICE.—सम्यग्वर्त्तमानैः अमरलोकता गम्यते।......सर्व्वे कामाः समश्यन्ते ॥ ५ ॥

BENGALI.—ফল আকাঙ্ক্ষা না করিয়া শাস্ত্রোক্ত কর্ম্ম অনুষ্ঠান করাকে সম্যক্ অনুষ্ঠান বলে। এই অর্থে কর্ম্মের সম্যক্ অনুষ্ঠান করিবে। যিনি কর্ম্মের সম্যক্ অনুষ্ঠান করেন, তিনি অমরধর্ম্মবিশিষ্ট ব্রহ্মভাব বা মোক্ষলাভ করেন; এবং তিনি ব্রহ্মভাবাপন্ন হইয়া সর্ব্বেশ্বরত্ব লাভ করায় এই জন্মেও যাহা যাহা ইচ্ছা করেন সঙ্কল্পমাত্রই তাহা তাহা ভোগ করিতে সমর্থ হন। ৫।

ENGLISH.—A person properly or rightly doing these acts (laid down by the Sastras) attains the state of immortals (or the imperishable beatitude of Brahman), and gets here all his desires as wished for. (5).

वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मन स्तुष्टिरेवच ॥ ६ ॥

PROSE.—अखिलो वेदः तद्विदां स्मृतिशीलेच साधूनां आचारश्चैव आत्मनः तुष्टिरेवच। धर्म्ममूलं (भवति) ॥ ६ ॥

KULLUKA.—इदानीं धर्म्मप्रमाणान्याह वेदोऽखिलो धर्म्ममूलमिति वेद ऋग्यजुःसामाथर्व्वलक्षणः स सर्व्वो विध्यर्थवादमन्त्रात्मा धर्म्मे मूलं प्रमाणम् अर्थवादादीनामपि विध्येकवाक्यतया स्तावकत्वेन धर्म्मे प्रामाण्यात्। यदाह जैमिनिः—विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्म्मे प्रामाण्यं प्रयोगकाले चानुष्ठेयस्मारकवेदस्य धर्म्मे प्रामाण्यं यथानुभवकरणत्वद्रूपन्यायसिद्धये स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते। मन्वादीनाञ्च वेदविदां स्मृतिधर्म्मे प्रमाणं वेदविदामिति विशेषणोपादानाद्वेदमूलकत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतं शीलं ब्रह्मण्यतादिरूपम्। तदाह हारीतः—ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूया मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्। गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह। आचारः कम्बलवल्कलाद्याचरणरूपः साधूनां धार्म्मिकाणाम् आत्मतुष्टिश्च वैकल्पिकपदार्थविषयधर्म्मे प्रमाणं तदाह गर्गः: वैकल्पिके आत्मतुष्टिः प्रमाणम् ॥ ६ ॥

KULLUKA EXPLAINED.—"इदानीं धर्म्मप्रमाणान्याह वेद इति।"

Dharma has been defined in the first sloka. This sloka lays down authorities on the matter of dharma.

"वेद: ऋगयजु:सामाथर्व्वलक्षण:" ऋग्वेद: यजुर्व्वेद: सामवेद: अथर्व्ववेदश्च इति चत्वारोवेदा वेदशब्देन अत्र ग्राह्या इति कुल्लूकाशय:।

Veda consisting of Rik, Joyush, Sam and Atharba is authority on dharma.

"सर्व्वो विध्यर्थवादमन्त्रात्मा" अखिलशब्दस्य अर्थमाह सर्व्व इति। तं विशदयति विध्यर्थवादमन्त्रात्मा वेदस्य त्रयो भागा विधि: स्वर्गकामोयजेत इतिरूप:, अर्थवाद: विधे: प्रशंसा सर्व्वमायुरेति ज्योग्जीवति य एवं कुर्य्यात् इतिरूप: मन्त्रात्मा इन्द्रमीळे इत्यादिरूप:। अखिलशब्देन एतत् विभागसमन्वितो वेद: प्रमाण मित्यर्थ: बोध्यते।

The word अखिल: (सर्व्व:) (whole) includes parts containing injunctions, praise and hymns.

"धर्म्ममूलं प्रमाणम्" मूलशब्दस्य अर्थमाह प्रमाणमिति।

"अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्म्मे प्रामाण्यात्।" यजेत इत्यादि विधिवाक्यानि प्रमाणानि भवन्तु प्रशंसावाक्यानां अर्थवादानां कथं प्रामाण्य मित्याह, अर्थवादानां प्रशंसावाक्यानां अपि प्रामाण्यं अस्ति। कथं? उत्तरमाह विध्येकवाक्यतया स्तावकत्वेन एवं कुर्य्यात् इति विधि:, तत: य एवं करोति स स्वर्गं याति इति अर्थवाद:। फलकीर्त्तनं हि विधिवाक्यस्य प्रशंसा। सा च विधिवाक्येन सह एकवाक्यताज्ञापिका, अर्थात् अर्थवादस्य वक्ता यदि विधिवाक्यं न अनुमोदेत तदा कथं विधिं प्रशंसेत्? तस्मात् अर्थवाद: अपि विधिवाक्यमेव। तस्मात् अर्थवादस्य प्रामाण्यम्।

"यदाह जैमिनि: विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु:।" (This is a Jaimini sutra). Kulluka explains it "मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतया एव धर्म्मे प्रामाण्यम्" the hymns and the laudatory portions also are authorities. विधिवाक्यैकवाक्यतया by reason of their unanimity with injunctions. "प्रयोगकाले च अनुष्ठेयस्मारकवेदस्य धर्म्मे प्रामाण्यं यथानुभवकरणत्वरूपन्यायसिद्धम्।" The hymns are authorities because such vedas remind the duties during the time of their application, as one acts according to his past experience.

अयंभाव:—विधिवाक्यं हि एवं कुर्य्यादिति अनुष्ठानविधायकत्वात् प्रमाणम्। अर्थवादानां विधिवाक्यस्य प्रशंसनात् एकवाक्यतया प्रामाण्यम्। अनेन मन्त्रेण एतत्

अनुष्ठितं भवतीति मन्त्रेण अनुष्ठानं अर्थ्यते, ततः क्रियते, तस्मात् मन्त्रा अपि कर्त्तव्य-वाचकविधिवाक्येन सह ऐकवाक्यात् प्रमाणम् भवति अर्थात् येन वेदवाक्येन किमपि कर्म्म न उपदिश्यते तत् वाक्यं अप्रमाणमिति जैमिनिमतम्। विधिवाक्येन यज्ञादिरूपं कर्म्म उपदिश्यते तत् क्रियते च अतो विधिवाक्यं एव प्रमाणम्। अर्थवादाः प्रशंसा-परत्वात्, मन्त्राः स्मारकत्वात् विधिवाक्यस्य सहायाः अतः तन्मूलाः तस्मात् प्रमाणम्।

वेदो हि द्विधा विभक्तः। मन्त्रः ब्राह्मणञ्च। ऋचोयजूंषि च मन्त्राः। तयोरेव गीतप्रधानम् साम इति अभिचारादिप्रधानः आथर्व्वणः इति।

विध्यर्थवादमयोब्राह्मणः। वेदस्तस्मात् मन्त्रब्राह्मणात्मकः। Vide Sayan's Introduction to Rigveda. ब्राह्मणस्य च विध्यर्थवादपरत्वात्, "वेदः मन्त्र-ब्राह्मणार्थवादात्मा" इत्युक्तं कुल्लूकेन, तस्य वेदस्य चतुर्धा विभजनात् ऋग्यजुः-सामाथर्व्वलक्षण इति चोक्तम् कुल्लूकभट्टैः।

"स्मृत्यादीनां अपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थं अनूद्यते।

स्मृत्यादीनां स्मृतिः आदिर्येषां तेषां स्मृतीतिहासपुराणानाम् अपि तन्मूलत्वेन सः वेदः एव मूलं येषां ते तन्मूला तेषां भावः तेन हेतुना एव नतु अन्येन हेतुना प्रामाण्यप्रतिपादनार्थं प्रामाण्यस्य प्रतिपादनं साधनं तस्मै अनूद्यते प्रमाणान्तरेण अवगतं पुनः अत्र कथ्यते।

"मन्वादीनां च वेदविदां स्मृतिधर्म्मप्रमाणम्। वेदविदामिति विशेषणोपादानात् वेदमूलकत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतम्।"

मन्वादयो हि वेदविदः वेदज्ञाः। तेषां स्मृतिः वेदमूलत्वात् हेतोः प्रमाणम्।

"शीलं ब्रह्मण्यतादिरूपम्।"

शीलशब्देन स्वभावो न बुध्यते किन्तु ब्रह्मण्यतादिरूपं हारीतोक्तं त्रयोदशप्रकारं आचरणं अत्र शीलशब्दार्थः।

"तदाह हारीतः ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्"।

हारीतो मुनि स्तत् त्रयोदशविधं शीलमाह तत् यथा ब्रह्मण्यता ब्रह्मणे ब्राह्मणाय हितः ब्रह्मण्यः। ब्राह्मणोचितकर्म्मकारिता। देवपितृभक्तता देवेषु पितृषु च भक्तिमत्ता। सौम्यता मनोज्ञता agreeableness. अपरोपतापिता परान् अन्यान् उपतापयति क्लिश्नातीति परोपतापी न परोपतापी अपरोपतापी तस्य भावः। अनसूयता असूया गुणेषु दोषारोपः न विद्यते असूया यस्य स अनसूयः तस्य भावः। मृदुता कोमलता नम्रता। अपारुष्यम् अकर्कशव्यवहारिता। मैत्रता मैत्रः मित्रताशाली तस्य भावः। प्रियवादित्वम् अनुकूलभाषित्वम्। कृतज्ञता कृतं जानातीति कृतज्ञः grateful.

शरण्यता शरण्यः शरणे रक्षणे साधुः शरण्यः तस्य भावः। कारुण्यम् कृपावत्त्वम्। प्रशान्तिः शमः चित्तस्य क्षोभाभावः। एतत् त्रयोदशविधं शीलं एतदपि धर्मस्य मूलम्।

"गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह।"

गोविन्दराजो हि शील शब्दस्य रागद्वेषपरित्यागः अर्थ इत्याह। तत् न सम्यक् इति भावः। कथं? शीलशब्दस्य रागद्वेषत्यागरूपः अर्थः कुत्रापि न दृश्यते, अपि च तथा व्याख्याने हारीतेन सह विरोधः स्यात् तत् न शोभनम्। मनुना सह हारीतस्य एकवाक्यत्वात्। मुनिकृतव्याख्यानस्य प्रामाण्यात्।

"आचारः कम्बलवल्कलाद्याचरणरूपः"।

आचारशब्देन कम्बलधारणं वल्कलधारणं इत्यादिरूपं धार्म्मिकाणामाचरणं गम्यते।

"साधूनां धार्म्मिकाणाम्"—साधुशब्दस्य धार्म्मिकोऽर्थः।

"आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्म्मे प्रमाणम्। तदाह गर्गव्यासः वैकल्पिके आत्मतुष्टिः प्रमाणम्।"

आत्मतुष्टिशब्दस्य न तुष्टिमात्रम् अर्थः किन्तु शास्त्रोक्तविधिवाक्येषु यत्र विकल्पः दृश्यते यथा एवं कुर्य्यात् एवं वा कुर्य्यात् इति वाक्ये विधिद्वयं अस्ति तत्र यस्मिन् कल्पे इच्छा भवति स आत्मतुष्टिविषयः सः अपि धर्म्मे प्रमाणम्। तत्र गर्गव्यासस्य वचनं पठति वैकल्पिके विकल्पविधिविषये यस्मिन् आत्मतुष्टिरिच्छा भवति तस्याचरणं धर्म्मः। एकस्मिन् मन्वन्तरे गर्गो नाम मुनिर्व्यासाख्यां लभते यथा अस्मिन् वैवस्वते मन्वन्तरे द्वैपायनो मुनिर्व्यासः सञ्जातः। व्यासशब्देन वेदविभागकर्त्ता अवगम्यते।

PURPORT.—धर्म्मविषये पञ्च प्रमाणानि सन्ति तानि दृष्ट्वा धर्म्मं कुर्य्यात्। पञ्च प्रमाणानि यथा चत्वारो वेदाः विधिमन्त्रार्थवादसहिताः, मनुव्यासप्रभृतीनां वेदज्ञानां स्मृतिशास्त्राणि, तेषां हारीतोक्तं त्रयोदशविधं शीलम्, वेदोक्तधर्म्माचरणवतां जनानां कम्बलवल्कलपरिधानादिरूपं आचरणं, शास्त्रे यत्र एकाधिकाः विकल्पिता व्यवस्थाः सन्ति तासां मध्ये यत्र मनस्तुष्यति तस्याः अनुसरणम्। एवं पञ्चविधानि धर्म्मस्य प्रमाणानि॥ ६॥

MEANING IN ENGLISH.—The authorities on dharma are the following, viz. (1) The vedas (including injunctions, hymns and the laudatory portions), (2) the ordinances and (3) thirteen moral practices (as described by Harit), of those who understand them, (4) the custom of men who practise duties enjoined by the vedas, (5) and self-satisfaction in cases where option is permitted.

ELUCIDATION. – The first sloka gives a definition of dharma; here we get the authorities on dharma so defined. Dharma is a system of duty enjoined by the vedas and conducive to welfare. (1. II Manu). In practising dharma we are to be guided by the vedas, and the ordinances and moral practices of those who know the vedas, and who act according to them.

The word आत्मनस्तुष्टिः or आत्मतुष्टिः is misleading. It does not mean that "self-satisfaction" is the standard of dharma in every case; for in that case, self-satisfaction of a particular individual may prevail over vedic injunctions, and a heretic may claim to be a greater authority than the vedas themselves on the ground of self-satisfaction or individual conscience. Here it is limited. विकल्पविषये आत्मतुष्टिः self-satisfaction or one's own inclination is to be allowed only where option is permitted by the texts. The words सत् and साधु are also liable to be misinterpreted. They mean in the text not pious men (which is a secondary meaning only) but men scrupulously discharging the duties enjoined by the Vedas and Smritis. सत् and साधु means धार्म्मिक which means one who practises धर्म्म or duties enjoined by the sastras. The Smriti of Panini lays down "धर्म्मं चरति" *i.e.* ठक् is to be affixed to the word धर्म्म to signify that one ( चरति ) practises ( धर्म्मम् ) duties enjoined by the vedas. The Grammar of Panini is styled as a Smriti or dharmashastra written by one who knew the vedas. You will get application of Panini's grammar or Smriti later on in this chapter, to supplement the precepts of Manu. No other grammar is a Smriti in the sense in which Manu is a Smriti; because they are written by men not initiated in the vedic mysteries; a man when so recognised becomes a ऋषि like Panini, Vyas, Katyayana etc. etc. The other treatises on grammar such as मुग्धबोध, कातन्त्र, सारस्वत, संक्षिप्तसार, सुपद्म etc. etc. are mere hand-books

or compilation by learned pandits only, whose language is neither sacred, nor capable of interpreting the Vedas or the sacred texts of the sages. Thus if you repeat any of the sutras of Panini it is held to be productive of a certain quantity of merit (पुण्य) just like the repetition of a stanza of the Vedas, the Ramayana or the Mahabharat. But repetition of a sutra of other grammars will not do it. The supreme importance and sacred character of Panini become evident to any Hindu mind on a closer study ; it is the basis on which the whole fabric of the sacred literature has been built. The Panini Sutras on कृत्, तद्धित, कारक, समास make this point very clear. In fact no one can rely on any non-Panini sutra in the interpretation of classical sanskrit without utmost diffidence.

GRAMMATICAL NOTES. (*a*) On the text.—1. वेदः—विद्—णिच्+अच्। (१) वेदयति उपायं इष्टप्राप्त्यनिष्टवर्जनयोरुपायं इति वेदः। (२) अथवा वेद्यन्ते ज्ञाप्यन्ते ईश्वरेण धर्मार्थकाममोक्षाः अनेन वेदः। प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एवं वदन्ति वेदेन तस्माद् वेदस्य वेदता। इति। विद्—वेत्ति वित्तः विदन्ति। or वेद विदतुः विदुः। विवेद विदाञ्चकार अवेदीत्। Its विधेय-विशेषणम् is धर्म्ममूलम्। 2. अखिलः—न खिलः अखिलः नञ् समासः। Qualifies वेदः। 3. तद्विदाम्—तं विदन्तीति तद्विदः। तद्—विद्+क्विप्। उपपद समासः। शेषे षष्ठी। 4. स्मृतिशीले—स्मृतिः स्मरणं वेदपाठजनित-संस्काररूपेण स्थितं संहितादिरूपम्। तच्च शीलं च हारीतोक्तम् स्मृतिशीले। इतरे-तर द्वन्द्वः। Same case with धर्म्ममूलम्। 5. साधूनाम्—सिध—णिच् उण् साधुः। शेषे षष्ठी। 6. आचारः—Same case with धर्म्ममूलम्। आङ्—चर+घञ्। अचार अचारीत्। 7. आत्मनः — कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी कृद्योगा। तुष्टिरित्यनेन अन्वयः अत+मनिन् आत्मा। 8. तुष्टिः—तुष+क्तिन् भावे। तुष्यति तुतोष अतुषत्। Same case with धर्म्ममूलम्। 9. धर्म्ममूलम्—धर्म्मस्य मूलम् धर्म्ममूलम्। षष्ठी समासः। विधेय विशेषणम् of (1), (4), (6), (8). 10. एव—अवधारणार्थे अव्ययम्।

CHANGE OF VOICE.—वेदेन......स्मृतिशीलाभ्यां......आचारेण...तुष्ट्या च धर्म्ममूलेन भूयते। ६।

BENGALI.—সমস্ত অর্থাৎ বিধি মন্ত্র ও অর্থবাদসমন্বিত ঋক্ যজুঃ সাম ও অথর্ব্ব

বেদ, মনু ব্যাস প্রভৃতি বেদজ্ঞগণের রচিত স্মৃতি ও হারীতোক্ত ত্রয়োদশ প্রকার শীল, ধার্ম্মিকগণের কম্বল বল্কলধারণাদিরূপ আচরণ, এবং বিকল্পবিধিস্থলে যে কল্পের আচরণে মনের তুষ্টি হয় সেই কল্পের আচরণ, এই সমুদয় ধর্ম্মবিষয়ে প্রমাণ বলিয়া জানিবে। (অর্থাৎ ধর্ম্ম আচরণ করিতে হইলে এই সকল অনুসরণ করিতে হয়)॥ ৬॥

The entire veda is the authority regarding *dharma* or duty; so also the memory or tradition and the practice of those who know it; and also the custom of the good, and the satisfaction of one's own self (*i.e.* approbation of conscience). (6).

य: कश्चित् कस्यचिद्धर्म्मो मनुना परिकीर्त्तित:।
स सर्व्वोऽभिहितो वेदे सर्व्वज्ञानमयो हि स:॥ ७॥

PROSE. – मनुना य: कश्चित् कस्यचित् धर्म्म: उक्त: स: सर्व्व: वेदे अभिहित:, हि स: सर्व्वज्ञानमय:। ७।

KULLUKA. – वेदादन्येषां वेदमूलत्वेन प्रामाण्योऽपि मनुस्मृते: सर्व्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह य: कश्चिदिति। य: कश्चित् कस्यचिद्ब्राह्मणादेर्मनुना धर्म्म उक्त: स सर्व्वो वेदे प्रतिपादित: यस्मात् सर्व्वज्ञोऽसौ मनु: सर्व्वज्ञतया च उत्सन्नविप्रकीर्णपठ्यमानार्थं सम्यक् ज्ञात्वा लोकहिताय उपनिबद्धवान्। गोविन्दराजस्तु सर्व्वज्ञानमय इत्यस्य सर्व्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह॥ ७॥

KULLUKA EXPLAINED.—"वेदादन्येषां वेदमूलत्वेन प्रामाण्योऽभिहितेऽपि मनुस्मृता: सर्व्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह य: कश्चिदिति।"

वेदात् ऋग् यजु: सामाथर्व्वनामकात् अन्यारादिति पञ्चमी अन्येषां मनुव्यासादिरचितानां शास्त्राणां वेदमूलत्वेन वेदमूलकतया हेतुना प्रामाण्यं प्रमाणयोग्यत्वे अभिहिते पूर्व्वश्लोकेन उक्ते अपि मनुव्यासादिप्रणीतस्मृतीनां मध्ये मनुस्मृते: मनुप्रणीतस्मृतिशास्त्रस्य सर्व्वोत्कर्षज्ञापनाय सर्व्वासु स्मृतिषु उत्कर्ष: श्रेष्ठता तस्य ज्ञापनाय ख्यापनाय अर्थात् सर्व्वासु स्मृतिषु मध्ये मनुस्मृति: सर्व्वश्रेष्ठा इति प्रदर्शयितुं विशेषेण आधिक्येन मनुस्मृते: वेदमूलता वेदात्मकता आह मनु: य: कश्चिदिति श्लोके। It should be noted that the Smriti of Manu is here being recited by Bhrigu. (Vide 59th and the 60th Slokas, Chapter I.).

"कस्यचित् ब्राह्मणादे:"

कस्यचित् इति शब्दस्य अर्थमाह ब्राह्मणादेरिति। धर्म्मो हि ब्राह्मणादेर्वर्णस्य ब्रह्मचर्य्यादेराश्रमिणश्च *i. e.* one in order to practise dharma must be either a Brahmin, Kshatriya, Vaishya or Sudra or a mixed caste

accepted by the law and authorized to follow the dharma of any of the four castes according to the text. Even that will not suffice ; a man in order to practise dharma must either be a ब्रह्मचारी, गृहस्थ, वानप्रस्थ or भिक्षु। A Brahmin who cannot be brought under any of the four stages mentioned, has no right to practise dharma. Therefore the vedic religion is called वर्णाश्रमधर्म। One must belong to one of the four castes and stages in order to be entitled to practise dharma. Therefore Kulluka says "कस्यचित् = ब्राह्मणादेः" *e.i.* धर्म must be prescribed for one of the four castes, and for one of the four stages, and not to an outsider.

"मनुना धर्म्म उक्तः स सर्व्वो वेदे प्रतिपादितः"

मनुना स्वकीयसंहितायां यस्य सम्बन्धे यो धर्म्मः विहितः स स सर्व्वः धर्म्मः तदनुसारेण वेदे अपि प्रतिपादितः स्थापितः अस्ति। वेदज्ञेन भगुणाएतदुक्तम्।

"यस्मात् सर्व्वज्ञोऽसौ मनुः" हि शब्दस्य अर्थमाह यस्मात् इति। सर्व्वज्ञानमयः इति पदस्य अर्थमाह सर्व्वज्ञ इति। "असौ मनुः" भगुर्हि सम्मुखस्थितेभ्यः मुनिभ्यः उपविष्टं स्मृतिकारं मनुं दर्शयन् आह असौ साक्षात् अवतारभूपः मनुः यत् कथयति तदेव वेदसम्मितमिति कुल्लूकाशयः।

"सर्व्वज्ञतया च उत्सन्न विप्रकीर्ण पठ्यमान वेदार्थं सम्यक् ज्ञात्वा लोकहिताय उपनिबद्धवान्"।

ननु भवतु मनुर्नाम सर्व्वज्ञ स्तेन प्रस्तुते विषये किं आयातम्? तदुत्तरमाहुः कुल्लूकभट्टा :—

सर्व्वज्ञतया हेतुना असौ मनुः उत्सन्न-विप्रकीर्ण-पठ्यमान वेदार्थं उत्सन्नाः ये वेदभागा विलुप्ताः ते, विप्रकीर्णाः सर्व्वतो विक्षिप्ताः न ग्रहीतुं शक्याः, पठ्यमानाः ये वेदभागाः अधुनाऽपि ग्रन्थाकारेण पठ्यन्ते, ते सर्व्वे वेदाः तेषां अर्थं वक्तव्यं वस्तु सम्यक् ज्ञात्वा अवगम्य लोकहिताय लोकानां उपकाराय उपनिबद्धवान् स्मृतिरूपेण समाहृतवान् तस्मात् वेदस्य अंशविशेषाणां नष्टभ्रष्टत्वेऽपि लोकानां न क्षतिः सर्व्वस्य एव वेदार्थस्य मनुना स्वग्रन्थे उपनिबद्धत्वात्। चेदयं सर्व्वज्ञो न भवेत् तदा सर्व्ववेदार्थसंग्रहो न स्यादिति कुल्लूकाशयः।

It is said that Rigveda had 21, Yayurveda 109, Samaveda 1000, Atharva 9 sakhas. Now we have altogether 6 or 7 sakhas only. Thus what we have is an insignificant part of

the whole veda as it was. Manu gives us the substance of the whole veda as it existed at the beginning. Thus according to the orthodox view the treatise of Manu is now more valuable than the existing vedas in point of vedic injunctions.

"गोविन्दराजस्तु सर्व्वज्ञानमय इत्यस्य सर्व्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह।"

गोविन्दराजः कश्चिट्टीकाकृत् तु सर्व्वज्ञानमय इति पदस्य वेदविशेषणताम् श्लोकोक्त वेदशब्दस्य नतु मनोर्विशेषणतां आह। अर्थात् तन्मते सः वेदः सर्व्वज्ञानमयः सर्व्वज्ञानेन आरब्ध इत्याह। *i. e.* according to Kulluka सर्व्वज्ञानमयः हि सः means "Manu is omniscient." But according to Govindaraja it means सः (वेदः) सर्व्वज्ञानमयः (सर्व्वज्ञानारब्धः) = The veda was commenced (to be written) with omniscience. Govindaraja's explanation is therefore very poor.

PURPORT—सर्व्वासु स्मृतिषु मनोः स्मृतिः श्रेष्ठा यतः सा अन्याभ्यः स्मृतिभ्यः अधिकतरं वेदमूला। यस्य वर्णस्य यो धर्म्मो मनुना कथितः तस्य वर्णस्य स एव धर्म्मः वेदेन अपि उक्तः यतः स मनुः सर्व्वज्ञत्वात् स नष्टभ्रष्टविद्यमानान् सर्व्वान् वेदभागान् ज्ञात्वा स्मृतिं प्रणीतवान्। अतो मनुस्मृतिः सर्व्वोत्कृष्टा॥ ७॥

MEANING IN ENGLISH.—Whatever law has been ordained for any caste by Manu, that has been fully laid down in the vedas; for he was omniscient; (and therefore knowing fully all parts of the vedas whether lost, scattered or extant reduced their purport to writing for the benefit of all.)

ELUCIDATION.—"सर्व्वज्ञानमयो हि सः" Govindaraj and (Medhatithi too) explain सः as वेदः। The natural construction leads to that interpretation. But there is no doubt that Kulluka's interpretation is better and more to the point.

GRAMMATICAL NOTES.—(*a*) On the text.—**1.** यः कश्चित्—Qualify धर्म्मः (=whatever). **2.** धर्म्मः—उक्तं कर्म्म of परिकीर्त्तितः, धृ+मन्। धरति दधाति धारयति वा धर्म्मः। **3.** कस्यचित्—शेषे षष्ठी। कारकप्रातिपदिकार्थव्यतिरिक्तः सम्बन्धः शेषः। कस्यचित् अनुक्तेयत्वेन सम्बन्धः षष्ठ्यर्थः। कस्य + चित्। किम् + ङस्। **4.** मनुना—कर्त्तरि तृतीया।

5. परिकीर्त्तितः – परि – कृत्—णिच् + क्तः कर्म्मणि। कृत् संशब्दे इति चुरादिः। कृत् – णिच् तिप् – कीर्त्तयति। उपधायाश्च इति इत् रपरत्वम् उपधायां च इति दीर्घः। कीर्त्तयति। अचीकृतत् अचिकीर्त्तत्। 6. सः – Qualifies सर्व्वः। 7. सर्व्वः – उक्तं कर्म्म of अभिहितः। 8. अभिहितः – अभि – धा + क्तः कर्म्मणि। धाञ् दधाति धत्ते। दधौ दधे। अधात् अधित। 9. वेदे – अधिकरणे सप्तमी। विद + घञ्। विद्णिच् + अच्। वेत्ति वेद। conjugated. 10. सः refers to मनुः in मनुना। 11. हि – हेतौ। यस्मात् इत्यर्थः। अव्ययम्। 12. सर्व्वज्ञानमयः – सर्व्वं ज्ञानं or सर्व्वस्य ज्ञानम् सर्व्वज्ञानम्। कर्म्मधारयः षष्ठी समासो वा। सर्व्वज्ञान + मयट्। ज्ञा + ल्युट् ज्ञानम्। जानाति अज्ञासीत्।

CHANGE OF VOICE. – येन केनचित् धर्म्मेण......परिकीर्त्तितेन भूयते तेन सर्व्वेण......अभिहितेन भूयते तेन सर्व्वज्ञेन भूयते ॥ ७ ॥

BENGALI.—মনু যে বর্ণের জন্য যে ধর্ম্ম নির্দ্দেশ করিয়াছেন, সেই সমস্তই বেদে প্রতিপাদিত আছে; কেননা মনু সর্ব্বজ্ঞ, তিনি উৎসন্ন, বিকীর্ণ ও বিদ্যমান বেদাংশ সকলের অর্থ সম্পূর্ণরূপে অবগত হইয়া লোকের হিতার্থে তাহা স্মৃতির আকারে উপনিবদ্ধ করিয়াছেন ॥ ৭ ॥

ENGLISH.—What so ever duty or *Dharma* was declared by Manu (as binding upon) any one, all that is mentioned in the Veda for he was possessed of all knowledge.( 7 ).

**सर्व्वन्तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुतिप्रामाण्यतो विद्वान् स्वधर्म्मे निविशेत वै ॥ ८ ॥**

PROSE. – विद्वान् तु इदं सर्व्वं ज्ञानचक्षुषा निखिलं समवेक्ष्य श्रुतिप्रामाण्यतः स्वधर्म्मे निविशेत वै ॥ ८ ॥

KULLUKA. सर्व्वं त्विति सर्व्वं शास्त्रजातं वेदार्थावगमोचितं मीमांसाव्याकरणादिकं ज्ञानमेव चक्षुस्तेन निखिलं तद्विशेषेण पर्य्यालोच्य वेदप्रामाण्येनानुष्ठेयं मवगम्य स्वधर्म्मे अवतिष्ठेत ॥ ८ ॥

KULLUKA EXPLAINED. – सर्व्वम् इत्यस्य अभिप्रायमाह शास्त्रजातं शास्त्रसमूहमित्यर्थः। ज्ञानचक्षुषा इत्यत्र ज्ञानशब्दस्य अर्थमाह "वेदार्थावगमोचितं मीमांसाव्याकरणादिकम्" वेदार्थस्य अवगमः बोधः तत्र उचितं अर्थात् वेदार्थप्रकटीकरणसमर्थं मीमांसाव्याकरणादिकम् तद्विषयकं ज्ञानमेव ज्ञानम् तदेव चक्षुस्तेन। मीमांसाशब्देन वेदार्थव्याख्यानपरं पूर्व्वमीमांसारूपं जैमिनीयदर्शनमत्राभिप्रेतं उत्तरमीमांसायाः कर्म्म-

काण्डे अप्रयोजकत्वात्। व्याकरणं पाणिनीयं एव तस्यैव श्रीमन्माधवाचार्य्यादिभि: वेदाङ्गत्वेन प्रतिपादितत्वात् वेदार्थज्ञाने पूर्व्वमीमांसा पाणिनीयं व्याकरणं सवार्त्तिकभाष्यं प्रधानं साधनम् निरुक्तादयश्च गौण मेव। तस्मादाह मीमांसेत्यादि। "वेद प्रामाण्यत:" इत्यस्यार्थमाह "वेद प्रामाण्येन अनुष्ठेयं ( कर्त्तव्यं कर्म्म ) अवगम्य" अर्थात् वेदात् वेदमूलकाच्च शास्त्रात् कस्य वर्णस्य किं कर्त्तव्यं कर्म्म इति निश्चित्य। "निविशेत" इत्यस्य अर्थमाह: "अवतिष्ठेत" इति। नि पूर्व्वक विशधातो: प्रवेशोऽपि अर्थ: किन्तु अत्र अवस्थानं अनुष्ठानं एव अर्थ:। अयं भाव: ब्रह्मा हि सृष्टिकाले वेदं दृष्ट्वा तदुक्तक्रमेण सृष्टिं चकार स्वभावं कर्म्म च ददौ तेन ब्राह्मण: स्वभावेन धर्म्मे प्रविष्ट एव। तत्र अवस्थानन्तु तस्य कठिनं रागद्वेषाभ्यां विचलितत्वात्। तत्र अवस्थानार्थं शास्त्रदृष्ट्या एवं कुर्व्वीत इति कुल्लूकभट्टानां आशय:। अत्र विद्वान् ब्राह्मण: क्षत्रिय: वैश्य इति त्रवर्णिक एव नतु शूद्र: तस्यानधिकारात्। उक्तञ्च वशिष्ठेन "एतच्छास्त्रं यच्छूद्रत्वात् शूद्रसमीपे नाध्येतव्यम्। न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम्। न चास्योपदिशेद्धर्मं न चास्यव्रतमादिशेत्" इति। तस्मात् क्षत्रियवैश्यपरम्परया ब्राह्मणात् शूद्रस्य धर्म्मग्रहणम् ब्राह्मणं पुरस्कृत्य वा शूद्रं प्रत्युपदेश: इति दिक्। तस्माद् विद्वान् मुख्य: त्रैवर्णिक एव नतु शूद्र उपचाराद् शूद्रोऽपि वा।

PURPORT.– विद्वान् जन: मनुकृतं शास्त्रं तन्मूलं वेदं च मीमांसाव्याकरणादि शास्त्रपाठजनित ज्ञानेन सम्यक् पर्य्यालोच्य वेदोक्तप्रमाणेन कर्त्तव्यं स्थिरीकृत्य स्वधर्म्मे अवस्थानं कुर्य्यात्॥ ८॥

MEANING IN ENGLISH.– A learned man after fully scrutinising all the shastras with the eye of knowledge *i. e.* with the help of Mimansa, Grammar &c. &c. and after knowing his duty on the authority of the vedas, should be firmly intent on his own duties.

ELUCIDATION.– श्रुतिप्रामाण्यत:– A learned man is to know his duties on the authority of the revealed texts. स्वधर्म्मे निविशेत = is to be intent on the performance of his duties = shall not slip from his duties = shall continue to perform his duties. इदम् सर्व्वम् refers to all the shastras. ज्ञानचक्षु:– ज्ञान here refers to the knowledge of Mimansa, Grammar &c. which help us in understanding the vedas and the other shastras.

GRAMMATICAL NOTES.– (*a*) On the text.– 1. इदम्– Qualifies सर्व्वम्। It refers to the text of Manu and such other texts.

2. सर्व्वम् – कर्म्मणि द्वितीया। Acc. of समवेत्य। 3. समवेत्य – सम – अव – ईक्ष + ल्यप्। ईक्षने ऐक्षिष्ट। 4. ज्ञानचक्षुषा – ज्ञायते अनेन इति ज्ञानम्। ज्ञा + ल्युट् करणे। ज्ञानमेव चक्षुः रूपककर्म्मधारयः। तेन – करणे तृतीया। 5. निखिलम् – नि निहतं खिलं अप्रहतं स्थानं यस्मिन् तद् यथास्यात् तथा बहुव्रीहिः। Adv. added to the verb समवेत्य। 6. श्रुतिप्रामाण्यतः – प्रमीयते अनेन इति प्रमाणम्। प्रमाणस्य भावः प्रामाण्यम् श्रुतेः प्रामाण्यम् श्रुतिप्रामाण्यम्। श्रुति प्रामाण्य + तसिल् तृतीया स्थाने। प्रकृत्यादिभ्य उपसंख्यानमिति करणत्वात् तृतीया। श्रु + क्तिन् = श्रुति। 7. विद्वान् – Nom. to the verb निविशेत। 8. स्वधर्म्मे—स्वः धर्म्मः स्वधर्म्मः। तस्मिन्। अधिकरणे सप्तमी। 9. निविशेत—नि—विश + विधिलिङ् इत। नेर्विश इत्यात्मनेपदम्। कविचन।

CHANGE OF VOICE. – विदुषा......निविश्येत। ८।

BENGALI.—বিদ্বান্ ব্যক্তি মীমাংসা ও ব্যাকরণাদি বেদার্থবোধক শাস্ত্ররূপ জ্ঞানের নেত্রে বেদাদি শাস্ত্রসকল উত্তমরূপে পর্য্যালোচনা করত বেদকে প্রমাণস্থলে রাখিয়া কর্তব্য নিরূপণ পূর্ব্বক স্বধর্ম্মে অবস্থান করিবে ॥ ৮ ॥

ENGLISH—Having surveyed all this thoroughly with the eye of knowledge as in accordance with the authority of the *Sruti* or revelation, a learned man should assuredly stick to his own line of duty or *Dharma*. (8)

श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ॥ ९ ॥

PROSE. – मानवः श्रुतिस्मृत्युदितं धर्म्मं अनुतिष्ठन् इह कीर्त्तिं प्रेत्य च अनुत्तमं सुखं अवाप्नोति हि ॥ ९ ॥

KULLUKA.—श्रुतिस्मृत्युदितमिति। श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् मानवः इहलोके धार्म्मिकत्वेनानुषङ्गिकीं कीर्त्तिं परलोके च धर्म्मफलमुत्कृष्टं स्वर्गापवर्गादिसुखरूपं प्राप्नोति, अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठेदिति विधिः कल्प्यते ॥ ९ ॥

KULLUKA EXPLAINED. – "परलोके च धर्म्मफलं उत्कृष्टं स्वर्गापवर्गादिसुखरूपं लभते"।

"इह" इति पदेन परत्र यत् भवेत् तदप्युक्तं इति। प्रेत्य शब्दस्य भावार्थमाह परलोके इति। अनुत्तम शब्दस्य अर्थमाह उत्कृष्ट मिति। सुखशब्दस्य अर्थमाह

धर्म्मफलं स्वर्गापवर्गादि सुखरूपम् परलोके यत् सुखं तत् धर्म्मस्य फलम्। तत्फलं वर्षयति स्वर्गश्च अपवर्गः मोक्षश्च तौ आदि यस्य तत् लभते इत्यर्थः। धर्म्मो हि नाम कर्म्मविशेषः। कर्म्मणि कृते सति कर्म्म नश्यति तस्मात् फलं दातुं न शक्नते। किन्तु कर्म्मसमकालं एव अपूर्व्वाख्यं अदृष्टाख्यं वा वस्तु जायते तच्च बीजरूपेण तिष्ठति यथा बीजं मृत्तिकावर्षवारिप्रभृतियोगं प्राप्य अङ्कुरायते तथा अदृष्टाख्यं बीजमपि यथाकालं अङ्कुरायते फलञ्च ददाति। तत् फलं स्वर्गादि। अत उक्तं भट्टैः "धर्म्मफलं स्वर्गापवर्गादि सुखम्"।

"अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठेत् इति विधिः कल्प्यते।"

अनेन पूर्व्वोक्तेन वास्तवगुणकथनेन वस्तुन अर्थं वास्तवः यथार्थः सत्य इति यावत् वास्तवश्चासौ गुणश्च वास्तवगुणः स्वर्गसुखरूपः तस्य कथनेन वर्णनेन श्रुतिस्मृत्युदितं वेदोक्तं स्मृत्युक्तञ्च धर्म्मं अनुतिष्ठेत् आचरेत् इति विधिः प्रवर्त्तना कल्प्यते अनुमीयते अव अस्तीति ज्ञायते।

This sloka describes the benefit arising from the performance of dharma. Kulluka says that these benefits described here are real and not fanciful or imaginary. Therefore we should imagine an injunction in this verse to the effect "A man must practise duties which are enjoined by the vedas and Smritis." The argument is this :—This treatise is supposed to contain the germs of all injunctions, positive or negative, regarding the performance of dharma. A sloka contains either an injunction ( विधिः ) or praise ( अर्थवादः )। Injunction is generally given in the form of विधिलिङ्। Here nothing of that nature is found. Here we have only the benefits described. These benefits are real and not mere hyperbolical expressions. An injuction to follow the sacred law of the vedas and the Smritis is not found elsewhere within the four corners of Manu. But such an inju nction is necessary, otherwise people will not follow the duties prescribed by the vedas and the Smritis. Kulluka therefore catches hold of this verse and lays down that this is the sloka which lays down such an injunction in a disguised form. Thus we get a desired injunction within the four corners of Manu itself, though not so explicit.

Therefore Kulluka asserts, "अनेन श्रुतिस्मृत्युदितं धर्म्मं अनुतिष्ठेत् इति विधिः कल्प्यते।"

अयं भावः—श्रुतिस्मृत्युदितं धर्म्मं आचरेत् इति विधिं विना न कोऽपि तं धर्म्मं आचरिष्यति। स च विधिर्मनुस्मृतावेव प्राप्तव्यः न च स विधि र्विधिलिङ्समन्वितः मनुवाक्येषु दृश्यते। अपि च स विधिर्मनुस्मृतौ अस्त्येव, एतद्विधिमूलकत्वात् सर्व्वविधीनां। अस्मिन् वचने हि श्रुतिस्मृतिविहितधर्म्मस्य सत्याः गुणाः वर्ण्यन्ते नान्यत्र। तेन च गुणवर्णनेन अर्थवादरूपेण विधिरायाति नतु अर्थवादः अर्थवादेषु स सर्व्वमायुरेति इत्यादिवत् अतिशयोक्तिमुखेन वर्णनं स्यात्, अत्र तु वास्तवगुणोक्तिः तस्मात् अत्र श्रुतिस्मृत्युदितं धर्म्मं आचरेत् इति विधिकल्पना युक्ता। Without such an injunction no one would practise the duties prescribed by the Vedas and the Smritis. Thus we assume that the verse contains an injunction.

The injunction is really essential. Omit this injunction, and the vedic dharma becomes optional. One may then follow the duties enjoined by the Jainas, Boudhas, Charvakas, and other forms of false tenets with impunity. The injunction has also great value as contributing to the suppression of vices practised under the so-called authorities of a number of Tantras, prohibited by the sacred laws of the Vedas and the Smritis.

After indicating a number of Tantras as calculated to confound the people, Raghunandan the great Professor of Law in Bengal lays down :—

"तस्मात् श्रुतिस्मृतिविरुद्धे वर्त्मनि पदात् पदमपि न दातव्यम्"

Therefore the ways prohibited by the Vedas and Smritis should never be trodden, even a single step.

A tradition of a great struggle between the followers of the sacred law, and those of the Tantras is handed down to us in the shape of a story of a quarrel between दक्ष, भृगु, ब्रह्मा, विष्णु and यज्ञ on the one side, and Siva with his demons on the other side.

It is well known that Vishnu is the deity of the Vedas, Brahma is the real author of Dharmasastras communicated to Manu who taught them to his ten sons दक्ष, भृगु &c. &c. We have in Bhagabat that when Brahma commenced a sacrifice, Bhrigu the reciter of Manava Sastra, and Daksha with other Vedics opposed the invitation of Siva. The quarrel was a temporary one. But the struggle was the fiercest when Daksha one of the ten sons of Manu the law-giver, declined to invite his son-in-law Siva the promulgator of anti-vedic rites. The Tantriks have woven this tradition into an effective pro-tantrik story full of pathos. A battle was fought on the sacrificial field of Dakha, adherents of the vedic rites were defeated and Mahadeva fighting at the head of his demons got the victory. It seems there was somewhat like a compromise; but the orthodox vediks will not yet accept the compromise. The injunction contained in the verse is therefore essentially necessary. We shall discuss the different sorts of injunctions later on.

PURPORT. – मनुष्यः यदि श्रुतिस्मृतिविहित धर्म्ममाचरेत् इहलोके यशः परलोके स्वर्गं मोक्षं वा लभेत। तस्मात् श्रुतिस्मृत्युक्तं धर्म्मं आचरेत् ॥ ९ ॥

MEANING IN ENGLISH. – A man who practises the duties prescribed by the Vedas and the Smritis gains fame in this world and after death unsurpassable bliss in the shape of celestial enjoyment or final liberation. (Therefore every one should follow the system of duties prescribed by the Vedas and the Smritis.)

ELUCIDATION. – श्रुति and स्मृति have been defined in the next sloka.

GRAMMATICAL NOTES. (*a*) On the text. – 1. श्रुतिस्मृत्युदितम्— श्रुतिश्च स्मृतिश्च श्रुतिस्मृती। द्वन्द्व समासः। ताभ्यां उदितः श्रुतिस्मृत्युदितः तृतीया समासः। तम्। Qualifies धर्म्मम्। श्रूयते इति श्रुतिः स्मर्य्यते इति स्मृतिः। श्रु + क्तिन्; स्मृ + क्तिन्। शृणोति शुश्राव अश्रौषीत्। स्मरति सस्मार अस्मार्षीत् वद + क्तः कर्म्मणि उदितम्। वदति उवाद अवादीत्। 2. धर्म्मम् – कर्म्मणि

द्वितीया। Acc. of अनुतिष्ठन्। 3. अनुतिष्ठन्—अनु – स्था + शतृ। तिष्ठति मर्त्त्यो मनुष्यात्। 4. हि – निश्चये। अव्ययम्। 5. मानवः—मनोरपत्यं पुमान् मानवः। मनु + अण्। मानवः। मनोरपत्यं पुमान् कुत्सितो मूर्खो माणव इति मूर्द्धन्यः। अपत्ये कुत्सिते मूढ़े मनो रौत्सर्गिकः स्मृतः। नकारस्य च मूर्द्धन्य स्तेन सिध्यति माणव इति तत्त्वबोधिन्याम्। जात्यर्थे तु मनोर्जातावञ्यतो षुक् चेति मनोरञ् षुक् मानुषः मनोर्यत् षुक् च मनुष्य इति जातिः। 6. इह – इदम् + ह। 7. कीर्त्तिम् – कृत् + क्तिन्। कीर्त्तयति। Conjugated. 8. अवाप्नोति – अव—आप् लट् ति। आप। आपत्। आप्लृ इति लृ दित्वात् अङ्। 9. प्रेत्य —प्र – इ + ल्यप्। ेति। अगात्। 10. अनुत्तमम् – न विद्यते उत्तमं यस्मात् तत् अनुत्तमम्। 11. सुखम् – सुखयतीति सुखम्। सुख + अच्। सुखदुःखं तत् क्रियायामिति।

CHANGE OF VOICE. – अनुतिष्ठता......मानवेन......कीर्त्तिः......सुखं अवाप्यते ॥ ९ ॥

BENGALI.—মনুষ্য শ্রুতিস্মৃতি দ্বারা কথিত ধর্ম্ম অনুষ্ঠান করিলে ইহলোকে ধার্ম্মিক বলিয়া খ্যাতিলাভ করে এবং পরলোকে ধর্ম্মাচরণের ফলস্বরূপ স্বর্গ ও অপবর্গাদি সর্ব্বোৎকৃষ্ট সুখলাভ করে। অতএব শ্রুতি ও স্মৃতিবিহিত ধর্ম্ম আচরণ করিবে ॥ ৯ ॥

ENGLISH.—A man practising or following the duty or *Dharma* spoken of in the Vedas and the *Smritis* (or tradition) obtains fame here, and supreme happiness or bliss after death. (*9*).

**श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै स्मृतिः।**
**ते सर्व्वार्थेष्वमीमांस्ये ताभ्यां धर्म्मो हि निर्ब्बभौ ॥१०॥**

PROSE. – श्रुतिस्तु वेदः विज्ञेयः धर्म्मशास्त्रं तु स्मृतिः ( विज्ञेया ) वै। सर्व्वेषु अर्थेषु ते अमीमांस्ये, हि ताभ्यां धर्म्मो निर्बभौ ॥ १० ॥

KULLUKA – श्रुतिस्त्विति लोकप्रसिद्धसंज्ञासम्बन्धानुवादोऽयं श्रुतिस्मृत्योः प्रतिकूलतर्केण अमीमांस्यत्वविधानार्थम्। स्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्यो बलवत्त्वप्रतिपादनार्थञ्च तेन स्मृतिविरुद्धाचारो हेय इत्यस्य फलम्। श्रुति वेदः, मन्वादिशास्त्रं स्मृतिः, ते उभे प्रतिकूलतर्केन विचारयितव्ये यतस्ताभ्यां निःशेषेण धर्म्मो बभौ प्रकाशतां गतः ॥ १० ॥

KULLUKA EXPLAINED. – "लोकप्रसिद्धसंज्ञासंम्बिसमन्धानुवादोऽयं श्रुतिस्मृत्योः प्रतिकूलतर्केण अमीमांस्यत्वविधानार्थं, स्मृतेः श्रुतितुल्य बलवत्त्वविधानेन आचारादिभ्यो बलवत्त्व प्रतिपादनार्थञ्च, तेन स्मृतिविरुद्धाचारो हेय इत्यस्य फलम्।"

लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धानुवादः लोके प्रसिद्धः लोकप्रसिद्धः यो संज्ञासंज्ञिसम्बन्धः संज्ञा यथाऽत्र श्रुतिः स्मृतिश्च, संज्ञी यथाऽत्र वेदः धर्म्मशास्त्रञ्च, वेदरूपसंज्ञिनः श्रुतिरूपा संज्ञा। संज्ञा च श्रुतिरूपा संज्ञी वेदरूपः तयोः सम्बन्धः संज्ञासंज्ञिसम्बन्धः प्रतिपाद्यप्रतिपादकसम्बन्धः लोकप्रसिद्धश्चासौ संज्ञासंज्ञिसम्बन्धश्च लोकप्रसिद्धसंज्ञासंज्ञिसम्बन्धः तस्य अनुवादः प्रमाणान्तरेण ज्ञातस्य बोधकः वादः अनुवादः यदि प्रथमाध्याये अन्यत्र वा वेद एव श्रुति रिति विधिः प्राप्यते पुनश्च यत्रे वेद एव श्रुतिरिति कथ्यते तदा स विधिरिति न कथ्यते किन्तु अनुवादशब्देन कथ्यते। लोकतः श्रुतिर्वेद इति ज्ञातम्। तस्यार्थस्य अत्र अनुवदनात् श्रुतिर्वेदः धर्म्मशास्त्रं स्मृतिरिति वचनं ज्ञातस्य अनुवादमात्रं न विधिः। तथाविधसम्बन्धानुवादः अयं कथं क्रियते? उत्तरमाह:। कुल्लूकभट्टः श्रुतिस्मृत्योः प्रतिकूलतर्केण विरुद्धतर्केण अमीमांस्यत्वविधानार्थं अवितर्कणीयत्वस्थापनार्थम्। अर्थात् श्रुतिर्यतः स्वयं वेदः स्मृतिर्यतः वेदोक्तधर्म्मविषयकअरणमात्रं तस्मात् श्रुतिः स्मृतिश्च न वितर्कविषयीभूता इति विधिः। स्मृतेः श्रुतितुल्यत्वबोधनेन स्मृतेः स्मृतिशास्त्रस्य श्रुतितुल्यत्वबोधनेन श्रुतेस्तुल्या श्रुतितुल्या तस्या भावः श्रुतितुल्यत्वम् तस्य बोधनेन ज्ञापनेन। धर्म्मो हि वेदमूलक इत्युक्तम्। धर्म्मविषयकं शास्त्रं मन्वादिकृतं स्मृतिः। अत इति कथनात् मुनिभिः स्मृतस्य वेदार्थविस्तरस्यैव स्मृतिसंज्ञात्वात् स्मृतेर्वेदतुल्यत्वं आयातमिति कुल्लूकाशयः। स्मृतेर्वेदतुल्यत्वबोधनेन आचारादिभ्यः देशाचारकुलाचारादिभ्यः स्मृतेर्बलवत्त्वप्रतिपादनार्थं आचारात् स्मृतिर्बलीयसीति विधानार्थम् अनुवादः कृतः। तत्र फलमाह स्मृतिविरुद्धाचारो हेय इति फलम्। स्मृतिशास्त्रविरुद्धो य आचारो यथा दाक्षिणात्येषु मातुलकन्याविवाहः तथाभूत आचारः स्मृतिविरुद्धत्वात् हेयः परित्याज्यः।

अमीमांस्ये इत्यस्य अर्थमाह प्रतिकूलतर्केर्नविचारयितव्ये। धर्म्मोहि निर्बभौ इत्यस्य अर्थमाह निःशेषेण प्रकाशतां गत इति।

अयं भावः—अस्मिन् श्लोके श्रुतिस्मृतिरूपयोः संज्ञयोः वेद-धर्म्मशास्त्ररूपसंज्ञिभ्यां सम्बन्धः अनुवादत्वेन उक्तः। तत् किमर्थं कृतम् इत्यस्य उत्तरमाह श्रुतिस्मृत्योरवितर्कणीयत्वस्थापनार्थं, स्मृतेश्च देशाचारादिभ्यः बलीयस्त्वप्रकटनार्थम्। कथं स्मृतिर्देशाचारात् बलवत्तरा भविष्यति? ननु तस्या वेदतुल्यत्वात् कथं वेदतुल्यत्वम्? ननु धर्म्मशास्त्रत्वात्, धर्म्मो हि वेदमूलकः धर्म्मशास्त्रं हि वेदार्थस्य स्मृतस्य विस्तरमात्रम्। वेदविदां शास्त्रं गड्डलिकाप्रवाहवत् प्रवर्त्तितात् आचारात् बलवत् अवेदमूलकत्वात्।

Purport.—वेद एव श्रुतिः मन्वाद्युक्तं धर्म्मशास्त्रं स्मृतिः। श्रुतिःस्मृतिश्च न कस्मिन्नपिविषये नास्तिकादीनां विरुद्धतर्कस्य विषयीभूता, यतः श्रुतिस्मृतिभ्यां एव धर्म्मः निःशेषेण प्रकाशतां गतः। अर्थात् श्रुतिः स्मृतिश्च न प्रमाणं इत्यादि तर्कं न कुर्य्यात् स्मृतेर्विरुद्धं देशाचारादिकञ्च परिवर्ज्जयेत्॥ १०॥

ENGLISH MEANING.—By Sruti is meant the Veda, and by Smriti is meant the institutes of sacred law : these two must not be called into question, since from those two the sacred law shone forth fully.

GRAMMATICAL NOTES. – ( *a* ) On the text : – 1. वेदः – Derived. It is अनुवादः श्रुतिः is विधेयः। 2. श्रुतिः – विधेयविशेषणम् of वेदः। 3. स्मृतिः – विधेय विशेषणम् of धर्म्मशास्त्रम्। 4. विज्ञेयः – वि – ज्ञा + यत्। जानाति अज्ञासीत्। 5. धर्म्मशास्त्रम् – धर्म्मस्य शास्त्रम् षष्ठी समासः। शास् ष्ट्रन् शास्त्रम्। 6. ते – उक्तं कर्म्म of अमीमांस्ये। 7. सर्व्वार्थेषु – सर्व्वे अर्थाः सर्व्वार्थाः कर्म्मधारयः। तेषु। विषयाधारे सप्तमी। 8. अमीमांस्ये – मान् जिज्ञासायाम्। स्वार्थे सन् + यत्। Qualifies ते। मान् जिज्ञासायाम् (विचारे इत्यर्थः) भ्वादि गणीयमान्धातुः स्वार्थसन् लट् मीमांसते। मान् सन्; ममान्स मिमान्स। मीमांस। लट् ते मीमांसते। It is स्वार्थसन् hence it assumes सन् again इच्छार्थे – मीमांसिषते। We have चुरादिमान स्तम्भे मानयते। मान् पूजने मानयति मानति। But मान जिज्ञासायां भ्वादि is always मीमांसते not मानति or मानते। मीमांसते विचारयति जिज्ञासतेवेत्यर्थः। 9. ताभ्याम् अपादानात् पञ्चमी। 10. धर्म्मः – Nom. to निर्बभौ। 11. निर्बभौ – निर् – भा लिट् णल्। अभासीत्।

(*b*) On Kulluka.

ELUCIDATION. – अमीमांस्ये means अविचारणीये। आज्ञा गुरूणां ह्यविचारणीया इति कालिदासः। इयं श्रुतिः स्मृतिश्च प्रमाणं न वेति विचारणीया न भवति स्वतः प्रमाणत्वात्।

The whole system of dharma is based on the authority of the Vedas and the Smritis. If they are allowed to be questioned, the whole system falls to the ground. It is therefore specially provided here that no system of logic calculated to question the authority of the Vedas can be entertained. The object of the Boudha, Jaina and Charvak philosophical systems is to undermine the authority of the Vedas and Smritis, by calling them into question. Bhrigu here lays down that such a system of heretic logic is not to be applied to the Vedas and

Smritis. The primary object of logic is to support by logica arguments the authority of the Vedas and Smritis, so that *dharma* may be preserved. Therefore any system not subservient to the Vedas and *dharmas* is to be totally excluded. The real argument is that human argument cannot prevail against the revelation, which must be judged by orthodox system of logic in loyalty to revelation. The principal argument of Sankaracharja in support of his system is that his is a system founded on the revelation, and not on human reasoning or logic. He says that argument always shifts ground, what is established by the argument of one is demolished by a subsequent intelligent man. Therefore a religion based on mere argument is no religion at all. There can be no faith in it. But religion founded on immutable truths revealed by God in the Vedas is unchangeable. Therefore we are to rely on a system of religion founded on the authority of the Vedas. It is held that the six philosophies are mere six concentric ditches to defend the system of vedic faith. Therefore it is the first duty of the sacred law-giver to oust the jurisdiction of heresy and heretic system of logic from the sphere of *vedic dharma.*

*Change of voice.*—श्रुत्या वेदेन विज्ञेयेन धर्म्मशास्त्रेण स्मृत्या भूयते । ताभ्यां अमीमांस्याभ्यां—भूयते । धर्म्मेण – निर्बभे ॥ १० ॥

BENGALI.—লোকতঃ বেদকে শ্রুতি এবং মন্বাদিপ্রোক্ত ধর্ম্মশাস্ত্রকে স্মৃতি বলে ; প্রতিকূল তর্কদ্বারা এই দুইটিকে মীমাংসার বিষয়ীভূত করিবে না ; অর্থাৎ তর্ক দ্বারা এই দুইটিকে অপ্রমাণ করিবার যত্ন করিবে না ; কেননা ঐ দুইটি হইতেই সমস্ত ধর্ম্ম নিঃশেষরূপে প্রকাশ পাইয়াছে । স্মৃতি ধর্ম্মশাস্ত্র হওয়ায় উহা বেদতুল্য ; স্মৃতিবিরুদ্ধ আচার পরিত্যাগ করিবে । ১০ ॥

ENGLISH—The Veda is to be known as revelation, and the Codes of law (*Dharma-sastra*) as *Smriti* or tradition. In all matters these two are not to be questioned or discussed. For the system of duty or *Dharma* has been set forth by these two. (10)

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विज:।
स साधुभिर्वहिष्कार्य्यो नास्तिको वेदनिन्दक:॥ ११॥

PROSE—य: द्विज: हेतुशास्त्राश्रयात् ते मूले अवमन्येत स वेदनिन्दक: नास्तिक: साधुभि: वहिष्कार्य्य:॥ ११॥

KULLUKA.—योऽवमन्येतेति। य: पुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्म्मणो नि:सार्य्य:। पूर्व्वश्लोके सामान्येनाभीमांस्ये इति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्त्तनीयेति भ्रमो मा भूदिति विशेषयति हेतुशास्त्राश्रयात् वेदवाक्यमप्रमाणं वाक्यत्वात् विप्रलम्भकवाक्यवदित्यादि प्रतिकूलतर्कावष्टम्भेन चार्व्वाकादिनास्तिक इव नास्तिको यतो वेदनिन्दक:॥ ११॥

KULLUKA EXPLAINED.—साधुभि: इत्यस्य अर्थमाह: शिष्टैरिति। Kulluka explains साधुभि: as शिष्टै:। शिष्ट: does not mean a well-behaved man. It is used in the sense of learned in the Vedas. In explaining the aphorism शिष्टापरिग्रहाश्चात्यन्त मनपेक्षा Sankar explains शिष्टा वेदविद: मनुव्यासप्रभृतय:। This is the real meaning. वहिष्कार्य्य: is to be turned out or cast out; and from what? Kulluka explains द्विजानुष्ठेयाध्ययनादिकर्म्मणो नि:सार्य्य: from the proper duties of the twice-born such as reading the Vedas and such other works.

"पूर्व्वश्लोके सामान्येन अभीमांस्ये इति मीमांसानिषेधात् अनुकूलमीमांसापि न प्रवर्त्तनीयेति भ्रमो माभूदिति विशेषयति हेतुशास्त्राश्रयात्।"

In the previous sloka a general prohibition as to the application of logical system has been laid down by the words "न मीमांस्ये"। From that one may infer that the application of even the orthodox system of logic has been prohibited. In order to remove mistakes like this, this verse uses the compound हेतुशास्त्राश्रयात् *i. e.* application of anti-vedic system of logic is only prohibited.

In what way do the atheists denounce the Vedas? This argument is put in the syllogistic form of Hindu logic. "वेदावाक्यं अप्रमाणं वाक्यत्वात् विप्रलम्भकवाक्यवत् इति" अर्थात् वाक्यं अप्रमाणम्। वेदवाक्यम् तस्मात् वेदा अप्रमाणम्। यथा विप्रलम्भकानां प्रवञ्चकानां वाक्यम् मिथ्यात्वात् अप्रमाणम्। "प्रतिकूलतर्कावष्टम्भेन" प्रतिकूलस्य विरुद्धस्य तर्कस्य अवष्टम्भ: उत्थापनम् तेन।

"चार्व्वाकादि नास्तिकः इव नास्तिकः यतो वेदनिन्दकः" चार्व्वाका हि नास्तिकाः नास्ति परलोक इति कथनात्। वेदनिन्दकाः अपि चार्व्वाकसदृशत्वात् नास्तिकाः।

The way in which the Vedas were attacked by the Charvakas is thus shown in the Vishnupurana—

"अन्यानप्यन्यपाषण्डप्रकारै र्बहुभिर्द्विज।
दैतेयान् मोहयामास मायामोहोऽति मोहकृत्।" (१)

The arguments of the Charvakas are reproduced :—

केचिद्विनिन्दां वेदानां देवानामपरे द्विज।
यज्ञकर्म्मकलापस्य तथान्येच द्विजन्मनाम्।
नैतद् युक्तिसहं वाक्यं हिंसा धर्म्माय नेष्यते।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम्॥
यज्ञैरनेकै र्देवत्वमवाप्येन्द्रेण भुज्यते।
शम्यादि यदि चेत् काष्ठं तद्वरं पत्रभुक् पशुः॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्ति र्यदीष्यते।
स्वपिता यजमानेन किन्न तस्मान्न हन्यते॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत् ततः।
दद्यात् श्राद्धं श्रद्धयाऽन्नं न वहेयुः प्रवासिनः॥
जनश्रद्धेयमित्येतत् अवगम्य ततो वचः।
उपेक्ष्य श्रेयसे वाक्यं रोचतां यन्मयेरितम्॥
न ह्याप्तवादा नभसो निपतन्ति महासुराः।
युक्तिमद्वचनं ग्राह्यं मयान्यैश्च भवद्विधैः।
मायामोहेन ते दैत्याः प्रकारैर्बहुभि स्तथा।
व्युत्थापिता यथा नैषां त्रयीं कश्चिदरोचयत्॥
स्वल्पेनैव हि कालेन मायामोहेन तेऽसुराः।
मोहितास्तत्यजुः सर्व्वां त्रयीमार्गाश्रितां कथाम्॥

At a remote period, a very large number of Daityas collected themselves on the bank of the Narmada and were performing various Vedic rites. By virtue of these rites they became more powerful than the gods and began to oppress the world. The gods unable to endure their tyranny

(१) "अन्यपाषण्डप्रकारै र्लौकायतिकमतभेदैः (स्वामी)। लौकायतिक = चार्व्वाक।

went to Vishnu, the Supreme deity, and worhipped him. The great god was pleased and produced a great being from his own body, and gave him the name of Máyámoha, and asked the gods to depart and have no fear.

Máyámoha a form of Vishnu himself, appeared to the Daityas on the bank of the Narmada, quite naked, with head shaven clean, with peacock's feathers in his hand; he was so resplendent with glory that all the Daityas surrounded him in awe. Then Máyámoha began to confound them by various arguments. He said :—

The injunctions of the Vedas are unreasonable. Slaying (of living creatures) never leads to the path of virtue. (*i. e.* sacrifice is no dharma). To say that clarified butter burnt in the fire produces merits is simply childish. It is better to be a beast eating soft leaves of trees, than to be Indra after performing a hundred sacrifices and eat dry wood called Sami. If a beast killed in a sacrifice goes to heaven, why does not the performer of the sacrifice kill his own father that he may reach heaven easily? If feeding of soma (as during the time of sradh) can appease the hunger of another (*i. e.* of the dead man), then travellers could do without carrying any provision with them, their sons performing sradh at home all the while. Therefore know and accept what I say, as it is reasonable and fit for being believed. You great giants, have you seen the vedas ever falling from heaven, that you accept them as authorities? What is reasonable must be accepted by myself, you and all alike. (Reject these deceptions called the vedas). Thus the Daityas were seduced from the path of the Vedas by various arguments, so much so that not a single Daitya liked the Vedas any more. Thus within a short time the Daityas gave up all connection with vedic path, through the influence of Máyámoha, the deity.

It is stated in the same puran that it was Máyámoha who promulgated the Buddhist and Jaina doctrines at the very beginning. Gautam Buddha was only a recent preacher of the doctrine of Máyámoha. The logical systems of Buddha, Jaina, and Charvak are all anti-vedic accordingly. They must not be applied to the Vedas and the Smritis. Only the orthodox systems such as the six philosophies should be applied.

PURPORT.—यो द्विज: बौद्धचार्व्वाकादिनास्तिकानां वेदविरुद्धतर्कशास्त्रावलम्बनेन धर्म्मस्य मूलभूते श्रुतिस्मृती अवमानयेत् स: वेदविद्भि: द्विजोचित वेदाध्ययन-यागादि कर्म्मभ्यो वहिष्कार्य्य: यत: स वेदनिन्दनात् हेतो: चार्व्वाक बौद्धादिवत् नास्तिक एव। नास्तिकस्य परलोकफलकेषु कर्म्मसु अनधिकारात् ॥ ११ ॥

MEANING IN ENGLISH.—A twice-born man who relying on the anti-vedic systems of logic ( or method of reasoning directed against the vedas ) treats with contempt those two sources of *dharma* should be deprived of his rights to read the vedas and to perform such other duties which a twice-born man has right to do ; because being a scorner of the vedas he becomes an atheist like the followers of Charvak.

GRAMMATICAL NOTES. (*a*) On the text. 1. य: यद्+सु qualifies द्विज:। 2. अवमन्येत अव+मन् लिङ् ईत governs मूले। मन्यते मेने अमंस्त। 3. ते qualifies मूले। 4. द्विज: द्विर्जायते इति द्विज:। उपपद समास:। द्वि—जन+ड। Nominative to अवमन्यते। 5. हेतुशास्त्राश्रयात् हेतो: शास्त्रम् हेतुशास्त्रम् षष्ठीसमास:। तस्य आश्रय: हेतुशास्त्राश्रय: षष्ठीसमास: तस्मात् हेतुशास्त्राश्रयात्। हेतौ पञ्चमी। हि+तुक् हेतु। शास+ष्ट्रन् शास्त्रम्। आङ्+श्रि+अच् आश्रय। श्रयति श्रयते शिश्राय शिश्रिये अशिश्रियत् अशिश्रियत। 6. स: accusative of वहिष्कार्य्य:। 7. साधुभि: कर्त्तरि तृतीया। 8. वहिष्कार्य्य: वहिस्—कृ+ण्यत् कर्म्मणि। ऋहलोर्ण्यत् इति ण्यत्। 9. नास्तिक: adjective qualifies स:। न अस्ति नास्ति इत्येकं पदम्। नास्तीतिमतिर्यस्य स नास्तिक:। नास्तिक+ठक्। By अस्तिनास्तिदिष्टं मति:। अस्ति परलोक: इत्यं मतिर्यस्य स आस्तिक:। दिष्टम् इति मतिर्यस्य स दैष्टिक:। 10. वेदनिन्दक: adjective qualifies स:। निन्दति इति निन्दक: वेदस्य निन्दक: इति वेदनिन्दक:

षष्ठी समासः। निन्द + ण्वुल् निन्दकः हिंसकः खादकः इत्यादि। निन्दति निनिन्द अनिन्दीत्।

*Change of voice.*—येन द्विजेन ते मूले अवमन्येयाताम् तेन नास्तिकेन वेद-निन्दकेन बहिष्कार्य्येण भूयते॥ ११॥

BENGALI.—যে দ্বিজ বেদবিরুদ্ধ লৌকচার্ব্বাকাদি মতাবলম্বী তর্ক আশ্রয় করিয়া ধর্ম্মের মূলস্বরূপ শ্রুতি ও স্মৃতিকে অবজ্ঞা করে, অর্থাৎ ঐ দুই শাস্ত্র, প্রতারক ব্যক্তির উক্তির ন্যায় অপ্রমাণ এরূপ বলে, সেজন্য ব্যক্তিগণ চার্ব্বাকবৎ সেই বেদনিন্দক নাস্তিককে দ্বিজাতির অনুষ্ঠেয় বেদাধ্যয়নাদি কর্ম্ম হইতে বহিস্কৃত করিয়া দিবেন॥ ১১॥

ENGLISH.—A twice-born, who, from adherence to heretical works questioning the authority of the *Vedas* and *Smritis*, may despise these two sources (*of dharma*), should be, (as) an infidel blamer of the Vedas, turned out by the good. (11).

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्व्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्॥ १२॥**

PROSE.—वेदः स्मृतिः सदाचारः स्वस्य आत्मनश्च प्रियम् एतच्चतुर्व्विधं धर्म्मस्य साक्षात् लक्षणं प्राहुः (मन्वादयः)॥ १२॥

KULLUKA.—इदानीं शीलस्याचार एवान्तर्भावसम्भवात् वेदमूलता एव तत्त्वं न स्मृतिशीलादिप्रकारनियम इति दर्शयितुं चतुर्द्धा धर्म्मप्रमाणमाह वेद इति। वेदो धर्म्म प्रमाणं। स क्वचित् प्रत्यक्षः क्वचित् स्मृत्याद्यनुमित इत्येवं तात्पर्य्यं न तु प्रमाणपरिगणने, अतएव श्रुतिस्मृत्युदितं धर्म्ममित्यत्र द्वयमेवाभिहितवान्। सदाचारः शिष्टाचारः स्वस्य आत्मनः प्रियम् आत्मतुष्टिः॥ १२॥

KULLUKA EXPLAINED.—"इदानीं शीलस्याचार एव अन्तर्भावसम्भवात् वेदमूलता एव तत्त्वम् न स्मृतिशीलादिप्रकारनियम इति दर्शयितुं चतुर्द्धा धर्म्मप्रमाणमाह वेद इति।" इदानीं सम्प्रति शीलस्य हारीतोक्त त्रयोदशविधशीलस्य आचारे सदाचारे अन्तर्भावसम्भवात् अन्तर्भावः अन्तर्गतिः अन्तःपतितत्वं तस्य सम्भवात् वेदमूलता वेद एव मूलं यस्य स वेदमूलः तस्य भावः वेदमूलता सा एव तत्त्वं प्रधानं शास्त्रार्थं इति वा। न स्मृतिशीलादिप्रकारनियमः स्मृतिशीलसदाचारात्मतुष्टिरूपनियमकरणम् इति दर्शयितुम् अर्थात् वेदोऽखिलः धर्म्ममूलमिति श्लोके धर्म्मस्य वेदमूलताप्रदर्शनमेव लक्ष्यं स्मृति-शीलसदाचारात्मतुष्टिरूपमूलपरिगणनं न लक्ष्यं तस्मात् तत्र पञ्चविधत्वं अत्र चतुर्व्विधत्वं न विरुद्धं वेदस्य मुख्यप्रमाणत्वात् अन्येषां वेदमूलत्वेन प्रामाण्यात् चतुर्व्विधत्वपञ्चविधत्वा-

द्विकथनं आनुषङ्गिकमात्रम्। स्मृत्यादीनां गौणत्वं वेदस्य मुख्यप्रमाणत्वं दर्शयितुं पूर्वं पाञ्चविध्यं उक्ता अत्र चातुर्व्विध्यमुक्तम्। नियमः नियमनम् निरोधः।

"वेदो धर्म्मे प्रमाणम्। स क्वचित्प्रत्यक्षः क्वचित् स्मृत्याद्यनुमितः इत्येवं तात्पर्य्यं नतु प्रमाणपरिगणने, अतएव श्रुतिस्मृत्युदितं धर्म्ममित्यत्र द्वयमेवाभिहितवान्।"

स्पष्टव्याख्यानं कुरुते वेदो धर्म्मप्रमाणम् मुख्यं अन्यत् तु स्मृत्यादि गौणमित्यर्थः। सः वेदः क्वचित् कुत्रचित् प्रत्यक्षः साक्षात् वेदसंहिताब्राह्मणादिग्रन्थेषु पश्यते तत्तो-ग्राह्यते। क्वचित् स्मृत्याद्यनुमितः स्मृतिशीलसदाचारात्मतुष्टिभिः अनुमितः अप्रत्यक्षः वेदः धर्म्मस्य मूलम्। नतु प्रमाणपरिगणने प्रमाणानां परिगणनं संख्याकथनं तस्मिन् न तात्पर्य्यम्। अतएव श्रुतिस्मृत्युदितं धर्म्मं इत्यत्र अर्थात् श्रुतिस्मृत्युदित धर्म्मं अनुतिष्ठन् हि मानवः इत्यस्मिन् श्लोके द्वयं प्रमाणद्वयं श्रुतिस्मृतिरूपं अभिहितं नतु श्रुतिस्मृतिशील-सदाचारात्मतुष्टिरूपं पञ्चतयं चतुष्टयं वा उक्तम्। अर्थात् धर्म्मस्य प्रमाणं क्वचित् द्विविधं क्वचित् पञ्चविधं क्वचित् चतुर्व्विधं उक्तम्। अनेन एतावत् बुध्यते यत् वेद एव मूलं प्रमाणं अन्यत् तु तन्मूलत्वात् आनुषङ्गिकं प्रमाणं तस्मात् प्रमाणं द्विविधं पञ्चविधं चतुर्व्विधं वा इति न नियमः किन्तु वेद एव मुख्यं एकं प्रमाणमित्य-भिप्रायः। "स्मृत्याद्यनुमितः" यो विधिः स्मृतिशास्त्रे दृश्यते किन्तु प्रचलितेषु वेदेषु न दृश्यते स बहुशाखाभिन्ने अनन्ते वेदवाक्ये अवश्यमेवास्ति स्मृतेर्वेदमूलत्वात्। अनेन प्रकारेण स्मृतिद्वारा वेदवाक्यस्य अनुमानं भवति। यथा अयं स्मृत्युक्तविधिः वेदे अस्ति वेदमूलत्वात् स्मृतेः पठ्यमानवेदसाधारणस्मृतिवचनवत्। सदाचारशब्दं व्याचष्टे शिष्टाचार इति स्वस्यात्मनः प्रियम् इति व्याचष्टे आत्मतुष्टिरिति।

PURPORT.—वेद एव धर्म्मस्य साक्षात् प्रमाणम्। स्मृतिसदाचारात्मतुष्टि-रूपाणि यानि प्रमाणानि कथ्यन्ते तान्यपि वेदमूलकानि। ते वेदः क्वचित् क्वचित् अनुमाय प्रमाणत्वेन गृह्यते सुतरां स्मृत्यादीनां स्वतन्त्रं प्रामाण्यं नास्ति। यथा वेद एकं प्रमाणं तथा स्मृतिसदाचारात्मतुष्टयश्च प्रमाणानि तेषां संख्या अत्र कथ्यते इति न मन्तव्यम्॥ १२॥

MEANING IN ENGLISH.—The scripture, the codes compiled by the sages, usage approved by the learned in the vedas, and self-satisfaction in the case of optional injunction—these the wise have declared to be the four-fold authority in the matter of practice of dharma. But it is to be borne in mind that each of these is not an independent authority and the sloka does not attempt at an enumeration of authorities. Because the scripture is the only authority; it is found directly in the

vedic compilations, as well as inferred from the Smritis and Purans. It is for this reason that authorities have been enumerated by Manu as two, four and five in number which seems apparently inconsistent.

GRAMATICAL NOTES.—1. वेदः । 2. स्मृतिः । Same case with सदाचारः । 3. सदाचारः—सतां शिष्टानां वेदज्ञानां आचारः सदाचारः षष्ठी समासः । आ+चर । आङ्–चर+घञ् । अचार अचारीत् । 4. आत्मनः—शेषे षष्ठी । 5. स्वस्य—Qualifies आत्मनः । 6. प्रियम्—Same case with सदाचारः &c. &c. प्रीणातीति प्रियम् । प्री+क । अप्रैषीत् अप्रैष्ट । 7. च–अव्ययम् । 8. एतत्–एतत्+सुप् refers to लक्षणम् । 9. चतुर्व्विधम्–चतस्रः विधाः प्रकाराः यस्य तत् चतुर्व्विधम् । वि–धा+अङ् । 10. धर्म्मस्य–शेषे षष्ठी । 11. लक्षणम्—लक्ष्यते अनेन इति लक्षणम् । लक्ष+ल्युट् । लक्षणं द्विविधं स्वरूपं तटस्थञ्च । यतो भूतानि जायन्ते तद् ब्रह्म इति तटस्थलक्षणम् (Definition). सत्यं ज्ञानमनन्तं ब्रह्म इति स्वरूपलक्षणम् ( Description ). Here लक्षणं means प्रमाणम् । 12. साक्षात्—अव्ययम् । Some derive it as सह–अक्ष–अत+क्विप् । 13. प्राहुः—Nom. मन्वादयः understood.

*Change of voice.*—...वेदेन स्मृत्या सदाचारेण...प्रियेण भूयते । एतच्चतुर्व्विधं ...लक्षणं उच्यते ॥ १२ ॥

BENGALI.—বেদ, স্মৃতি, সদাচার ও আত্মতুষ্টি এই চারিটি ধর্ম্মের সাক্ষাৎ প্রমাণ বলিয়া মনু প্রভৃতি শাস্ত্রকারগণ নির্দ্দেশ করিয়া গিয়াছেন। (ইহাদের মধ্যে ও বেদই মূল প্রমাণ, তাহা কোন স্থলে বেদসংহিতাদিতে প্রত্যক্ষ প্রাপ্ত হওয়া যায়, কখন কখন স্মৃতি-পুরাণ দ্বারা অনুমান করিতে হয়; বস্তুতঃ প্রমাণ চারি প্রকার কি পাঁচ প্রকার ইহা বলা এই শ্লোকের উদ্দেশ্য নহে, কিন্তু এক বেদই প্রমাণ ইহা বলা উদ্দেশ্য) ॥ ১২ ॥

ENGLISH.—The Veda, the *Smriti* or tradition, good custom, and what is agreeable to one's own self (or conscience), this is, they say, the direct fourfold definition of *dharma* or duty. (12).

**अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते ।**
**धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ १३ ॥**

PROSE.—धर्म्मज्ञानं अर्थकामेषु असक्तानां ( जन्तूनां ) विधीयते । धर्म्मं जिज्ञासमानानां परमं प्रमाणम् श्रुतिः ( भवति ) ॥ १३ ॥

KULLUKA.—अर्थकामेष्विति । अर्थकामेष्वसक्तानाम् अर्थकामलिप्सारहितानां

धर्म्मोपदेशोऽयं ये त्वर्थकामसक्तीच्छया लोकप्रतिपत्त्यर्थं धर्म्ममनुतिष्ठन्ति न तेषां कर्म्मफल मित्यर्थः। धर्म्मञ्च ज्ञातुमिच्छतां प्रकृष्टं प्रमाणं श्रुतिः। प्रकर्षबोधनेन च श्रुतिस्मृति विरोधे स्मृत्यर्थो नादरणीय इति भावः। अतएव जावालः—"श्रुतिस्मृतिविरोधे श्रुतिरेव गरीयसी। अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता।" भविष्य पुराणेऽप्युक्तं—"श्रुत्या सह विरोधे तु बाध्यते विषयं विना।" जैमिनिरप्याह—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्। श्रुतिविरोधे स्मृतिवाक्यमनपेक्षम् अप्रमाणम् अनादरणीयम्, असति विरोधे मूलवेदानुमानमित्यर्थः॥ १३॥

KULLUKA EXPLAINED—"धर्म्मोपदेशोऽयम्"। अयं धर्म्मोपदेशः धर्म्मस्य उपदेशः अस्मिन् ग्रन्थे यः कृतः स इत्यर्थः। सर्व्वधर्म्मशास्त्रस्य मूलं अयमेव उपदेशः।

"न तेषां कर्म्मफलम्।" अर्थकामासक्तानां जनानां कृतस्य कर्म्मणः फलं नास्ति तस्मात् ते वृथा कर्म्म क्रियते। तैः कर्म्म न कर्त्तव्यं फलाभावात्। This is the inference we get from the text "अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते।" The inference is pointed out by Kulluka.

"प्रकर्षबोधनेन च श्रुतिस्मृतिविरोधे स्मृत्यर्थो नादरणीय इति भावः।" As the vedas have been laid down to be the highest authorities, it is to be understood, that in the case of a conflict between the vedas and the Smritis, the former is to prevail.

"अतएव जावालः श्रुतिस्मृतिविरोधेतु श्रुतिरेव गरीयसी। अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता।"

Therefore Javala says when there is a conflict between the Sruti and the Smriti, the Sruti must prevail. When there is no conflict, actions enjoined by the Smritis must be performed daily just as the actions enjoined by the vedas.

"विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्" विरोधे श्रुतिस्मृतिविरोधेतु स्मृतिवाक्यं अनपेक्षं अनादरणीयं स्यात् असति अविद्यमाने विरोधे हि अनुमानं वेदस्य अनुमानं भवति। अर्थात् यत्र विरोधो नास्ति तत्र स्मृतिर्बलवती भवति यतः तस्या अविरुद्धायाः स्मृतेर्मूलभूतः वेदः अवश्यमेवास्तीति अनुमानं भवति। तस्मात् क्वचित् स्मृतिरनुमानशब्देन कथ्यते। When there is a conflict, Smriti must yield; in the absence of a conflict, the existence of a Sruti at the root of (or in support of) such Smriti is to be inferred. Therefore virtually there is no authority except the vedas.

PURPORT.—ये अर्थेषु कामेषु च अनासक्तानां प्रति एव अयं धर्मोपदेशः त एव धर्माधिकारिणः। ये तु अर्थकामैः प्रेरिता लोकप्रतिपत्त्यर्थं धर्म्मं आचरन्ति तेषां धर्म्माचरणस्य फलं नभवति। ये धर्म्मं ज्ञातुं इच्छन्ति तेषां पक्षे श्रुतिरेव श्रेष्ठं प्रमाणम्। श्रुतिस्मृत्योर्विरोधे श्रुतिरेव समादरणीया ॥ १३ ॥

MEANING IN ENGLISH.—The instruction of the sacred rules of duty is intended for those who are unattached to wealth and enjoyment. Those who practise dharma for the sake of show derive no benefit therefrom. To those who seek a knowledge of the sacred rules of duties the supreme authority is the revelation. When there is a conflict between the revelation and sacred compilation, the revelation must prevail.

GRAMMATICAL NOTES.—1. अर्थकामेषु अर्थाय कामाय अर्थकामाः। तेषु विषयाधारे सप्तमी। अर्थयते आर्तिथत। कामयते कामयाञ्चक्रे अचीकमत। अचकमत। 2. असक्तानाम्—न सक्ताः असक्ताः। नञ् समासः। शेषे षष्ठी। सन्ज+क्त। सजति ससञ्ज असाङ्क्षीत्। 3. धर्म्मज्ञानम् धर्म्मस्य ज्ञानम् धर्म्मज्ञानम् षष्ठी समासः। ज्ञा+ल्युट्। जानाति अज्ञासीत्। 4. विधीयते वि–धा +कर्म्मणि लट् ते। दधाति धत्ते दधौ दधे अधात् अधित। 5. धर्म्मम् कर्म्मणि द्वितीया। न लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीनिषेध: in connection with जिज्ञासमानानाम्। 6. जिज्ञासमानानाम् शेषे षष्ठी। ज्ञा+सन्+शानच् कर्त्तरि। जिज्ञासते। 7. श्रुतिः same case with प्रमाणम्। श्रु+क्तिन् श्रुति। अश्रौषीत्। 8. प्रमाणम् विधेयविशेषणम् of श्रुतिः। प्र–मा+ल्युट्। माति मिमीते। 9. परमम् qualifies प्रमाणम्। पर–मा+क।

*Change of voice*—धर्म्मज्ञानं विदधति। श्रुत्या परमेण प्रमाणेन भूयते ॥ १३ ॥

BENGALI.—যাঁহারা অর্থ ও কামে আসক্ত নহেন, তাঁহাদের প্রতিই এই ধর্ম্মোপদেশ করা হইতেছে। যাঁহারা লোকে খ্যাতিলাভ করিবার জন্য ধর্ম্মাচরণ করেন তাঁহাদের সেই ধর্ম্মকর্ম্মের কোন ফল হয় না। যাঁহারা ধর্ম্ম জানিতে ইচ্ছা করেন বেদই তাঁহাদের পরম উৎকৃষ্ট প্রমাণ; অর্থাৎ বেদ ও স্মৃতির মধ্যে বিরোধ দেখাগেলে বেদের মতই প্রবল করিতে হইবে। ১৩।

ENGLISH.—The knowledge of *dharma* is ordained for those who are not addicted to wealth and pleasure. To them who want to know *dharma*, the Veda is the highest authority. (13).

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ।
उभावपि हि तौ धर्म्मौ सम्यगुक्तौ मनीषिभिः॥ १४॥

PROSE.—यत्र तु श्रुतिद्वैधम् स्यात् तत्र उभौ (मनुना) धर्म्मौ स्मृतौ। हि मनीषिभिः सम्यक् उभौ अपि तौ धर्म्मौ उक्तौ॥ १४॥

KULLUKA.—श्रुतिद्वैधन्त्विति। यत्र पुनः श्रुत्योरेव द्वैधं परस्परविरुद्धार्थप्रतिपादनं तत्र द्वावपि धर्म्मौ मनुना स्मृतौ तुल्यबलतया विकल्पानुष्ठानविधानेन विरोधाभावः। यस्मान्मन्वादिभ्यः पूर्व्वतरैरपि विद्वद्भिः सम्यक् समीचीनौ द्वावपि तौ धर्म्मावुक्तौ। समानन्यायतया स्मृत्योरपि विरोधे विकल्प इति प्रकृतोपयोगः तुल्यबलत्वाविशेषात्। तदाह गौतमः—तुल्यबलविरोधे विकल्पः॥ १४॥

KULLUKA EXPLAINED.—"यत्र पुनः श्रुत्योरेव द्वैधम्" but where there is a conflict between the revelations themselves. द्वैधम् is explained as "परस्परविरुद्धार्थप्रतिपादनम्" (i. e. laying of maxims mutually conflicting). "तत्र द्वावपि धर्म्मौ मनुना स्मृतौ" there both have been laid down as धर्म्म by Manu. The word मनु has been supplied by Kulluka, because Bhrigu is here reciting the sacred instructions as given by Manu. "तुल्यबलतया विकल्पानुष्ठानविधानेन विरोधाभावः" तुल्यं बलं ययोस्ते तुल्यबले तत्तया हेतुना विकल्पानुष्ठानविधानेन विकल्पस्य अनुष्ठानं तस्य विधानं तेन हेतुना विरोधाभावः अर्थात् यत्र शास्त्रयोर्बलं समानं तत्र विरोधो न स्यात् अपि तु विकल्प इति शास्त्रात् न विरोधः (In case where the strength of two texts is equal, there is to be presumed no conflict, but option.) "मनीषिभिः" (text) is explained as "मन्वादिभ्यः पूर्व्वतरैरपि विद्वद्भिः" (Learned men who preceded even Manu and the like). "सम्यक्" is explained as समीचीनौ reasonable.

"समानन्यायतया स्मृत्योरपि विरोधे विकल्प इति प्रकृतोपयोगः तुल्यबलत्वाविशेषात्" = समानन्यायतया श्रुतिद्वैधे येन तर्काश्रयेण विकल्पविधिर्भवति तस्य न्यायस्य स्मृतिद्वैधविचारेऽपि तुल्यभावेन प्रयोगो भवितुमर्हति यस्मात् तस्मात् स्मृत्योरपि स्मृतिवाक्ययोरपि विरोधे स्मृतिद्वयस्य तुल्यप्रमाणत्वात् विकल्पोभवति इति सिद्धान्तः प्रकृतपयोगः प्रकृतत्वस्य प्रस्तावविषयीभूतस्य स्मृतिव्याख्यानस्य उपयोगः प्रयोगः तुल्यबलत्वाविशेषात् तुल्यबलत्वस्य अविशेषात् भेदाभावात् यथा श्रुतौ तुल्यबलत्वविचारस्तथा स्मृतौ अपि तुल्यबलत्वविचारस्य प्रयोगयोग्यत्वात्। (By the application of the same principle in the case of a conflict between two Smritis also,

option is allowed. This conclusion has a direct bearing on the subject in hand, the principle of equal strength being equally applicable in the case of Smriti too. "तदाह गौतमः तुल्यबलविरोधे विकल्पः" Therefore Gautama lays down that when the strength of conflicting texts is equal, option is the rule.

PURPORT.—यत्र वेदवाक्ययोः परस्परविरोधो दृश्यते तत्र उभयवाक्यमेव धर्म्म इति मनुना उक्तम् । न केवलं मनुना, मनोः पूर्व्वतरै रन्यैरपि विद्वद्भिः द्वयमपि धर्म्म इत्युक्तम् ॥ १४ ॥

MEANING IN ENGLISH.—But when there are two texts of revelation mutually conflicting, both are held to be the law (dharma) *i. e.* they are optional, for both have been laid down as dharma both by Manu and those learned men who preceded him. This was concluded from the principle that in case of a conflict between texts of equal authority, option is the law. This principle applies to Smritis as well.

GRAMMATICAL NOTES.—1. श्रुतिद्वैधम्—द्विधा इत्यस्य भावः द्वैधम् । द्वि + धाच् । श्रुतेः द्वैधम् श्रुतिद्वैधम् षष्ठी समासः । 2. तु अव्ययम् । 3. यत्र यद् + त्रल् । 4. स्यात्—अस् + यात् । 5. तत्र—तद् + त्रल् । 6. उभौ—उभ + प्रथमाया द्विवचनम् same case with धर्म्मौ । 7. धर्म्मौ—विधेयविशेषणम् of उभौ । 8. स्मृतौ—स्मृ + क्तः कर्म्मणि । 9. सम्यक्—अव्ययम् । 10. मनीषिभिः कर्त्तरि तृतीया । मनसः ईषा मनीषा । शकन्ध्वादिषु पररूपं वाच्यमिति सन्धिः । मनीषा बुद्धिः विद्यते एषां मनीषिणः तैः । मनीषा + इनि ।

*Change of voice.*—श्रुतिद्वैधेन भूयते उभाभ्यां धर्म्माभ्यां स्मृताभ्यां भूयते । मनीषिणः......उक्तवन्तः ॥ १४ ॥

BENGALI.—যে স্থানে দুইটি শ্রুতি পরস্পর বিরুদ্ধ হয়, সে স্থলে উভয়টিই ধর্ম্ম (অর্থাৎ বিকল্পে উভয়টিই অনুসরণ করা যায়) ইহা মনু বলিয়াছেন এবং মনুর পূর্ব্ববর্ত্তী পণ্ডিতগণ ও ঐ উভয় সমীচীন বাক্যকেই ধর্ম্ম বলিয়া গিয়াছেন ॥ ১৪ ॥

ENGLISH.—Where these may be a conflict or opposition (of texts) of the Veda, both (the texts or conflicting injunctions) are regarded as *dharma* or duty. For, both these, correct as they are, have been declared as *dharma* by the wise. (14).

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥ १५॥

PROSE.—उदिते अनुदिते चैव तथा समयाध्युषिते (होतव्यम्) इति इयं वैदिकी श्रुतिः (अस्ति)। (तथापि) यज्ञः सर्व्वथा वर्त्तते॥ १५॥

KULLUKA.—अत्र दृष्टान्तमाह उदितेऽनुदिते चैवेति। सूर्य्यनक्षत्रवर्ज्जितः कालः समयाध्युषितशब्देनोच्यते। उदयात् पूर्व्वमरुणकिरणवान् प्रविरलतारकोऽनुदितकालः परस्परविरुद्धकालत्रयेऽपि सर्व्वथा विकल्पे नाग्निहोत्रहोमः प्रवर्त्तते। देवतोद्देशेन द्रव्यत्यागगुणयोगात् यज्ञशब्दोऽत्र गौणः। उदितादौ होतव्यमित्यादिका वैदिकी श्रुतिः॥ १५॥

KULLUKA EXPLAINED.—"अत्र दृष्टान्तमाह" अत्र अर्थात् यत्र श्रुतिद्वैधं तत्र विकल्पविधिः स्यात् इति वचनस्य दृष्टान्तं अस्मिन् श्लोके मनुराह। वेदे विरुद्धभावेन यज्ञस्य विविधः कालो विहितः। यथा उदिते सूर्य्योदयकाले सूर्य्योदयात् परं इत्यर्थः यज्ञं कुर्य्यात् इत्येको विधिः। अनुदिते अनुदयकाले (अनुदयकालं व्याचष्टे "उदयात् पूर्व्वं अरुणकिरणवान् प्रविरलतारकः अनुदयकालः") (= Time before rising is the time just before sunrise, when the sky is red, stars being scarce therein") अर्थात् सूर्य्योदयात् प्राक् यज्ञं कुर्य्यात् इति द्वितीयो विधिः। तथा समयाध्युषिते काले "सूर्य्यनक्षत्रवर्ज्जितः कालः समयाध्युषितशब्देनोच्यते।" "Time when there is neither the sun nor the stars in the sky. यज्ञं कुर्य्यात् इत्यपि तृतीयो विधिरस्ति। तथापि यज्ञः सर्व्वथा = "विकल्पेन" वर्त्तते अर्थात् विविधेषु कालेषु परस्परविरुद्धेषु व्यवस्थितेषु सत्सु एतेषां मध्ये एकस्मिन् काले यज्ञः कर्त्तव्यः। Here यज्ञः does not mean the technical यज्ञः but it includes worship of gods generally. "देवतोद्देशेन द्रव्यत्यागगुणयोगात् यज्ञशब्दोऽत्र गौणः" यज्ञ has here secondary meaning, the offering of things to the gods being the common ingredient.

अरुण is the large red orb visible in the east just before sunrise. It is really the reflection of the sun visible in the atmosphere.

ELUCIDATION.—Time after sunrise, time just before sunrise when stars are not visible, time before sunrise when the sky is red, but a few stars are yet visible are the three divisions

of time. Yet there are three vedic injunctions each prescribing one of these divisions as the proper time for sacrifice. You cannot reject the authority of any one of these three contradictory texts. Therefore by the injunction laid down in the previous text you have a right to select optionally any one of these times for sacrifice.

PURPORT.—वेदे यज्ञस्य त्रिविधः परस्परविरुद्धः कालः निर्दिष्टः। यथा सूर्य्ये समुदिते सति यज्ञं कुर्य्यात्, सूर्य्योदयात् प्राक् यस्मिन् मुहूर्त्ते तारका न दृश्यते तस्मिन् यज्ञं कुर्य्यात्, तथा यस्मिन् काले सूर्य्यो नोदेति तारकाश्च दृश्यते दिशा रक्तवर्णाश्च भवति तस्मिन् काले यज्ञं कुर्य्यादिति। यद्यपि एते कालाः परस्परविरुद्धाः तथापि पागुक्तवचनबलेन तेषां मध्ये एकं कालं विकल्पेन गृहीत्वा यज्ञकर्म्मादि कुर्य्यात् इति व्यवस्था ॥ १५ ॥

MEANING IN ENGLISH.—In the veda there are three texts opposed to one another: "Let the sacrifice be when the sun has risen," and "before it has risen, while stars are not visible" and "before it has risen, when a few stars are visible, and the east becomes red". The sacrifice therefore may be performed optionally at any one of these times.

GRAMMATICAL NOTES. 1. उदिते—उदितम् उदयः अस्ति अस्मिन् उदितः। उदित + अच् अर्श आदिभ्यः। उत् - इ + क्तः भावे। Refers to time. कालाधिकरणे सप्तमी। 2. अनुदिते—न उदिते अनुदिते। नञ् समासः। It means technically a particular time. अधिकरणे सप्तमी। 3. समयाध्युषिते—It is a technical word for a particular time. कालाधिकरणे सप्तमी। अध्युषितम् is derived अधि - वस् + क्तः भावे। वसति अवात्सीत्। वत्स्यति उवास। 4. सर्व्वथा - सर्व्व + थाच्। 5. वर्त्तते वहते अवृतत् अवर्त्तिष्ट। 6. यज्ञः यज् + न। यजते यजति अयष्ट अयाक्षीत्। 7. इति Qualifies the previous sentence. 8. वैदिकी वेद + ठक् + ङीप्। 9. श्रुतिः श्रु + क्तिन्।

*Change of voice.*—इत्यनया वैदिक्या श्रुत्या श्रूयते। सर्व्वथा यज्ञेन वर्त्यते ॥ १५ ॥

BENGALI.—যথা বেদে বিহিত আছে উদয়কালে যজ্ঞ করিবে; সময়াধ্যুষিতনামক কালে অর্থাৎ যখন আকাশে তারকাদৃষ্ট হয় না অথচ সূর্য্যও উদিত হয় না, এমন সময়ে যজ্ঞ করিবে; এবং অনুদয়কালে অর্থাৎ যখন পূর্ব্বদিকে অরুণ উদিত হয়, মধ্যে মধ্যে

নক্ষত্রও দেখা যায় এমন সময়ে যজ্ঞ করিবে ; এই তিনটি কালই পরস্পর বিরুদ্ধ। অত-এব পূর্ব্বোক্ত বচন অনুসারে বিকল্পে ঐ তিন কালের যে কোন একটি কালে যজ্ঞ করা যায়॥ ১৫॥

ENGLISH.—(Thus goes) the Vedic revelation :—"The sacrifice is to take place when the sun has risen, and when the sun has not risen, and also when neither the sun nor the stars are visible". (And yet) the sacrifice takes place by all means. (15).

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्यशास्त्रेऽधिकारोऽस्मिन्ज्ञेयोनान्यस्यकस्यचित्॥ १६॥

PROSE.—यस्य मन्त्रैः निषेकादिश्मशानान्तः विधिः उक्तः अस्मिन् शास्त्रे तस्य अधिकारः ज्ञेयः अन्यस्य कस्यचित् (अधिकारः) न (ज्ञेयः)॥ १६॥

KULLUKA.—निषेकादीति। गर्भाधानादिरन्त्येष्टिपर्य्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठानकलाप उक्तो द्विजातेरित्यर्थः तस्यास्मिन् मानवधर्म्मशास्त्रेऽध्ययने श्रवणे चाधिकारः न त्वन्यस्य कस्यचिच्छूद्रादेः एतच्छास्त्रानुष्ठानञ्च यथाधिकारं सर्व्वैरेव कर्त्तव्यं प्रवचनमस्याध्यापनं व्याख्यानरूपं ब्राह्मणकर्त्तृकमेवेति विदुषा ब्राह्मणेनेत्यत्र व्याख्यातम्।

KULLUKA EXPLAINED.—निषेकादिश्मशानान्तः is explained as "गर्भाधानादिरन्त्येष्टिपर्य्यन्तः"। निषेको गर्भाधानसंस्कारः स आदिर्यस्य। अन्त्याइष्टिः मरणान्तकरणीयसंस्कारः पर्य्यन्तः अवधिर्यस्य सः। षोड़श संस्काराः। विधिः is explained by Kulluka as "अनुष्ठानकलापः" = The full complement of ceremonies. यस्य is explained as "वर्णस्य"। वर्ण means caste, but it has a special meaning. ब्राह्मण, क्षत्रिय, वैश्य and शूद्र—these four original castes are called वर्णाः। ब्राह्मणः क्षत्रियो वैश्य स्त्रयोवर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रोनास्तितु पञ्चमः (Manu). *i. e.* Brahmin, Khatriya, Vaishya, and Sudras—these four are varnas. The first three twice-born, the fourth is once-born. There is no fifth varna. The mixed castes as मूर्द्धाभिषिक्त, अम्बष्ट, माहिष्य, करण, &c. &c. are called जातिः but not वर्णः। By a certain fiction these are distributed under each of the four varnas for the performance of ceremonies. "यस्य मन्त्रैः निषेकादिश्मशानान्तो विधिः उक्तः" is explained by Kulluka as "द्विजाते रित्यर्थः" *i. e.* it is only द्विजाति or द्विजवर्ण such as Brahman, Kshatriya, Vaishya whose निषेकादिश्मशानान्तो विधिः

is to be performed by uttering vedic mantras. The fourth वर्णं sudra has ceremonies but has no right to utter mantras, nor are they to be accompained by vedic mantras. तस्य द्विजातेरित्यर्थः। अस्मिन् is explained as "मानवे धर्मशास्त्रे" अधिकारः is supplemented by "अध्ययने श्रवणे च" *i. e.* a द्विज alone has a right to read and hear this treatise. "अन्यस्य is explained as "शूद्रादेः" *i. e.* Sudras and mixed castes passing under that head according to the texts.

"एतच्छास्त्रानुष्ठानञ्च यथाधिकारं सर्व्वैरेव कर्त्तव्यम्। प्रवचनमस्य अध्यापनं व्याख्यानरूपं ब्राह्मणकर्त्तृकमेवेति विदुषा ब्राह्मणेनेत्यत्र व्याख्यातम्।" = The duties as laid down by this treatise must be performed by all the castes respectively as enjoined, but teaching and explanation of the treatise must be done by the Brahmans alone. This I have explained in the commentary on the text "vidushá brahmanena etc." (Vide commentary on Manu I. 103).

विदुषा ब्राह्मणेनेदं अध्येतव्यं प्रयत्नतः।
शिष्येभ्यश्च प्रवक्तव्यं सम्यक् नान्येन केनचित्। १ अ॥ १०३॥

ELUCIDATION.—Those whether mixed or original who are entitled to the performance of rites with mantras have been clearly laid down by Manu in the 10th chapter. Thus :—

सजातिजानन्तरजाः षट्सुता द्विजधर्म्मिणः। X. 41. "द्विजातीनां समानजातीयासु (भार्य्यासु) जाताः (त्रयः) तथा आनुलोम्येन उत्पन्नाः ब्राह्मणेन क्षत्रियायां वैश्यायां (मूर्द्धाभिषिक्ताम्बष्ठौ ?) क्षत्रियेण वैश्यायां (माहिष्यः), एवं षट् पुत्राः द्विजधर्म्मिणः उपनेयाः।" (Kulluka.) = Six sons of the twice-born castes are twice-born ; and are entitled to the sacred thread. These are (1) Brahmin's son from a Brahman wife (Brahmin), (2) Khatriya's son from a Khatriya wife (Khatriya), (3) Vaisay's son from a Vaisya wife (Vaisya), and (4) Brahman's son brought forth by a wife taken from Kshatriya caste ( Murdhabhishikta ), ( 5 ) by a wife taken from a Vaisya caste ( Ambastha ), Kshatriya's son begotten on a wife taken from Vaisya caste. (Mahishya). These six castes *viz.* (1) Brahman, (2) Kshatriya, (3) Vaisya, (4) Murdhabhishikta, ( 5 ) Ambastha, and ( 6 )

Mahishya have the rights of the twice-born (Kulluka). All other castes whether original or mixed are once-born and have no right to ceremonies accompanied by mantras. "यद्यपि स्त्रियाश्च होमासंभव स्तथापि विप्रद्वारा होमादि कारयेत्। एवं शूद्रस्यापि। अत्र माधवाचार्य्यः "यो विप्रः शूद्रदक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादिसिद्धये वैदिकैर्मन्त्रै र्जुहोति तस्य विप्रस्यैव दोषः। शूद्रस्तु होमफलं लभते एव इति व्याचष्टे इति निर्णयसिन्धुकारसिद्धान्तः।

PURPORT.—यस्य वर्णस्य मन्त्रोच्चारणपूर्व्वकः अनुष्ठानकलापः अस्ति अर्थात् यो वर्णः द्विजधर्म्मा तस्य वर्णस्य मनुक्तधर्म्मशास्त्रस्य अध्ययने श्रवणे च अधिकारोऽस्ति। किन्तु शूद्रस्य शूद्रधर्म्मिणः सङ्करस्य च तत्र अधिकारो नास्ति ॥ १६ ॥

MEANING IN ENGLISH.—He, all whose ceremonies from conception to funeral rite are to be accompanied by uttering the vedic mantras (*i. e.* he who is twice-born) has a right to read and listen to this code; but no other man whatever, such as a Sudra or the like, has any such right.

*Change of voice.*—अधिकारिणा ज्ञेयेन भूयते ॥ १६ ॥

GRAMMATICAL NOTES. (*a*) On the text.—1. निषेकादिश्मशानान्तः—निषेकः आदिर्यस्य स निषेकादिः बहुव्रीहिः। श्मशानं अन्ते यस्य स श्मशानान्तः। निषेकादिश्च श्मशानान्तश्च निषेकादिश्मशानान्तः कर्म्मधारयः। Qualifies विधिः। नि—सिच्+घञ्। शवानां शयनं श्मशानम् पृषोदरादित्वात् साधुः। 2. मन्त्रैः करणे तृतीया। मन्त्रयते अमीमन्त्रत। 3. यस्य शेषे षष्ठी। 4. विधिः वि—धा+कि। दधाति धत्ते अधात् अधित। 5. उदितः वद+क्तः कर्म्मणि। वदति उवाद अवादीत्। 6. तस्य कर्तृकर्म्मणोः कृतीति कर्तरि षष्ठी। 7. शास्त्रे—शास्+ष्ट्रन्। 8. ज्ञेयः—ज्ञा+यत्। अचो यत् इति यत्। ईद् यति इति आतईत् गुणः। 9. अन्यस्य शेषे षष्ठी। 10. कस्यचित् शेषे षष्ठी चित् प्रत्ययश्च।

BENGALI.—যাঁহার গর্ভাধান হইতে অন্ত্যেষ্টিক্রিয়াপর্য্যন্ত ক্রিয়াকলাপ মন্ত্রোচ্চারণ পূর্ব্বক সম্পাদিত হইবার বিধি আছে অর্থাৎ যিনি দ্বিজাতির অন্তর্গত, এই মানব ধর্ম্মশাস্ত্রের অধ্যয়নে ও শ্রবণে তাঁহারই অধিকার, অন্যের অর্থাৎ শূদ্রাদি অন্য কাহারও তাহাতে অধিকার নাই। নিজ নিজ অধিকার অনুসারে এই শাস্ত্রোক্ত কর্ম্মানুষ্ঠান সর্ব্ব বর্ণই করিতে পারেন। ১৬।

ENGLISH.—The privilege or right (to read and hear) this *Sastra* or code belongs to him—and to none else, (the performance of the 16) sacraments beginning with conception and ending in cremation has been in whose case declared (as accompanied) by (the chanting of) the *Mantras.* (16).

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥ १७ ॥

PROSE —देवनद्योः सरस्वतीदृषद्वत्योः यत् अन्तरं तं देवनिर्म्मितं देशं (पण्डिताः) ब्रह्मावर्त्तं प्रचक्षते ॥ १७ ॥

KULLUKA.—"धर्म्मस्य स्वरूपं प्रमाणं परिभाषाश्चोक्ता इदानीं धर्म्मानुष्ठानयोग्य-देशानाह सरस्वतीति। सरस्वतीदृषद्वत्योर्नद्योरुभयोर्म्मध्यं ब्रह्मावर्त्तं देशमाहुः, देव-नदीदेवनिर्म्मितशब्दौ नदीदेशप्रशंसार्थौ ॥ १७ ॥

KULLUKA EXPLAINED.—"धर्म्मस्य स्वरूपं प्रमाणं परिभाषाश्च उक्ता इदानीं धर्म्मानुष्ठानयोग्यदेशान् आह"। After giving a definition of dharma, showing the authority on which it is based, and the technical sense in which the word is used, now the author proceeds to describe places suitable to the performance of dharma. Kulluka might add "तथा धर्म्माधिकारिणश्च निरूप्य" after "परिभाषाश्च" in the above sentence.

"नद्योरुभयोर्मध्यम्" is the explanation of देवनद्योः यत् अन्तरम्। अन्तरम् means मध्यम्। नदीद्वयस्य अन्तरं व्यवधानं अन्तर्वर्त्तिस्थानं मध्यम्। "ब्रह्मावर्त्तं देशं आहुः" आहुः is the explanation of प्रचक्षते।

"देवनदी देवनिर्म्मितशब्दौ नदीदेशप्रशंसार्थौ" the word देव in the compounds देवनदी and देवनिर्म्मित indicates only praise. देवनिर्म्मितः देशः = A holy or sacred or praiseworthy country, and does not mean a country created by the gods. देवनदी does not mean a river where the gods take their bath.

PURPORT.—सरस्वतीदृषद्वत्योर्नाम श्रेष्ठनद्योः मध्ये यः प्रशस्तो देशः स ब्रह्मावर्त्तो नाम देशः ॥ १७ ॥

MEANING IN ENGLISH.—Between the two sacred rivers

Saraswati and Drisadvati lies that sacred land named by the sages as Brahmabarta.

*Change of voice.* – येन अन्तरेण भूयते। स देवनिर्म्मितोदेशः ब्रह्मावर्त्तः प्रच्यायते ॥ १७ ॥

GRAMMATICAL NOTES. – 1. सरस्वतीदृषद्वत्योः – सरस्वती च दृषद्वती च ते सरस्वतीदृषद्वत्यौ तयोः same case with देवनद्योः शेषे षष्ठी। सरस् + मतुप् + ङीप्। दृषद् + मतुप् ङीप्। दृषद् stone. सरस् stream. 2. देवनद्योः —देवानां सम्बन्धिन्यौ नद्यौ देवनद्यौ षष्ठी समासः। तयोः। नदट् + अच् नदी ङीप् टित्वात्। 3. यत् – Qualifies अन्तरम् = अवधानम्। 4. अन्तरम् – Nominative to the verb अस्ति understood. 5. तम् – Qualifies देशम्। 6. देवनिर्म्मितम् देवैः निर्म्मितम् qualifies देशम्। 7. देशम्— दिश्यते इति देशः दिश् + घञ्। अदिचत्। Acc. of प्रचक्षते। 8. ब्रह्मावर्त्तम् ब्रह्माणः ब्राह्मणाः अत पुनः पुन रावर्त्तन्ते जायन्ते इति ब्रह्मावर्त्तः तम्। ब्रह्म – आङ् – वृत + अच्। ब्रह्मणां आवर्त्तः अस्मिन् इति विग्रहेण व्यधिकरणो बहुव्रीहिः। 9. प्रचक्षते—प्र – चक्ष + अन्ते। अष्टे चख्यौ चख्ये चचक्षे। अख्यात् अख्यत।

BENGALI.—সরস্বতী ও দৃষদ্বতী এই দুই প্রশস্ত নদীর মধ্যবর্ত্তী শ্রেষ্ঠ দেশকে ব্রহ্মাবর্ত্ত দেশ বলে ॥ ১৭ ॥

ENGLISH.—The land which is between the two divine rivers, the Saraswati and the Drisadvati, that land, *created* by the gods, they (the wise) call Brahmavarta. (17).

तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १८ ॥

PROSE. – तस्मिन् देशे सान्तरालानां वर्णानां पारम्पर्य्यक्रमागतः य आचार स सदाचार उच्यते ॥ १८ ॥

KULLUKA. – तस्मिन् देश इति। तस्मिन् देशे प्रायेण शिष्टानां सम्भवात् तेषां ब्राह्मणादिवर्णानां सङ्कीर्णजातिपर्य्यन्तानां य आचारः पारम्पर्य्यक्रमागतो न लिदानीन्तनः स सदाचारोऽभिधीयते ॥ १८ ॥

KULLUKA EXPLAINED. – "तस्मिन् देशे प्रायेण शिष्टानां सम्भवात्" That being the place mostly inhabited by the learned in the vedas. "सान्तरालानां वर्णानाम्" has been explained as "ब्राह्मणादि-

वर्णानां (=ब्राह्मणक्षत्रियवैश्यशूद्राणाम्) सङ्कीर्णजातिपर्य्यन्तानाम्"। The four original castes together with the mixed castes. पारम्पर्य्यक्रमागतः is explained as "नत्विदानीन्तनः" = not modern *i. e.* ancient, handed down from generation to generation.

ELUCIDATION.—सदाचारः is frequently referred to in the texts. Here सदाचारः is defined.

PURPORT.—तस्मिन् ब्रह्मावर्त्ते देशे ब्राह्मणादिवर्णानां सङ्कराणाञ्च यः परम्परागतः व्यवहारः स एव सङ्कराणां तत्तद्वर्णानां सदाचार इति ज्ञातव्यम् ॥ १८ ॥

MEANING IN ENGLISH.—The custom handed down from generation to generation in that country, among the four original as well as the mixed castes, is called approved usage. (For that country is mostly inhabited by the learned in the vedas).

*Change of voice*—तं सदाचारं आहुः ॥ १८ ॥

GRAMMATICAL NOTES.—1. देशे अधिकरणे सप्तमी। 2. पारम्पर्य्यक्रमागतः। परम्पराशब्दः अव्युत्पन्नः। परम्परायाः भावः पारम्पर्य्यम् तस्य क्रमः षष्ठी समासः। तेन आगतः पारम्पर्य्यक्रमागतः। तृतीया समासः। 3. वर्णानाम्—शेषे षष्ठी। वर्णाः ब्राह्मणादयश्चत्वारः। 4. सान्तरालानाम्—अन्तरालेन मध्यवर्त्तिना मिश्रितेन सह वर्त्तमानाः सान्तरालाः तेषाम् qualifies वर्णानाम्। 5. यः refers to आचारः। 6. सदाचारः—सतां आचारः सदाचारः षष्ठी समासः। सदाचारः = शिष्टाचारः।

BENGALI.—সেই ব্রহ্মাবর্ত্তদেশে ব্রাহ্মণাদি বর্ণ, ও সঙ্কীর্ণজাতিদিগের পরম্পরাক্রমে আগত যে প্রাচীন আচার তাহাকেই সদাচার বলে; (কেননা সেই দেশ প্রধানতঃ বেদজ্ঞগণের বসতিস্থল)। ১৮।

ENGLISH.—The custom of the (four) castes together with the mixed ones which has been handed down by course of succession in that land is called good custom. (18).

**कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।**
**एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥ १९॥**

PROSE.—कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः एष वै ब्रह्मर्षिदेशः ब्रह्मावर्त्तात् अनन्तरः (भवति) ॥ १९ ॥

KULLUKA.—कुरुक्षेत्रमिति मत्स्यादिशब्दा बहुवचनान्ता एव देशविशेषवाचका: पञ्चाला: कान्यकुब्जदेशा: शूरसेनका मथुरादेशा: एष ब्रह्मर्षिदेशो ब्रह्मावर्तात् किञ्चिदून: ॥ १९ ॥

KULLUKA EXPLAINED.—"मत्स्यादिशब्दा बहुवचनान्ता एव देशविशेषवाचका:"। The words मत्स्य पञ्चाल शूरसेनक &c. when used in the plural number mean a country. पञ्चालदेश: is explained as कान्यकुब्जदेश:। शूरसेनकदेश: means मथुरादेश:। The word अनन्तर: is explained as "किञ्चित् ऊन:" *i. e.* next in sacredness.

PURPORT.—कुरुक्षेत्रदेश: विराटदेश: कान्यकुब्जदेश: मथुरादेशश्च एते ब्रह्मर्षिदेशशब्देन कथ्यन्ते। ब्रह्मर्षिदेशो हि ब्रह्मावर्त्तदेशात् प्राशस्त्यविषये किञ्चिन्न्यूनतर: ॥१९॥

ELUCIDATION.—Nilkantha in his commentary on Mahabharat says:—"Draw a straight line from the mouth of the Godavari to Hardwar. Hastina and the country of the Panchalas will fall to the north-east of the line". Thus Panchala is Kanyakubja.

MEANING IN ENGLISH.—Kurukshetra, Matshya, Kanyakubja, and Mathura form the region called Brahmarshidesa, which is slightly inferior to Brahmabarta.

*Change of voice.*—कुरुक्षेत्रेण मत्स्यै: पञ्चालै: शूरसेनकै: एतेन ब्रह्मर्षिदेशेन ब्रह्मावर्त्तात् अनन्तरेण भूयते ॥ १९ ॥

GRAMMATICAL NOTES.—1. कुरुक्षेत्रम् कुरोर्नाम राज्ञ: क्षेत्रं यज्ञभूमिरूपं कुरुक्षेत्रम् षष्ठी समास:। 2. मत्स्या: पञ्चाला: शूरसेनका:—मत्स्यानां निवासो जनपद: (country) मत्स्या:। मत्स्य+अण्। Then अण् drops by जनपदे लुप्। अण् अञ् &c. drop when a country is meant, मत्स्य remains. Then by the sutra लुपियुक्तवद्व्यक्तिवचने we get the gender and number as if the suffix had not been dropped. मत्स्या: (masculine and plural). In the same way we get पञ्चालानां निवासो जनपद: पञ्चाला: शूरसेनकानां निवासो जनपद: शूरसेनका:। This was the view held by grammarians anterior to Panini who holds that such words are संज्ञाशब्द and do not require any rule of grammar to justify their gender and number—"तदशिष्यं संज्ञाप्रमाणत्वात्"। Therefore Kulluka says "मत्स्यादिशब्दा बहुवचनान्ता एव

देशविशेषवाचकाः" *i. e.* he explains by referring to the last quoted sutra शूरसेनकाः – शूराः सेना यस्य स शूरसेनः राजन्यादिभ्यो वुञ् शूरसेनकः जनपदार्थे बहुवचनम्। 3. ब्रह्मर्षिदेशः – ब्रह्मा + ऋषिः = ब्रह्मर्षिः। पक्षे ऋत्वः प्रकृतिभावश्च। ब्रह्म – ऋषिः। In compound we have thus the above forms by ऋत्यकः। ब्रह्मर्षेः देशः ब्रह्मर्षिदेशः or ब्रह्मा ऋषि र्यत्र स ब्रह्मर्षिः सचासौ देशश्च। बहुव्रीहिः then कर्म्मधारयः। 4. ब्रह्मावर्त्तात् – अन्यारादिति पञ्चमी। अन्येत्यर्थग्रहणमिति भट्टोजिव्याख्यानम्। भेदार्थकशब्दमात्र-ग्रहणमिति व्याख्यानाच्च अन्यार्थकशब्दयोगे पञ्चमी। Derived. 5. अनन्तरः – न विद्यते अन्तरं व्यवधानं यस्य सः अनन्तरः। बहुव्रीहिः। अव्यवधानवर्त्ती अर्थात् किञ्चित् हीनः।

Bengali.—কুরুক্ষেত্র, মৎস্যদেশ, কান্যকুব্জদেশ, ও মথুরা ব্রহ্মর্ষিদেশ বলিয়া খ্যাত ; ব্রহ্মর্ষিদেশ ব্রহ্মাবর্ত্ত হইতে কিঞ্চিৎ হীনতর ॥ ১৯ ॥

English.—*Kurukshetra*, *Matsya*, *Panchala*, *Surasenaka*, these are the *Brahmarsi* land (which is) next (in point of sacredness) to *Brahmavarta*. (19).

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः ॥२०॥

Prose. – पृथिव्यां सर्व्वमानवाः एतद्देशप्रसूतस्य अग्रजन्मनः सकाशात् स्वं स्वं चरित्रं शिक्षेरन् ॥ २० ॥

Kulluka. – एतद्देश इति। कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात् सर्व्वमनुष्या आत्मीयमात्मीयमाचारं शिक्षेरन् ॥ २० ॥

Kulluka explained.—एतद्देशप्रसूतस्य is explained "कुरुक्षेत्रादिदेश-जातस्य" एतद् refers to ब्रह्मर्षिदेशः : सर्व्वमानवाः means "सर्व्वमनुष्याः" the four original and the mixed castes. स्वं स्वं = "आत्मीयं आत्मीयम्" वर्णानां जातीनाञ्च आचारभेदात् स्वं स्वमिति यथाक्रमप्रातिनिर्द्देशः। ब्राह्मणो ब्राह्मणस्य क्षत्रियः क्षत्रियस्येत्यादि। शिक्षेरन् इति विधिः।

Purport. – ब्रह्मर्षिदेशस्था ये ब्राह्मणा तेषां समीपात् सर्व्वे मानवाः यथा। यथाजाति स्वं स्वं आचारं जानीयुः॥ २० ॥

**Meaning in English.** – From a Brahmin born in that country, let all men on earth learn their several usages.

*Change of voice.* – सर्व्वमानवैः......चरित्रं शिक्ष्येत ॥ २० ॥

GRAMMATICAL NOTES. – 1 एतद्देशप्रसूतस्य – एष देशः एतद्देशः। कर्म्मधारयः। ऐतद्देशे प्रसूतः एतद्देशप्रसूतः सप्तमी समासः by the योगविभागसूत्रम् "सप्तमी" from सप्तमी शौण्डादिभिः तस्य qualifies अग्रजन्मनः। सूते सुषुवे असोष्ट असविष्ट। सूसूधूञिति वेटत्वात्। 2. अग्रजन्मन: – अग्रे जन्म यस्य स अग्रजन्मा ब्राह्मणः। ब्रह्मणः मुखात् अग्रे ब्राह्मणो जज्ञे। लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयदिति मनुः। जन+मनिन् जन्मन्। जायते अजनिष्ट अजनि। शेषे षष्ठी। connected with सकाशात्। 3. सकाशात् – आख्यातोपयोगे पञ्चमी। उपयोगे नियमपूर्व्वकविद्यास्वीकारे आख्याता वक्ता अपादानं स्यात्। अत्र शिक्षधातुना विद्यास्वीकारस्य गौणत्वेऽपि तेनैव पञ्चमी। सकाशः vicinity. 4. स्वं स्वम् – वीप्सायां द्विर्व्वचनम् qualifies चरित्रम्। 5. चरित्रम् – कर्म्मणि द्वितीया Acc. of शिक्षेरन्। अचारीत्। चर+इत्र by अर्त्तिलूधूसूखनसहचर इत्रः। अरित्रम् लवित्रम् धवित्रम् सवित्रम् खनित्रम् सहित्रम् चरित्रम्। 6. सर्व्वमानवाः – सर्व्वे मानवाः सर्व्वमानवाः। कर्म्मधारयः। 7. पृथिव्याम् – अधिकरणे सप्तमी वर्त्तमाना इति अध्याहार्य्यक्रियाया अधिकरणम्। प्रथ+षिवन्। 8. शिक्षेरन् – शिक्ष+ईरन् लिङ्। शिक्षते अशिक्षिष्ट। शिक्षेत शिक्षेयाताम् शिक्षेरन्। An injunction is laid down. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति लिङ्।

शिक्षेरन् – विधिनिमन्त्रणादिसूत्रेण विधिरेव लिङोमुख्योऽर्थः। निमन्त्रणामन्त्रणादयस्तु अर्थाः विध्यर्थस्यैव प्रपञ्चः। तत्र विधिशब्दस्य अर्थज्ञानं आवश्यकम् अस्मिन् ग्रन्थे बहवो विषयः सन्ति ते च लिङा एव प्रायेण निर्द्दिष्टाः। गौणमुख्यभावेन सर्व्वत्रैव लिङो विध्यर्थत्वम्। तत्र प्रश्नः को विधिरिति। ननु प्रवृत्त्यनुकूलव्यापारोविधिः। यथा शिक्षेरन् इत्यत्र शिक्षाविषयकप्रवृत्त्यनुकूलोव्यापारविशेषो विधिः स एवात्र लिङर्थः। अनेन इष्टं साध्यते इतिरूपेष्टसाधनताज्ञानमेव प्रवृत्त्यनुकूलव्यापारः। तेन इष्टसाधनता एव विधिः। तस्मात् इष्टसाधनताज्ञानस्य विधेः प्रवर्त्तकत्वम्। विधिबोधजनकत्वात् विधिवाक्यस्य प्रवर्त्तकत्वम्। उक्तञ्च मण्डनमिश्रैः प्रवृत्तिहेतुं धर्म्मञ्च प्रवदन्ति प्रवर्त्तनामिति। वाचस्पतिप्रभृतयः। वस्तुतस्तु अनेन कर्म्मणा इदं अभिलषितफलं साध्यते इति ज्ञाने जाते सति लिङ् प्रवर्त्तयति नान्यथा। लिङाख्यो लकारः कर्म्मसु प्रवर्त्तक इति हेतोः विध्यर्थक उच्यते।

BENGALI.—এই সমুদয় দেশজাত ব্রাহ্মণের নিকট হইতে পৃথিবীর যাবতীয় মনুষ্য নিজ নিজ আচার ব্যবহার শিক্ষা করিবেক। ২০।

ENGLISH—All men in the world should learn their own respective course of conduct from a first-born (Brahmin) born in this country. (20).

**हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि।**
**प्रत्यगेव प्रयागाच्च मध्यदेश: प्रकीर्त्तित:॥ २१॥**

PROSE. – यत् हिमवद्विन्ध्ययो: मध्यं विनशनात् अपि प्राक्, प्रयागात् च प्रत्यक् च, (स:) मध्यदेश: प्रकीर्त्तित:॥ २१॥

KULLUKA. – हिमवदिति। उत्तरदक्षिणदिगवस्थितौ हिमवद्विन्ध्यौ पर्व्वतौ योर्यन्मध्यं विनशनात् सरस्वत्यन्तर्द्धानदेशात् यत् पूर्व्वं प्रयागाच्च यत् पश्चिमं स ध्यदेशनामा देश: कथित:॥ २१॥

KULLUKA EXPLAINED. – The position of the Himalaya and e Vindhya mountains is described "उत्तरदक्षिणदिगवस्थितौ" ne lies to the north and the other to the south. What are मवान् and विन्ध्य: ? *Answer.* "पर्व्वतौ" यत् स्थानं हिमाचलविन्ध्ययो मध्ये नशनात् प्राक् पूर्व्वम्, प्रयागात् प्रत्यक् पश्चिमं इति वक्तुं आह "विनशनात् यत् वं प्रयागाच्च यत् पश्चिमम्" "स:" इति विधेयप्राधान्यात् पुंस्त्वं आहु: कुल्लूकभट्टा:।
विनशनशब्दस्यार्थमाह "सरस्वत्यन्तर्धानदेशात्" *i.e.* तत् स्थानं विनशनं इति थ्यते यत्र सरस्वती देवनदी नश्यतिस्म। तच्च कुरुक्षेत्रप्रान्ते।

PURPORT. – यत् हिमवद्विन्ध्याचलयोर्मध्यस्थानं विनशनतीर्थात् पूर्व्वं प्रयागात् श्चमं च स मध्यदेश:॥ २१॥

MEANING IN ENGLISH. – That country which is bounded n the north by the Himalaya, and on the south by the Vindhya ountains, on the west by Binasana, and on the east by 'ayaga, is known as the Madhya or central country.

*Change of voice.* – येन मध्यन, विनशनात् प्राचा प्रयागात् प्रतीचा तेन यदेशेन प्रकीर्त्तितेन भूयते॥ २१॥

GRAMMATICAL NOTES.—**1.** हिमवद्विन्ध्ययो:—हिमं विद्यते अस्य मवान् सच विन्ध्यश्च हिमवद्विन्ध्यौ द्वन्द्व:। तयो: शेषे षष्ठी। **2.** मध्यम्—ualifies यत् which again refers to स्थानम्। **3.** विनशनात् अप्पूर्व-

पदयोगात् पञ्चमी by अन्यारादिति। प्राक् being अस्तुत्तरपदम्। वि – नश + ल्युट्। अनशत् अनेशत्। 4. प्राक् प – अञ्च + क्विप्। Neuter प्राक् प्राची प्राञ्चि। 5. प्रयागात् अस्तुत्तरपदयोगात् पूर्व्ववत् पञ्चमी। प्र – यज + घञ्। प्र—इज्यते अत्र प्रयाग:। अत्र ब्रह्मा स्वयं यज्ञं चकारेति प्रयाग: प्रकृष्टयाग इति भारतीया कथानुसन्धेया। 6. प्रत्यक् प्रति – अञ्च् + क्विप्। प्राक् and प्रत्यक् both qualify यत्। अचति भानस्य आचीत्। 7. मध्यदेश: मध्यश्चासौ देशश्च। कर्म्मधारय:। 8. प्र – कृत + क्त: कर्म्मणि (णिच्)।

BENGALI.—যে স্থান উত্তরস্থ হিমালয় ও দক্ষিণস্থ বিন্ধ্য পর্ব্বতের মধ্যবর্ত্তি, এবং যাহা বিনশনের পূর্ব্ব এবং প্রয়াগের পশ্চিম, তাহাকে মধ্যদেশ বলে॥ ২১॥

ENGLISH.—The country which is between the Himalaya and the Vindhya hills, is to the east of *Vinasana* or the terminus of the Saraswati, and is to the west of Prayaga (Allahabad) is called *Madhyadesa* or the central country. (21).

आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधा:॥ २२॥

PROSE.—आ पूर्व्वात् समुद्रात् आ पश्चिमात् समुद्रात् तयो: एव गिर्य्यो: अन्तरं बुधा: आर्य्यावर्त्तं विदु:॥ २२॥

KULLUKA.—आसमुद्रात्त्विति। आपूर्व्वसमुद्रात् आपश्चिमसमुद्रात् हिमवद्विन्ध्ययोश्च यन्मध्यं तमार्य्यावर्त्तदेशं पण्डिता जानन्ति। मर्य्यादायामयमाङ् नाभिविधौ तेन समुद्रमध्यद्वीपानां नार्य्यावर्त्तता। आर्य्या अत्रावर्त्तन्ते पुनपुनरुद्भवन्तीत्यार्य्यावर्त्त:॥२२॥

KULLUKA EXPLAINED.—अन्तरम् has been explained as "मध्यम्"। बुधा. = "पण्डिता:।" विदु: = "जानन्ति"।

"मर्य्यादायां आङ् नाभिविधौ तेन समुद्रमध्यद्वीपानां नार्य्यावर्त्तता"। The meaning of आङ् is मर्य्यादा exclusion and not अभिविधि inclusion. Therefore the islands in the eastern and western oceans are not included in Aryabarta. "तेनविना मर्य्यादा तनसहितोऽभिविधि:।" (Vide Grammatical notes.) आर्य्यावर्त्त: is derived by Kulluka as "आर्य्या अत्र &c."

PURPORT.—पूर्व्वसमुद्रात् पश्चिमं पश्चिमसमुद्रात् पूर्व्वं हिमवतो दक्षिणं विन्ध्यात् उत्तरं यत् स्थानं तं आर्य्यावर्त्तं कथयन्ति पण्डिताः ॥ २२ ॥

MEANING IN ENGLISH.—Commencing from the Eastern Ocean on the east and from the Western Ocean on the west, the space between the same two mountains Himalaya and Vindhya the wise have called Aryabarta or the land of the Aryans.

*Change of voice.*—अन्तरं आर्य्यावर्त्तः बुधैः विदुते ॥ २२ ॥

GRAMMATICAL NOTES—1. समुद्रात्—पञ्चमी by पञ्चम्यपाङ्परिभिः *i. e.* पञ्चमी is added in connection with अप् आङ् and परि when they are regarded as कर्म्मप्रवचनीय। आङ् becomes कर्म्मप्रवचनीय both in मर्य्यादा and अभिविधि by आङ् मर्य्यादावचने। वचनग्रहणात् अभिविधावपि कर्म्मप्रवचनीयत्वमितिशेषः। आ मुक्तेः संसारः। आ सकलात् ब्रह्म। When compounded in the अव्ययीभाव form under the rule आङ् मर्य्यादाभिविध्योः we have आसमुद्रम् and not आसमुद्रात्। But आ समुद्रात् is correct when not compounded. मुद्रया सह वर्त्तमानः समुद्रः or सम् –उत्+रा+क। 2. पूर्व्वात् and पश्चिमात् qualify समुद्रात्। 3. गिर्य्योः—शेषे षष्ठी। पूर्व्वोक्तयोः हिमवद्विन्ध्ययोरित्यर्थः। 4. तयोः—qualifies गिर्य्योः। 5. बुधाः—बुध+क। बुध्यन्ते इति बुधाः। इगुपध इति कः। अबुद्ध अबोधि। बोधति बोधते। अबुधत् अबोधीत् अबोधिष्ट। 6. विदुः—विद्+उस्। by विदोलटो वा वेत्तेलटः परस्मैपदानां णलादयः वा स्युः। वेद विदतुः विदुः। वेत्थ विदथुः विद। वेद विद्व विद्म। पक्षे वेत्ति वित्तः विदन्ति इत्यादि। विवेद विदाञ्चकार। 7. आर्य्यावर्त्तम्—आर्य्य+आङ्—वृत+घञ् vide कुल्लूकः। आरात् धर्म्मात् विद्यन्ते इति आर्य्या इति वाचस्पतिमिश्राः। ऋहलोर्ण्यत् इति सूत्रेण ऋधातोर्ण्यता आर्य्यः गम्य इत्यर्थकः स्यात् कृत्यप्रत्ययस्यबाहुलकात् कर्त्तर्य्यपि स्यात् भवितुमर्हति। आर्य्यो गन्ता।

BENGALI.—পূর্ব্বদিকে পূর্ব্বসমুদ্র এবং পশ্চিমদিকে পশ্চিমসমুদ্র এবং উত্তরে হিমালয় ও দক্ষিণে বিন্ধ্য এই উভয় পর্ব্বতের মধ্যে যে স্থান তাহাকে পণ্ডিতগণ আর্য্যাবর্ত্ত বলেন। ২২।

**ENGLISH.—The land between these two mountains, (spreading) up to the eastern and the western sea, they (the wise) call Aryavarta. (22).**

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।**
**स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः॥ २३ ॥**

PROSE.—कृष्णसारः मृगः यत्र तु स्वभावतः चरति स यज्ञियः देशः ज्ञेय ततःपरः म्लेच्छदेशः ज्ञेयः ॥ २३ ॥

KULLUKA.—कृष्णसारस्त्विति। कृष्णसारो मृगो यत्र स्वभावतो वसति न तु बलादानीतः स यज्ञार्हो देशो ज्ञातव्यः अन्यो म्लेच्छदेशो न यज्ञार्ह इत्यर्थः ॥ २३ ॥

PURPORT.—यस्मिन् देशे कृष्णसारो मृगः स्वभावतः विचरति स यज्ञार्ह देशः ज्ञेयः ततो बहिर्भागे यो देशः स यज्ञानर्हः देश इति मन्तव्यम् ॥ २३ ॥

MEANING IN ENGLISH.—That land on which the spotted antelope naturally grazes is held fit for the performance of sacrifices; beyond that is the land of barbarians unfit for the performance of a sacrifice.

*Change of voice.*—कृष्णसारेण मृगेण चर्य्यते। तेन यज्ञियेन देशेन ज्ञेयेन भूयते... म्लेच्छदेशेन भूयते ॥ २३ ॥

GRAMMATICAL NOTES.—कृष्णसारः – कृष्णश्चासौ सारश्च कृष्णसारः वर्णोवर्णेनेति समासः। कृष्णः and सारः are not समानाधिकरण, the colours exist in the different parts of the body and not as सुन्दरः and पुरुषः in a सुन्दरपुरुषः। Therefore special sutra is necessary. 2. यज्ञियः—यज्ञ + घ। 3. म्लेच्छदेशः म्लेच्छानां देशः म्लेच्छदेशः। म्लेच्छ अव्यक्तायां वाचि। म्लेच्छति अपभाषते इति म्लेच्छः। गोमांसखादको यश्च विरुद्धं बहुभाषते। सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते इति बौधायने। 4. ततः तद् + तसिल् अन्यारादिति पञ्चमी। 5. मृग्यते इति मृगः।

BENGALI.—যে স্থানে কৃষ্ণসার মৃগ স্বভাবতঃ বিচরণ করে সেই স্থানকে যজ্ঞার্হ দেশ বলে; তাহার বাহিরে যে দেশ তাহাকে ম্লেচ্ছ দেশ বলে; সেই স্থান যজ্ঞের উপযুক্ত নহে॥ ২৩॥

ENGLISH.—The country where the black-spotted antelope is found to roam as native to the soil is to be known as a land fit for sacrifices; beyond it is the Mlechha land. (23).

**एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः।**
**शूद्रस्तु यस्मिन्कस्मिन् वा निवसेद्वृत्तिकर्शितः॥ २४ ॥**

PROSE.—द्विजातय: एतान् देशान् प्रयत्नत: संश्रयेरन् शूद्रस्तुवृत्तिकर्षित: यस्मिन् कस्मिन् वा निवसेत् ॥ २४ ॥

KULLUKA.—एतानिति। अन्यदेशोद्भवा अपि द्विजातयो यज्ञार्थत्वाद्दृष्टार्थत्वाच्च एतान् देशान् प्रयत्नादाश्रयेरन् शूद्रस्तु वृत्तिपीड़ितो वृत्त्यर्थम् अन्यदेशमप्याश्रयेत् ॥ २४ ॥

KULLUKA EXPLAINED.—द्विजातय: is explained as अन्यदेशोद्भवा अपि द्विजातय: twice-born classes even if born in other countries. यज्ञार्थत्वात् दृष्टार्थत्वात् च for spiritual as well for temporal benefit. वृत्तिपीड़ित: is explained as वृत्त्यर्थम् for earning livelihood.

PURPORT.—ब्राह्मणक्षत्रियवैश्या: अन्यदेशोद्भवा अपि पूर्व्वोक्तान् देशान् यत्नाद्दान् आश्रयेरन्। शूद्रास्तु एतान् अन्यान् देशान् आजीवनार्थं आश्रयेरन् ॥ २४ ॥

MEANING IN ENGLISH.—Let the twice-born classes even if born in other countries live in the countries mentioned above. But a Sudra distressed for subsistence may live in any country.

*Change of voice.*—द्विजातिभि: एते देशा: संश्रीयेरन्। शूद्रेण तु...... वृत्तिकर्षितेन.........उष्येत ॥ २४ ॥

GRAMMATICAL NOTES.—1. द्विजातय: द्वे जाती उत्पत्ती येषां ते द्विजातय:। ब्राह्मणक्षत्रियवैश्या:। 2. संश्रयेरन् - सं + श्रि + ईरन् लिङ्। श्रयति श्रयते। शिश्राय शिश्रिये। अशिश्रियत् - त। 3. देशान् - Acc. of संश्रयेरन् 4. एतान् qualifies देशान्। 5. प्रयत्नत: - प्र + यत + न। यतते येन प्रयतिष्ट। तृतीया करणे। तृतीयाया: तस्। 6. शूद्र:—Nom. to निवसेत्। शोचति अज्ञानान्धत्वात् शूद्र: निपातनात् सिद्ध:। 7. निवसेत् + वस - यात् लिङ्। अवात्सीत् वत्स्यति उवास। 8. वृत्तिकर्षित: - वर्त्तते जीवति अनया इति वृत्ति:। तया कर्षित: वृत्तिकर्षित: तृतीया समास:। कृष् + क्त णिच् स्वार्थे 9. यस्मिन् कस्मिन् uncertainty implied, qualify देशे understood.

BENGALI.—যাহারা দ্বিজাতি তাহারা অন্য দেশোদ্ভব হইলেও যত্নপূর্ব্বক ঐ সকল দেশ আশ্রয় করিবেন, কেননা ঐ সকল দেশ যজ্ঞার্হ এবং তথায় জীবিকা উৎকৃষ্ট; কিন্তু শূদ্রগণ জীবিকা অর্জ্জনের জন্য যে কোন দেশে বসতি করিতে পারে। ২৪।

**ENGLISH.—The twice-born should with care resort to these countries. The Sudras may, (when) distressed for a livelihood, live in any country whatsoever. (24).**

एषा धर्मस्य वो योनिः समासेन प्रकीर्त्तिता।
सम्भवश्चास्य सर्व्वस्य वर्णधर्म्मान् निबोधत ॥ २५ ॥

PROSE.—एषा वो धर्म्मस्य योनिः समासेन प्रकीर्त्तिता। अस्य सर्व्वस्य सम्भवश्च (प्रकीर्त्तितः)। (इदानीं) वर्णधर्म्मान् निबोधत ॥ २५ ॥

KULLUKA.—एषा धर्म्मस्येति। एषा युष्माकं धर्म्मस्य योनिः संक्षेपेणोक्ता योनिर्ज्ञानकारणं वेदोऽखिलो धर्म्ममूलमित्यादिना उक्तमित्यर्थः। गोविन्दराजस्तु धर्म्मशब्दोऽपूर्व्वाख्यात्मकधर्म्मे वर्त्तते इति विद्वद्भिः सेवित इत्यत्र तत्कारणेऽष्टकादौ वा पूर्व्वाख्यस्य धर्म्मस्य योनि रिति व्याख्यातवान्। सम्भवश्चोत्पत्तिर्जगत इत्युक्ता इदानीं वर्णधर्म्मान् शृणुत। वर्णधर्म्मशब्दश्च वर्णधर्म्माश्रमधर्म्मवर्णाश्रमधर्म्मगुणधर्म्म-नैमित्तिकधर्म्माणामुपलक्षकः। ते च भविष्यपुराणोक्ताः। वर्णधर्म्मः स्मृतस्त्वेक आश्रमाणामतः परम्। वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा। वर्णधर्म्मः स उक्तस्तु यथोपनयनं नृप। यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते। स खल्वाश्रम-धर्म्मस्तु भिक्षादण्डादिको यथा। वर्णत्वमाश्रमत्वञ्च योऽधिकृत्य प्रवर्त्तते। स वर्णा-श्रमधर्म्मस्तु मौञ्जीया मेखला यथा। यो गुणेन प्रवर्त्तेत गुणधर्म्मः स उच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम्। निमित्तमेकमाश्रित्य यो धर्म्मः सम्प्रवर्त्तते। नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥ २५ ॥

KULLUKA EXPLAINED.—एषा refers to योनिः। वः = "युष्माकम्"। योनिः = "ज्ञानकारणम्" means of knowing. प्रकीर्त्तिता = "उक्ता" declared. समासेन = "संक्षेपेन" briefly. Q. How योनिः उक्ता (declared)? Ans. "वेदोऽखिलो धर्म्ममूलमित्यादिना उक्तमित्यर्थः" Declared in the couplet वेदोऽखिलो धर्म्ममूलमिति (II. 6.)

"गोविन्दराजस्तुव धर्म्मशब्दः अपूर्व्वाख्यात्मकधर्म्मे वर्त्तते इति विद्वद्भिः। सेवित इत्यत्र तत्कारणे अष्टकादौ च अपूर्व्वाख्यस्य धर्म्मस्य योनिरिति व्याख्यातवान्।" Govindaraja supposed that the word dharma here means that dharma which is called अपूर्व्व। After the performance of a duty, the effect remains in a certain condition called अपूर्व्व which stands till it exhausts itself by producing some other effect. According to Govindaraja अपूर्व्व is the meaning of धर्म्म here. Therefore the योनि of धर्म्म is the cause of अपूर्व्व which

lies in the performance of sradh like Ashtaka and so on. Kulluka does not approve the explanation of Govindaraja.

सम्भवः is explained as उत्पत्तिः "वर्णधर्म्मशब्देन &c." = The word वर्णधर्म्माः includes (*a*) वर्णधर्म्माः, (*b*) आश्रमधर्म्माः, (*c*) वर्णाश्रमधर्म्माः, (*d*) गुणधर्म्माः and (*e*) नैमित्तिक धर्म्माः।

They are described in the Bhabishya Purana quoted in the commentary.

PURPORT.—हे मुनयः मया संक्षेपेण धर्म्मस्य प्रमिकारणं उक्तम्, अस्य जगतः सृष्टिश्च उक्ता। इदानीं मत्तः वर्णधर्म्मं आश्रमधर्म्मं वर्णाश्रमधर्म्मं गुणधर्म्मं नैमित्तिक-धर्म्मं च शृणुत ॥ २५ ॥

MEANING IN ENGLISH.—I have thus declared to you the means by which dharma may be known, as well as the creation of the universe. Now know the several duties known as duties of caste, duties of stages of life, duties of castes and stages together, duties appertaining to special functions, and duties arising from accident.

*Change of voice.*—एतां धर्म्मस्य योनिं अहं कीर्त्तितवान्। सम्भवञ्च। वर्णधर्म्माः निबुध्यताम् ॥ २५ ॥

GRAMMATICAL NOTES.—**1.** एषा qualifies योनिः। **2.** योनिः Acc. of कीर्त्तिता in the passive voice. **3.** सम्भवः Acc. of कीर्त्तितः understood. यु + निः। सम् – भू + अप्। **4.** धर्म्मस्य षष्ठी:। **5.** समासेन प्रकृत्यादिभ्यस्तृतीया। सम् – अस + घञ्। अस्यति आस्यत्। **6.** वर्णधर्म्मान् Acc. of निबोधत। वर्णानां धर्म्माः षष्ठी सः। **7.** निबोधत (vide II. 1.)

BENGALI.—হে মুনিগণ, আমি আপনাদের নিকট ধর্ম্ম জানিবার উপায়, ও এই জগতের উৎপত্তি সংক্ষেপে নির্দ্দেশ করিয়াছি; এখন আপনারা আমার নিকট বর্ণধর্ম্ম, আশ্রমধর্ম্ম, বর্ণাশ্রমধর্ম্ম, গুণধর্ম্ম ও নৈমিত্তিক ধর্ম্ম শ্রবণ করুন। ২৫।

ENGLISH.—This is the source of *dharma* or duty told to you briefly; and also the genesis of the universe (has been told). (Now) learn the duties of the castes (and the various stages of life) (25).

**वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।**
**कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥**

PROSE.—पुण्यैः वैदिकैः कर्म्मभिः द्विजन्मनां प्रेत्य च इह च पावनः निषेकादिः शरीरसंस्कारः कार्य्यः ॥ २६ ॥

KULLUKA.—वैदिकैरिति। वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रयोगादिकर्म्मभिः द्विजातीनां गर्भाधानादिशरीरसंस्कारः कर्त्तव्यः। पावनः पापक्षयहेतुः प्रेत्य परलोके संस्कृतस्य यागादिफलसम्बन्धात् इहलोके च वेदाध्ययनाद्यधिकारात् ॥ २६ ॥

KULLUKA EXPLAINED.—पावनः पवित्रताविधायकः = "पापक्षयहेतुः" प्रेत्य पावनः "परलोके संस्कृतस्य यागादिफलसम्बन्धात्" = यः संस्कृतोभवेत् स एव द्विजः एतज्जन्मकृतस्य यागस्य फलं परलोके लभेत। "इहलोके च वेदाध्ययनाद्यधिकारात्" = In this life also becomes entitled to the study of the vedas, when one observes these ceremonies.

PURPORT.—ब्राह्मणक्षत्रियवैश्यानां गर्भाधानादिसंस्काराः कर्त्तव्याः। कैः? पुण्यैः वैदिकैर्मन्त्रैः। कथम्? कृते हि संस्कारे अस्मिन् लोके वेदपाठादिष्वधिकारी जायते परलोके च इह जन्मनि कृतस्य यज्ञस्य फल प्राप्तिः ॥ २६ ॥

MEANING IN ENGLISH.—The twice-born castes must perform with the sacred vedic rites ceremonies from conception &c. They purify them in this as well as in the next world. (26).

*Change of voice.*—शरीरसंस्कारेण कार्य्येण भूयते। पावनेन ॥ २६ ॥

GRAMMATICAL NOTES.—1. कर्म्मभिः करणे तृतीया। 2. वैदिकैः qualifies कर्म्मभिः। 3. पुण्यैः—qualifies कर्म्मभिः पूञ्+यत् by पूञो यत्णुक् ह्रस्वश्च। पुनाति पुनीते। अपावीत् अपविष्ट। 4. निषेकादिः—निषेकः आदिर्यस्य सः बहुव्रीहिः। नि—सिच्+घञ। 5. कृ+ण्यत् कार्य्य। 6. शरीरसंस्कारः शरीरस्य संस्कारः शरीरसंस्कारः। षष्ठी समासः। सम्—कृ+घञ्। सम्पर्य्युपेभ्यः करोतौ भूषणे इति सुट्। 7. पावनः—पू—णिच्+ल्युः। 8. प्रेत्य —प्र—इ+ल्यप्। अव्ययम् or प्रेत्य प्राप्ते लोके इत्यर्थः। 9. द्विजन्मनाम्—द्वे जन्मनी येषां ते द्विजन्मानः तेषाम् शेषे षष्ठी।

BENGALI.—পুণ্য বৈদিক কর্ম্মদ্বারা দ্বিজাতিগণের গর্ভাধানাদিসংস্কার করা কর্ত্তব্য। এই সকল সংস্কার ইহকালে ও পরকালে পবিত্রতা বিধান করে; তাহাতে ইহলোকে বেদাদিপাঠে এবং পরলোকে যজ্ঞফলভোগে অধিকার হয়। ২৬।

ENGLISH.—The sacrament appertaining to the body of the twice-born such as the ceremony at the time of conception etc. which is purificative here and hereafter (*i.e.* after death) should be accomplished by holy vedic rites. (26).

गार्भैर्होमैर्जातकर्मचौड़मौञ्जीनिबन्धनैः।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ॥ २७ ॥

PROSE.—गार्भैः होमैः जातकर्मचौड़मौञ्जीनिबन्धनैः द्विजानां बैजिकं गार्भिकं च एनः अपमृज्यते ॥ २७ ॥

KULLUKA.—कुतः पापसम्भवो येनैषां पापक्षयहेतुत्वमत आह गार्भैरिति। ये गर्भशुद्धये क्रियन्ते ते गार्भाः। होमग्रहणमुपलक्षणं गर्भाधानादेर्होमरूपत्वात् जातस्य यत् कर्म मन्त्रवत्सर्पिःप्राशनादिरूपं तज्जातकर्म, चौड़ं चूड़ाकरणकर्म, मौञ्जीनिबन्धनमुपनयनं, तैर्बैजिकं प्रतिषिद्धमैथुनसङ्कल्पादिना च पैतृकरेतोदोषात् यद्यत् पापं गार्भिकं च अशुचिमातृगर्भवासजं तत् द्विजातीनामपमृज्यते ॥ २७ ॥

KULLUKA EXPLAINED.—"कुतः..................अत आह" = When does their sin arise for the atonement of which those ceremonies are prescribed? This sloka is an answer to this question. बैजिकं एनः is explained as "प्रतिषिद्धमैथुनसङ्कल्पादिना च पैतृकरेतोदोषात् यत् पापम्"। यया सह यस्मिन् काले वा मैथुनं शास्त्रे निषिद्धं तया सह तस्मिन् काले वा जनकस्य या मैथुनेच्छा भवेत् तया जनकरेतसोदोषो जायते स एव दोषः बैजिकं पापं पितृबीजजातस्य बैजिकदोषाक्रान्तत्वात् बैजिकपापभाक्त्वम्। गार्भिकं पापमाह "अशुचिमातृगर्भवासजम्" इति। अस्थिशोणितादीनां अशुचित्वं शास्त्रकृतम्

PURPORT.—पितुर्बीजे यत् पापं अशुचिमातृगर्भवासजातं च यत् पापं तत् सर्व्वं गर्भाधान-जातकर्म-चूड़ाकरणो-पनीतग्रहणैः संस्कारैः दूरीक्रियते द्विजानाम् ॥ २७ ॥

MEANING IN ENGLISH.—By a ceremony during mother's pregnancy, by holy rites on the birth of the child, by the tonsure ceremony, by investing with the sacred thread, is the seminal and uterine impurity of the three classes removed.

GRAMMATICAL NTOES.—1. गार्भैः – गर्भ + अण्। 2. होमैः करणे तृतीया। 3. जातकर्मचौड़मौञ्जीनिबन्धनैः – जातस्य कर्म जातकर्म। चूड़ाया इदं चौड़म्। मौञ्जीनिबन्धनम् मुञ्जस्य विकारो मौञ्जी मेखला तस्या निबन्धनम् मौञ्जीनिबन्धनम्। जातकर्म च चौड़ञ्च मौञ्जीनिबन्धनञ्च तानि तैः करणे तृतीया। बध्नाति अभ्यात्तत्सीत्। 4. बैजिकम् – बीजस्य इदम् (ठक्)। 5. गार्भिकम् – गर्भ + ठक्। Qualifies एनः। 6. एनः Acc. of अपमृज्यते कर्म्मणि प्रत्ययः।

ह + असुन् + युट्। एति अगात्। 7. द्विर्जायन्ते द्विजाः उपपद समासः। द्वि – जन + ड:। तेषाम् द्विजानाम् शेषे षष्ठी। 8. अपमृज्यते—अप – मृज + कर्म्मणि लट् ते। मृज मार्ष्टि ममार्ज। अमार्क्षीत् अमार्जीत्।

*Change of voice.* – एनः अपमार्जन्ति कर्म्मिणः (understood) ॥ २७ ॥

BENGALI.—গর্ভাধান, জাতকর্ম্ম, চূড়াকরণ ও উপনয়ন সংস্কার দ্বারা দ্বিজাতিগণের বীজদোষজ ও গর্ভবাসজ পাপ অপাকৃত হয়॥ ২৭॥

ENGLISH.--The seminal and uterine sin of the twice-born is purged away by fire-offerings during conception, the natal ceremony, the tonsure or shaving of the head, and by binding on the *Munja* string. (27).

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २८ ॥

PROSE.—स्वाध्यायेन व्रतैः होमैः त्रैविद्येन इज्यया सुतैः महायज्ञैः यज्ञैः च इयं तनु ब्राह्मी क्रियते ॥ २८ ॥

KULLUKA.—स्वाध्यायेनेति। वेदाध्ययनेन व्रतैर्मधुमांसवर्ज्जनादिनियमैर्होमैः सावित्रचरुहोमादिभिः सायं प्रातर्होमैश्च त्रैविद्याख्येन च व्रतेन प्राधान्यादस्य पृथगुपन्यासः। इज्यया ब्रह्मचर्य्यावस्थायां देवर्षिपितृतर्पणरूपया गृहस्थावस्थायां पुत्रोत्पादनेन महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः यज्ञैर्ज्योतिष्टोमादिभिः ब्राह्मी ब्रह्मप्राप्तियोग्येयं तनु तन्ववच्छिन्न आत्मा क्रियते कर्म्मसहकृतब्रह्मज्ञानेन मोक्षावाप्तेः ॥ २८ ॥

KULLUKA EXPLAINED.—तनुः is explained as "तन्ववच्छिन्न आत्मा" तनुर्हि जड़ा तस्या ब्रह्मलाभयोग्यताभावात् तनुस्थित आत्मा एव तनुशब्देन कथ्यते। "पञ्चभिः ब्रह्मयज्ञादिभिः" see further. ब्राह्मी is explained "ब्रह्मप्राप्तियोग्या"।

PURPORT.—देहस्थ आत्मा वेदपाठेन मद्यमांसवर्ज्जनादिरूपव्रतेन, सायं प्रातः कर्त्तव्येन यागेन, त्रैविद्यसंज्ञकेन व्रतेन पितृतर्पणादिना पुत्रोत्पादनेन पञ्चभि र्यज्ञै स्तथा ज्योतिष्टोमादियज्ञै श्च, ब्रह्मप्राप्तियोग्यः क्रियते ॥ २८ ॥

*Change of voice* .—इमां तनुं ब्राह्मीं कुर्व्वन्ति (द्विजाः) ॥ २८ ॥

BENGALI.—বেদত্রয়ের অধ্যয়ন, ব্রহ্মচর্য্যাদি ব্রত, ব্রহ্মচর্য্যসময়ে দেবঋষি পিতৃতর্পণ, গৃহস্থাশ্রমী হইয়া সন্তানোৎপাদন, ব্রহ্মযজ্ঞ প্রভৃতি পঞ্চমহাযজ্ঞ ও অপরাপর যজ্ঞ—এইগুলি মানবদিগকে ব্রহ্মপ্রাপ্তির উপযুক্ত করে॥ ২৮॥

ENGLISH.—This body (*i.e.* the soul inhabiting therein) is ren-

dered fit for attaining the Brahman or beatitude by reading the Vedas, by vows, by burnt offerings, by *traividya* (*i.e.* certain vows), by sacrifices, by offspring, by the (five daily) great sacrifices, and by other sacrifices. (28).

प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते।
मन्त्रवत् प्राशनञ्चास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥

PROSE.—नाभिवर्द्धनात् प्राक् पुंसो जातकर्म्म विधीयते। अस्य (तदा) हिरण्यमधुसर्पिषां मन्त्रवत् प्राशनञ्च (भवेत्) ॥ २९ ॥

KULLUKA.—प्रागिति। नाभिच्छेदनात् प्राक् पुरुषस्य जातकर्म्माख्यः संस्कारः क्रियते। तदा चास्य स्वगृह्योक्तमन्त्रैः स्वर्णमधुघृतानां प्राशनम् ॥ २९ ॥

MEANING IN ENGLISH.—Immediately after birth and before the section of the umbilical cord a ceremony called Jatakarma is performed. During this ceremony the child is made to taste honey, clarified butter and gold, all the while the sacred texts are being pronounced.

*Change of voice.*—जातकर्म्म विधत्ते। प्राशनेन भूयते ॥ २९ ॥

GRAMMATICAL NOTES.—1. नाभिवर्द्धनात् अन्यारादितरर्त्ते इति प्राक्शब्द-योगे पञ्चमी। नाभेः वर्द्धनम् नाभिवर्द्धनम् तस्मात् प्राक्। वर्द्धनम् छेदनम्। 2. पुंसः—शेषे षष्ठी। 3. जातकर्म्म जातस्य कर्म्म जातकर्म्म षष्ठीसमासः। 4. विधीयते—वि—धा+कर्म्मणि लट् ते। अधित अधात्। 5. हिरण्यमधुसर्पिषाम् —कर्म्मणि षष्ठी हिरण्यञ्च मधु च सर्पिश्च हिरण्यमधुसर्पींषि। तेषाम्। कर्तृकर्म्मणोः कृतीति षष्ठी। 6. मन्त्रवत्—मन्त्र+मतुप् qualifies प्राशनम्। 7. प्राशनम् प्र—अश+ल्युट्। अश्नाति। आश, आशीत्।

BENGALI.—বালক জন্মিবামাত্র নাড়ীচ্ছেদের পূর্ব্বে তাহার জাতকর্ম্ম নামক সংস্কার করা বিহিত; তৎকালে মন্ত্র উচ্চারণ পূর্ব্বক স্বর্ণ, ঘৃত ও মধু পান করাইবে ।২৯।

ENGLISH.—Before the cutting of the umbilical cord the natal ceremony of a male (child) is ordained (to be performed). And the child is to taste honey, clarified butter and gold (—probably in a golden cup) accompanied with recitation of *Vedic Mantras*. (29).

नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥

PROSE.—दशम्यां द्वादश्यां वा अस्य नामधेयं कारयेत्। पुण्ये तिथौ मुहूर्त्ते गुणान्विते नक्षत्रे वा कारयेत् ॥ ३० ॥

KULLUKA.—नामधेयमिति। जातकर्म्मेति पूर्व्वश्लोके जन्मनः प्रस्तुतत्वात् जन्मापेक्षयैव दशमे द्वादशे वाहनि तस्य शिशोर्नामधेयं स्वयमसम्भवे कारयेत्। अथवा आशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते इति शङ्खवचनाद्दशमेऽहन्यतीते एकादशाह इति व्याख्येयम् तत्राप्यकरणे प्रशस्ते तिथौ प्रशस्त एव मुहूर्त्ते नक्षत्रे च गुणवत्येव ज्योतिषावगते कर्त्तव्यं वाशब्दोऽवधारणे ॥ ३० ॥

KULLUKA EXPLAINED.—"जातकर्म्मेति...............कारयेत्।" The preceding text alludes to birth. Therefore *namakarana* is to take place on the 10th or 12th day commencing from the birth of the child.

MEANING IN ENGLISH.—Let one perform or, if absent, cause it to be performed, on the tenth or twelvth day after the birth, the ceremony of giving a name ; if not done on those days, then on some auspicious day of the moon, at a lucky hour, and under the influence of an auspicious star.

GRMMATICAL NOTES.—1. नामधेयम्—Acc. of कारयेत् रूपनामभागेभ्योधेय इति नामन् + धेय। 2. गुणान्विते – गुणैः अन्विते तृतीया समासः। 3. दशम्याम् and 4. द्वादश्याम् refer to तिथि understood but really they mean day. कालाधिकरणे सप्तमी।

*Change of voice* .—......नामधेयम् कार्य्यत ॥ ३० ॥

BENGALI.—জন্মের পর একাদশ কিংবা দ্বাদশ দিবসে নামকরণ করিবে। ঐ সময়ে না পারিলে প্রশস্ত তিথি ও মুহূর্ত্তে এবং গুণযুক্ত নক্ষত্রে নামকরণ করিবে ॥৩০॥

ENGLISH.—(The ceremony of giving) a name to him (the child) should be caused to be performed on the tenth or twelfth day (from the date of birth); or on an auspicious lunar day or hour, or under a lucky star. (30).

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ ३१॥

PROSE.—ब्राह्मणस्य मङ्गल्यं क्षत्रियस्य बलान्वितं वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितं (नामधेयं) स्यात्॥ ३१॥

KULLUKA.—मङ्गल्यमिति ब्राह्मणादीनां यथाक्रमं मङ्गलबलधननिन्दावाचकानि शुभ-बल-वसुदीनादीनि नामानि कर्त्तव्यानि॥ ३१॥

MEANING IN ENGLISH.—A Brahmin's name must be auspicious, a Kshatriya's name is to indicate strength, that of a Vaisya wealth, and that of a Sudra is to indicate contempt.

GRAMMATICAL NOTES.—1. मङ्गल्यम्—मङ्गल+यत्। 2. बलान्वितम् बलेन अन्वया अन्वितम्। 3. धनेनसंयुक्तम् अयुजत् अयौषीत् अयुक्त। 4. जुगुप्सितम् गुप्+सन्+क्तः कर्म्मणि।

*Change of voice.*—मङ्गल्येन......बलान्वितेन...... धनसंयुक्तेन ... ... ... जुगुप्सितेन नामधेयेन भूयेत॥ ३१॥

BENGALI.—ব্রাহ্মণের মঙ্গলবাচক, ক্ষত্রিয়ের বলবাচক, বৈশ্যের ধনবাচক ও শূদ্রের নিন্দাবাচক নাম হইবে॥ ৩১।

ENGLISH.—The name of a Brahmin should be auspicious, that of a Kshatriya indicative of power; that of a Vaisya significant of wealth; but that of a Sudra contemptible. (31).

शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम्।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम्॥ ३२॥

PROSE.—ब्राह्मणस्य शर्म्मवत् राज्ञः रक्षासमन्वितं वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतं उपपदं स्यात्॥ ३२॥

KULLUKA.—इदानीमुपपदनियमार्थमाह शर्म्मवद्ब्राह्मणस्येति। एषां यथाक्रमं शर्म्मरक्षापुष्टिप्रैष्यवाचकानि कर्त्तव्यानि शर्म्मवर्म्मभूतिदासादीनि उपपदानि कार्य्याणि उदाहरणानि तु शुभशर्म्मा बलवर्म्मा वसुभूतिः दीनदास इति। तथाच यमः—शर्म्मा देवश्चविप्रस्य वर्म्मा त्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्

विष्णुपुराणेऽप्युक्तं शर्म्मवत्ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंयुतम्। गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ३२ ॥

KULLUKA EXPLAINED. – "शर्म्मवर्म्म भूति दासादीनि उपपदानि कार्य्याणि। The last part of the name of a Brahman, Kshatriya, Vaisya and Sudra is to be respectively Sarman, Varman, Bhuti and Das and the like. He quotes authorities to show that a Brahman may have the additional surname or title Deva, a Kshatriya may have Trata and a Vaisya may have Dutta and Gupta too.

GRAMMATICAL NOTES. – 1. शर्म्मण + मतुप्। 2. राज्ञः श्रीषे षष्ठी राज + कनिन्। 3. रक्षासमन्वितम् रक्षया समन्वितम्। रक्ष + अ। सम् – अनु + इ + क्तः कर्म्मणि। अरक्षीत्, अगात्। 4. पुष्टिसंयुक्तम् पुष्ट्या संयुक्तम्। पुष + क्तिन् भावे। सम – युज् + क्तः। 5. प्रैष्य संयुतम् प्रैष्येण दास्येन संयुतम्। प्र + इष्य = प्रैष्य वृद्धिः by प्रादूहोढोढ्येषैष्येषु:। The first vowel of ऊहः, ऊढ़ः, ऊढ़िः, एष and एष्य gets वृद्धि when preceded by प्र. इष् (दिवादि क्रयादि) + ण्यत् एष्य।

*Change of voice.* – शर्म्मवता रक्षासमन्वितेन ... ... पुष्टिसंयुक्तेन ... ... ... प्रैष्यसंयुतेन भूयेत ॥ ३२ ॥

BENGALI.—ব্রাহ্মণের উপপদ শর্ম্ম, ক্ষত্রিয়ের উপপদ রক্ষাবাচক অর্থাৎ বর্ম্ম, বৈশ্যের পুষ্টিবাচক অর্থাৎ ভূতি, শূদ্রের ভৃত্যত্ববাচক অর্থাৎ দাস নাম হইবে। যথা— শুভশর্ম্মা, বলবর্ম্মা, বসুভূতি ও দীনদাস এইরূপ নাম হইবে ॥ ৩২ ॥

ENGLISH.—A Brahmin's name should have a surname or title indicative of happiness or prosperity, a Kshatriya's name should have a title expressive of protection, the name of a Vaisya should have a title significant of riches, and that of a Sudra a title indicative of service. (32).

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥ ३३ ॥

PROSE. – स्त्रीणां सुखोद्यं अक्रूरं विस्पष्टार्थं मनोहरं मङ्गल्यं दीर्घवर्णान्तं आशीर्व्वादाभिधानवत् ( नामधेयं ) स्यात् ॥ ३३ ॥

KULLUKA.—स्त्रीणामिति। सुखोद्याय्यमक्रूरार्थवाचि व्यक्तामिधेयं मनःप्रीतिजननं मङ्गलवाचि दीर्घस्वरान्तम् आशीर्व्वाचकेनाभिधानेन शब्देनोपेतं स्त्रीणां नाम कर्त्तव्यं यथा यशोदा देवीति॥ ३३॥

MEANING IN ENGLISH.—The name of a woman should be easily utterable, not indicative of cruelty, of clear meaning, agreeable, auspicious, ending in long vowels, containing words of benediction.

GRAMMATICAL NOTES.—1. स्त्रीणाम् शेषे षष्ठी। 2. सुखोद्यम् सुखेन उद्यते यत्तोद्यम्। सुख—वद+क्यप्। कर्म्मणि। Bhatto says "कर्म्मणि प्रत्ययाविति स्त्रीवे" पक्षे यत् सुखवद्यम्। वदति अवादीत्। 3. अक्रूरम् न क्रूरम् नञ् समासः। क्रन्दति हृदयमिति क्रूरम्। कृत्+रक्। कृतः क्रू:। 4. विस्पष्टार्थम् विस्पष्टः अर्थो यस्य तत् बहुव्रीहिः। स्पश्+क्त निपातने। 5. मनोहरम्—मनस्—हृ+अच्। 6. मङ्गल्यम्—मङ्गल+यत्। 7. दीर्घवर्णान्तम् दीर्घश्चासौ वर्णश्च दीर्घवर्णः कर्म्मधारयः। सः अन्तो यस्य तत्। बहुव्रीहिः। स्वरवर्णभिन्नस्य ह्रस्वदीर्घाभावात् दीर्घवर्णान्तं दीर्घस्वरान्तमित्यर्थः। Definition of दीर्घत्वम् ऊकालोऽच् ह्रस्वदीर्घप्लुतः *i. e.* those vowels whose pronunciation is like उ-ऊ-उ३ (*i. e.* कु-कू-कू३) of a cock while crowing are respectively ह्रस्व, दीर्घ and प्लुत। *i. e.* a vowel with one mátrá (attempt) is ह्रस्व, with two is दीर्घ, and with three is प्लुत। Thus अ′—अ″—अ‴ are respectively ह्रस्व, दीर्घ and प्लुत अकार। Some contend that अ′—अ″—अ‴ are not identical in sound like इ′—इ″—इ‴। अ″ (आ) is flatter than अ, and is like a different sound. But the difficulty was anticipated by Panini and was removed by the sutra नाज्झलौ while discussing सवर्णसंज्ञा। 8. आशीर्व्वादाभिधानवत् आशिषां वादः आशीर्व्वादः तस्य अभिधानं कथनं तद्वत् तद्युक्तम्। आङ्—शास्+क्विप्। आशीर्व्वादाभिधान+मतुप्। वद+घञ्। अभि—धा+ल्युट्।

*Change of voice.*—सुखोद्येन अक्रूरेण, विस्पष्टार्थेन, मनोहरेण, मङ्गल्येन दीर्घवर्णान्तेन आशीर्व्वादाभिधानवता ......भूयेत॥ ३३॥

BENGALI.—যে নাম অনায়াসে উচ্চারণ করা যায়, নিষ্ঠুরতাবাচক নহে, যাহার অর্থ বিস্পষ্ট, যাহাতে মনের প্রীতি জন্মে, যাহা মঙ্গলবাচক, যাহার অন্তে দীর্ঘস্বর থাকে, যাহার উচ্চারণ আশীর্ব্বাদের অর্থ বুঝায়, স্ত্রীলোকের সেইরূপ নাম করিবে। যথা—যশোদা দেবী॥ ৩৩॥

ENGLISH—Women's names should be such as are capable of being easily pronounced, are not harsh, are plain of meaning, charming, auspicious have a terminating long vowel and have the meaning of benediction or blessing. (33).

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले॥ ३४॥

PROSE.—चतुर्थे मासि शिशोः गृहात् निष्क्रमणं षष्ठे मासि अन्नप्राशनं कार्य्यम्। यत् वा कुले मङ्गलं इष्टं (तत्) कर्त्तव्यम्॥ ३४॥

KULLUKA.—चतुर्थे मासीति। चतुर्थमासे बालस्य जन्मगृहात् निष्क्रमणमादित्यदर्शनार्थं कार्य्यम्। अन्नप्राशनञ्च षष्ठे मासे अथवा कुलधर्म्मेन यन्मङ्गलमिष्टं तत् कर्त्तव्यं तेनोक्तकालादन्यकालेऽपि निष्क्रमणम्। तथाच यमः—ततस्तृतीये कर्त्तव्यं मासि सूर्य्यस्य दर्शनम्। सकलसंस्कारविषयश्चार्थं तेन नाम्नां शर्म्मादिकमप्युपपदं कुलाचारेण कर्त्तव्यम्॥ ३४॥

KULLUKA EXPLAINED.—वा="अथवा"। गृहात्="जन्मगृहात्"।

GRAMATICAL NOTES.—1. चतुर्थे—चतुर्+थक्। 2. गृहात्—अपादाने पञ्चमी। 3. मासि—मासे पक्षे मासि। 4. अन्नप्राशनम् अन्नस्य प्राशनं भोजनं अन्नप्राशनम्। 5. इष्टम्—इष+क्तः कर्म्मणि। इच्छति ऐषीत्।

*Change of voice.*—.........निष्क्रमणेन कर्त्तव्येन भूयते॥ ३४॥

BENGALI.—চতুর্থ মাসে শিশুর সূতিকা গৃহ হইতে সূর্য্যদর্শনার্থে নিষ্ক্রমণ নামক সংস্কার করিবে; ষষ্ঠ মাসে অন্নপ্রাশন সংস্কার করাইবে; অথবা নিজ কুলে অন্য যে সময়ে নিষ্ক্রমণাদি সংস্কার হইয়া থাকে সেই সময়ে করিবে। ৩৪॥

ENGLISH.—(The ceremony of) a child's coming out of the lying-in room should be done in the fourth month; the ceremony of eating rice should be done in the sixth month, or what auspicious practise is desired or preferred in one's own family (should be followed). (34).

चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥ ३५॥

PROSE—चूड़ाकर्म्म सर्व्वेषामेव द्विजातीनां प्रथमे तृतीये वा अब्दे धर्म्मतः कर्त्तव्यम् श्रुतिचोदनात् ॥ ३५ ॥

KULLUKA.—चूड़ाकर्म्मेति। चूड़ाकरणं प्रथमे वर्षे तृतीये वा द्विजातीनां धर्म्मतो धर्म्मार्थं कार्य्यं श्रुतिचोदनात्। यत्र बाणाः सम्पतन्ति कुमाराः विशाखा इवेति मन्त्रलिङ्गात् कुलधर्म्मानुसारेणायं व्यवस्थितविकल्पः। अतएवाश्वलायनगृह्ये तृतीये वर्षे चूड़ाकरणं यथा कुलधर्म्मं वा ॥ ३५ ॥

KULLUKA EXPLAINED.—धर्म्मतः is explained as धर्म्मार्थम्। व्यवस्थितविकल्पः व्यवस्थितस्य प्रथमवर्षे कर्त्तव्यतया स्थितस्य कुलधर्म्मानुरोधेन विकल्पः।

GRAMMATICAL NOTES.—1. चूड़ाकर्म्म चूड़ा चूला एव कर्म्म चूड़ाकर्म्म। 2. धर्म्मतः चतुर्थ्यास्तसिः। 3. प्रथमे—प्रथ+अमच्। 4. तृतीये—त्रि+तीय by त्रेः सम्प्रसारणञ्च। 5. अब्दे अपः ददातीति अब्दः। वत्सरः। 6. श्रुतिचोदनात्—श्रुतेः चोदनम् प्रवर्त्तना श्रुतिचोदनम् तस्मात् हेतौ पञ्चमी। 7. चतुर्थ—चतुर्+थक्।

*Change of voice.*—चूड़ाकर्म्मणा कर्त्तव्येन भूयते ॥ ३५ ॥

BENGALI.—শ্রুতির বিধান অনুসারে সমস্ত দ্বিজাতির পক্ষেই ধর্ম্মের জন্য প্রথম অথবা তৃতীয় বৎসরে কুলধর্ম্মানুসারে চূড়াকর্ম্ম করিবে। ৩৫।

ENGLISH.—The *chuda* rite, or the rite of tonsure or shaving of all the twice-born castes should in obedience to the direction of the *Sruti* or revelation be done for the purposes of duty or religious practise either in the first or the third year. (35).

गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ३६ ॥

PROSE.—गर्भाष्टमे अब्दे ब्राह्मणस्य, गर्भात् एकादशे अब्दे राज्ञः, गर्भात् तु द्वादशे अब्दे विशः, उपनायनं कुर्व्वीत ॥ ३६ ॥

KULLUKA.—गर्भाष्टमेति। गर्भवर्षादष्टमे वर्षे ब्राह्मणस्योपनयनं कर्त्तव्यम् उपनयनमेवोपनायनम् अन्येषामपि दृश्यत इति दीर्घः। गर्भैकादशे क्षत्रियस्य गर्भद्वादशे वैश्यस्य ॥ ३६ ॥

GRAMMATICAL NOTES. 1. गर्भाष्टमे गर्भात् गर्भसञ्चारात् अष्टमः गर्भाष्टमः पुरुषात् उत्तमः पुरुषोत्तम इति विग्रहस्य शाङ्करे दृष्टत्वात्। अत्रापि गर्भात् एकादशे द्वादशे इत्युक्तदिशा समासः पञ्चम्याः स्वीक्रियते। अष्टन्+मट् पूरणे। 2.

एकादशे एकाधिका दश एकादश। एकादशानां पूरणः एकादशः तस्य पूरणे डट् इति डट्। 3. द्वादशे Do. 4. गर्भात् अन्यारादितिकालवाचकयोगे पञ्चमी। 5. राज्ञः शेषे षष्ठी। 6. विशः Do. द्वौ विशौ वैश्यमनुजौ इत्यमरः। विशति प्रहमिति विट्। विश+क्विप्। अविशत्। 7. उपनायनम्—उपनयनमेव उपनायनम्। उप-नी+ल्युट्। अन्येषामपि दृश्यते इति दीर्घः। Acc. of कुर्व्वीत। 8. कुर्व्वीत-कृ+ईत।

*Change of voice.*—उपनयनं क्रियेत ॥ ३६ ॥

BENGALI.—গর্ভ সঞ্চার হইতে গণনা করিয়া অষ্টম বৎসরে ব্রাহ্মণের, একাদশ বৎসরে ক্ষত্রিয়ের, দ্বাদশ বৎসরে বৈশ্যের উপনয়ন সংস্কার করিবে ॥ ৩৬ ॥

NOTE.—গর্ভ সঞ্চার হইতে গণনা করিলে ১০ মাস কাল গর্ভবাস ধরিয়া ভূমিষ্ঠ হওয়ার সময় অবধি ৬ বৎসর ৩ মাস হইতে ৭ বৎসর ৩ মাস পর্য্যন্ত কাল গর্ভাষ্টম বৎসর হয়। তৎকালমধ্যে ব্রাহ্মণের। ঐরূপ ক্ষত্রিয়ের ভূমিষ্ঠ হওয়া অবধি ৯ বৎসর ৩ মাসের পর ১০ বৎসর ৩ মাস পর্য্যন্ত কালমধ্যে, এবং বৈশ্যের ভূমিষ্ঠ হওয়া অবধি ১০ বৎসর ৩ মাস পর ১১ বৎসর ৩ মাস পর্য্যন্ত উপনয়ন কাল।

ENGLISH.—One should perform the investiture of a Brahmin with the sacred thread in the eigth year commencing from conception, of a Kshatriya in the 11th year; and of a Vaisya in the 12th year. (36).

ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ३७ ॥

PROSE.—ब्रह्मवर्च्चसकामस्य विप्रस्य पञ्चमे, बलार्थिनः राज्ञः षष्ठे, अर्थिनः वैश्यस्य अष्टमे (उपनयनं) कार्य्यम् ॥ ३७ ॥

KULLUKA.—ब्रह्मवर्च्चसकामस्येति। वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतं तेजो ब्रह्मवर्च्चसं तत्कामस्य ब्राह्मणस्य गर्भपञ्चमे वर्षे उपनयनं कार्य्यम्, क्षत्रियस्य हस्त्यश्वाद्राज्यबलार्थिनो गर्भषष्ठे, वैश्यस्य बहुकृष्यादिचेष्टार्थिनो गर्भाष्टमे गर्भवर्षाण्येव प्रक्रान्तत्वात्। यद्यपि बालस्य कामना न सम्भवति तथापि तत्पितुरेव तद्गतफलकामना तच्छिष्यपचर्य्यते ॥ ३७ ॥

KULLUKA EXPLAINED.—पञ्चमे षष्ठे and अष्टमे have been explained as "गर्भपञ्चमे" "गर्भषष्ठे" "गर्भाष्टमे" because the former sloka commences with the word गर्भ।

Grammatical notes 1. ब्रह्मवर्चसकामस्य—ब्रह्मणो वर्च्चः ब्रह्मवर्चसम् षष्ठी समासः। समासान्त अच् by ब्रह्महस्तिभ्यां वर्च्चसः ब्रह्मवर्च्चसम् कामः कामना यस्य स ब्रह्मवर्च्चसकामः। बहुव्रीहिः। तस्य qualifies विप्रस्य। कम + घञ् कामः। कामयते अचीकमत अचकमत। चकमे कामयाञ्चक्रे। वृंह + मनिन् ब्रह्मन्। बृंहति वर्द्धते स्वरूपशक्त्या अर्थात् शक्तियुक्तं यत् तद् ब्रह्म। अद्वैतवादपक्षे शक्त्या-भावात् बृंहति वर्द्धते इव व्याप्नोतीव ब्रह्म। 2. विप्रस्य शेषे षष्ठी। वपति धर्म्म-मिति विप्रः। वप + रन् उपधाया इत्वम्। By ऋज्रेन्द्राग्रवज्रविप्र &c. &c. 3. पञ्चमे—पञ्चन् + मट्। By नान्तादसंख्यादेर्मट्। 4. राज्ञः—शेषे षष्ठी। 5. बलार्थिनः बलं अर्थयते इति बलार्थी तस्य बलार्थिनः। 6. षष्ठे—षष्—थट् षष्ठ। 7. अर्थिनः—अर्थ + इनि अमन्निधाने। 8. अष्टमे—अष्टन् + मट्। 9. कार्य्यम् कृ + ण्यत्।

*Change of voice*—......उपनायनेन कार्य्येण भूयते ॥ ३७ ॥

Bengali.—বেদপাঠ ও বেদার্থ গ্রহণে প্রকর্ষ হওয়া যাহার বাঞ্ছনীয় সেই ব্রাহ্মণের উপনয়ন গর্ভ সঞ্চার হইতে পঞ্চম বৎসরে, যে ক্ষত্রিয়ের হস্তী ও অশ্বাদি রাজ্য-বল বাঞ্ছনীয় সেই ক্ষত্রিয়ের উপনয়ন গর্ভসঞ্চার হইতে ষষ্ঠ বৎসরে, যে বৈশ্যের বহুতর কৃষি প্রভৃতি ফল বাঞ্ছনীয় তাহার উপনয়ন গর্ভসঞ্চার কাল হইতে অষ্টম বৎসরে সম্পাদন করিবে ॥ ৩৭ ॥

Note.—পূর্ব্বশ্লোকবৎ ব্রাহ্মণের ভূমিষ্ঠ হওয়াবধি ৩ বৎসর ৩ মাসের পর ৪ বৎসর ৩ মাস পর্য্যন্ত; ক্ষত্রিয়ের ভূমিষ্ঠ হওয়াবধি ৪ বৎসর ৩ মাস হইতে ৫ বৎসর ৩ মাস পর্য্যন্ত; বৈশ্যের ভূমিষ্ঠ হওয়া অবধি ৬ বৎসর ৩ মাস হইতে ৯ বৎসর ৩ মাস পর্য্যন্ত সময়মধ্যে উপনয়ন।

English.—The investiture (with the sacred string of a Brahmin, desirous of spiritual pre-eminence resulting from sacred knowledge should be performed in the fifth year; of a Kshatriya desirous of prowess or strength in the sixth, and of a Vaisya desirous of wealth in the eighth. (37).

आ षोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते।
आ द्वाविंशात् क्षत्रबन्धोराचतुर्व्विंशतेर्विशः॥ ३८ ॥

Prose.—ब्राह्मणस्य आ षोड़शात् क्षत्रबन्धोः आ द्वाविंशात् विशः आ चतुर्व्विंशतेः सावित्री न अतिवर्त्तते ॥ ३८ ॥

Kulluka.—आषोड़शादिति। अभिविधावाङ्, ब्राह्मण-क्षत्रिय-विशामुपनाय-

मैकादशद्वादशवर्षद्वैगुण्यस्य विवक्षितत्वात् षोड़शवर्षपर्य्यन्तं ब्राह्मणस्य सावित्र्यो वचनमुपनयनं नातिक्रान्तकालं भवति। क्षत्रियस्य द्वाविंशतिवर्षपर्य्यन्तं वैश्यस्य चतुर्व्विंशतिवर्षपर्य्यन्तम्। अत मर्य्यादायामाङ् केचिद्याख्यापयन्ति यमवचनदर्शनात् तथा च यमः—पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः। विवस्वतः सुतः श्रीमान् यमो धर्म्मार्थतत्त्ववित्। सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः। हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा॥ ३८॥

KULLUKA EXPLAINED.—"अतिविधावाङ्" तत्सहितोऽभिविधिः इति नियमात् षोड़शवर्षमध्ये ब्राह्मणस्य उपनयनकालः। "द्वैगुण्यस्य विवक्षितत्वात्"। While laying down 8th, 11th, and 12th year as the period of investiture, double the times was all the while contemplated. Therefore we have here 16, 22 and 24 respectively. Some accept आङ् in the sense of मर्य्यादा but Kulluka does not accept that view.

GRAMMATICAL NOTES.—1. षोड़शात्–आङ् योगे पञ्चमी by पञ्चम्यपाङ्परिभिः। षड़धिकादश षोड़श। ततः पूरणे डट्। 2. द्वाविंशात् आङ् योगे पञ्चमी द्व्यधिका विंशतिः द्वाविंशतिः। द्वाविंशतेः पूरणं द्वाविंशः द्वाविंशतितमो वा by विंशत्यादिभ्यस्तमड़न्यतरस्याम् optionally तमट् and डट्। 3. चतुर्व्विंशतेः पूर्व्ववत् आङ्योगे पञ्चमी। चतुरधिका विंशतिः चतुर्व्विंशतिः। It ought to have been चतुर्व्विंशात् or चतुर्व्विंशतितमात्। डट् or तमट् ought to have been added. पूरणार्थं is understood. 4. आङ् अव्ययम्। अत्र अभिविध्यर्थे कर्म्मप्रवचनीयसंज्ञत्वात् पञ्चमीयाङ्कम्। 5. क्षत्रबन्धोः–क्षत्रः बन्धुः सवर्णो यस्य सः or क्षत्रस्य बन्धुः तस्य क्षत्रियस्य इत्यर्थः। Generally the word बन्धु in such compounds as ब्रह्मबन्धुः क्षत्रबन्धुः means a bad क्षत्रिय or bad ब्राह्मण। 6. सावित्री–"सावित्र्यनुवचनम्" (Kulluka.) = उपनयनम्। सविता दैवता अस्य सावित्रः स्त्रियां सावित्री, refers to Gayatree. सावित्री = The ceremony of investiture hallowed by Gayatree. 7. अतिवर्त्तते = अतिक्रामति।

*Change of voice*—..........सावित्रा नातिवृत्यते॥ ३८॥

BENGALI.—গর্ভসময় হইতে গণনা করিয়া ব্রাহ্মণের ষোড়শ বৎসর পর্য্যন্ত, ক্ষত্রিয়ের দ্বাবিংশতি বৎসর পর্য্যন্ত এবং বৈশ্যের চতুর্ব্বিংশ বৎসর পর্য্যন্ত উপনয়নের কাল বর্ত্তমান থাকে। ৩৮।

ENGLISH.—(The initiation into) *Savitri* or *Gayatri*, in the case of a Brahmin, does not go beyond (or take place after) the sixteenth year; in the case of a Kshatriya, the twenty-second year; and in the case of a Vaisya, the twenty-fourth year. (38).

अत ऊर्द्ध त्रयोऽप्येते यथाकालमसंस्कृता:।
सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिता:॥ ३८॥

PROSE.—एते त्रय: यथाकालं अपि असंस्कृता: अत ऊर्द्ध सावित्रीपतिता: आर्य्य-विगर्हिता: व्रात्या भवन्ति॥ ३८॥

KULLUKA.—अत ऊर्द्धमिति। एते ब्राह्मणादयो यथाकालं यो यस्यानुकल्पिकोऽप्युपनयनकाल उक्त: षोड़शवर्षान्तं तत्रासंस्कृतास्तदूर्द्ध सावित्रीपतिता उपनयनहीना: शिष्टगर्हिता व्रात्यसंज्ञा भवन्ति। संज्ञाप्रयोजनञ्च व्रात्यानां याजनं कृत्वेत्यादिना व्यवहारसिद्धि:॥ ३८॥

KULLUKA EXPLAINED.—The force of अपि is explained "यो यस्यानुकल्पिक: उपनयनकाल: उक्त: षोड़शवर्षादिपर्य्यन्तं तत्र असंस्कृता:" (अपि) इत्यर्थ:। व्रात्या:="व्रात्यसंज्ञा:" *i. e.* technically called व्रात्या:। It is necessary to define व्रात्या: because we get the word व्रात्या: further in the text. Amar says "व्रात्य: संस्कारहीन: स्यात्।" व्रातं समूह: तस्मात् च्यवते इति व्रात्य: outcasted for non-observance of prescribed ceremonies.

GRAMMATICAL NOTES.—1. अत:—अन्यारादिति पञ्चमी। 2. यथाकालम् कालमनतिक्रम्य यथाकालम् अव्ययीभाव:। 3. असंस्कृता:—न संस्कृता:। सम्—कृ+क्त: कर्म्मणि सुट् by समपर्य्युपेभ्य: &c. &c. 4. सावित्रीपतिता:—सावित्र्या: पतिता: सावित्रीपतिता: पञ्चमी समास: by अपेतापोढ़मुक्तपतितापत्रस्तैरल्पश: or पतिता सावित्री येषां ते सावित्रीपतिता: पतितसावित्रीका बहुब्रीहि:। आहिताग्न्यादित्वात् परनिपात:। 5. व्रात्या:—व्रातात् च्युता: व्रात्या:। व्रात+यत्। 6. आर्य्यविगर्हिता:—आर्य्यै: विगर्हिता:। तृतीया समास:।

*Change of voice.*—......त्रिभि: असंस्कृतै:......व्रात्यै: भूयते॥ ३८॥

BENGALI.—এই তিন বর্ণের যে ষোড়শাদি বৎসর পর্য্যন্ত উপনয়নের অনুকল্প কাল নির্দ্দেশ করা গেল তন্মধ্যেও যদি ইঁহারা উপনীত না হয়, তাহা হইলে ঐ ঐ কালের পরে ইঁহারা গায়ত্রীভ্রষ্ট হইয়া শিষ্টগণের গর্হিত ও ব্রাত্য সংজ্ঞা প্রাপ্ত হয়। ৩৮।

ENGLISH.—After that these three (castes), if not invested (with the sacred string) at the proper time, become fallen from *Gayatri*, are despised by the respectable, and are (called) *Bratya* (or out-castes). (39).

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥४०॥

PROSE.—विधिवत् अपूतैः एतैः सह ब्राह्मणः आपदि अपि कर्हिचित् ब्राह्मान् यौनान् च सम्बन्धान् न आचरेत् ॥ ४० ॥

KULLUKA.—नैतैरिति । एतैरपूतैर्व्रात्यैर्यथाविधि प्रायश्चित्तमकृतवद्भिः सह आपत्कालेऽपि कदाचिदध्यापनकन्यादानादीन् सम्बन्धान् ब्राह्मणो नानुतिष्ठेत् ॥४०॥

KULLUKA EXPLAINED. – विधिवत् अपूतैः = "यथाशास्त्रं प्रायश्चित्तं अकृतवद्भिः ।" ब्राह्मान् सम्बन्धान् = अध्यापनादीन् । यौनान् सम्बन्धान् = "कन्यादानादीन्" ।

ELUCIDATION.—विधिवत् अपूतैः—When one becomes a व्रात्य he or his descendants may be taken back only on the performance of प्रायश्चित्त according to the rules. Apastamba is the authority on the point. His rules are (1) यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः । Those whose father and grandfather received no investiture are like the killers of Brahmans. (2) तेषां अभ्यागमनं भोजनं विवाहमिति वर्ज्जयेत् । They must be excluded from mutual visits, feast and marriage relations. Then we come to the point. (3) तेषां इच्छतां प्रायश्चितम् । When they really intend respectfully and not for show, they may receive प्रायश्चित्तम् and get rid of व्रात्यता । After various discussions, the conclusion made by the ancient commentators was as follows :—

अनेकपुरुषपतितसावित्रीकविषये पतितसावित्रीकाणां वंश्यानां त्रयाणां पुरुषाणां यदपत्यं चतुर्थं तत्र संस्कारः उपनयनं भवति । प्रपितामहस्य पितरमारभ्य चतुर्णां पतितसावित्रीकाणां अपत्ये तु न संस्कारः । (इति आपस्तम्बव्याख्यातारः प्राचीनाः)

As to families devoid of investiture ceremony for many generations, the rule is that when there are three genera-

tions without investiture the fourth generation may perform Prayaschittam and get investiture. But when there are four generations commencing from the father upwards, their children the fifth *Bratya* and downwards will get no investiture. This is the orthodox rule. But some of late have violated the orthodox principle.

GRAMMATICAL NOTES.—1. अपूतैः—न पूतैः पू + क्तः कर्म्मणि। पुनाति पुनीते प्वादीनां ह्रस्व इति। अपावीत् अपवित्र। 2. विधिवत् यथाविधि। विधि + वति। वि – धा + कि। विधीयते अनेन इति विधिः शास्त्रम्। यथाशास्त्रम्। 3. आपदि यस्य च भावेन भावलक्षणम्। or अधिकरणे आपत्काले इत्यर्थः। आङ् – पद + क्विप्। पद्यते पेदे अपादि। 4. ब्रह्मणो वेदस्य इमे ब्राह्माः। ब्रह्मण् + अण्। नकारलोपः अजातौ। 5. यौनान् योनेः इमे यौनाः तान् योनि + अण्। 6. सम्बन्धान् – संबध्यते अनेन सम्बन्धः। सम् – बन्ध + घञ्। बध्नाति अभान्त्सीत् अबान्धान्। 7. एतैः – सहशब्दयोगे तृतीया। सहयोगे अप्रधाने इति। 8. ब्राह्मणः अग्रम् वर्णः ब्राह्मणः न नकारलोपः।

*Change of voice.*—ब्राह्माः यौनाः ...सम्बन्धाः न आचर्य्येरन् ब्राह्मणेन ॥ ४० ॥

BENGALI.—এই সকল ব্রাত্য যথানিয়মে প্রায়শ্চিত্ত না করিলে বিপৎকালেও ব্রাহ্মণ এই অপবিত্রগণের সহিত বেদ অধ্যয়নাদি ও কন্যাদানাদি সম্বন্ধস্থাপন করিবেন না ॥ ৪০ ॥

ENGLISH—A Brahmin should never, not even in times of distress, form spiritual (this is to say by the teaching of Vedas) and marital relations with these (*Bratyas*) not purified according to rule. (40).

कार्ष्णरौरव-वास्तानि चर्म्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्वेण शाणक्षौमाविकानि च ॥ ४१ ॥

PROSE.—ब्रह्मचारिणः आनुपूर्व्व्येण कार्ष्ण-रौरव-वास्तानि चर्म्माणि शाणक्षौमाविकानि च (अधोवसनानि) वसीरन् ॥ ४१ ॥

KULLUKA.—कार्ष्णरौरववास्तानीति। कार्ष्ण इति विशेषानभिधानेऽपि मृगविशेषः हरणाद्दर्शनात् हारिणमैणेयं वा कार्ष्णं वा ब्राह्मणस्येत्यापस्तम्बवचनाच्च कृष्णमृगो गृह्यते। कृष्णमृगरुरुच्छागचर्म्माणि ब्रह्मचारिण उत्तरीयाणि वसीरन्,

चर्मोत्थुतरौयाचौति यज्ञवचनात्। तथा ब्रह्मसूमामिषणौमब्रात्मघौवजनानि ब्राह्मणादय: क्रमेण परिदधौरन् ॥ ४१ ॥

KULLUKA EXPLAINED.—कृष्णमगचर्म is the meaning of कार्ष। These are to be sheets to show which he quotes वापवचन। "ब्रह्मचारिण: चानुपूर्व्वेण" is explained as "ब्राह्मणादय: क्रमेण"।

NOTE.—The practical adoption of the texts of the sages is contained in the works called निबन्ध or authoritative compilations and expositions. No part of India can do without them. Thus we have our great Raghunandan; the Maithils have their Vachaspati Misra, the Marathis their Narayan, Nagoji Kamalakor, Nilkantha and others; the Deccanese have Madhaba and others. These are regarded somewhat like infallible authorities, though they have always differed from one another on more points than one the old sages died long long ago, it is men like those who have practically ruled the Hindu society from the time of the great Vicramaditya at least. The authoritative commentators on Purans like Chitsukha Yogin, and Sridhara Swamin have supplied rich materials to these text writers, because these *nibandhas* must remain hopelessly incomplete without Pauranik texts. Even ordinary *ekadasi* fasting would be impossible without Pauranic texts, so incomplete are the Samhitas themselves. The expounders of the Purans had therefore to be frequently consulted, and fortunately expounders like Chitsukha and Sridhar were most severe, orthodox and unbending, wonderfully learned, accurate and reliable. I shall illustrate below the truth of what I have said.

This as well as many other texts of Manu prescribe the duties of the Brahmans, Kshatriyas and Vaisyas. But in the practical adaptation, the texts prescribing the duties of the Kshatriyas and Vaishyas have either been entirely excluded as in our Raghunandan or only slightly touched as in Shekar.

The common view of all the *nibandhakars* being that these two castes have entirely become extinct, and no vestige of them remains, there being now only two castes the Brahmins and the Sudras. The *vedic* and *sanhita* texts simply lay down the classification that existed long long ago, it is only the *Purans* and the *Itihasas* within whose province it lies to give us information as to how much of the old classification survives and in what way. The *nibandhakars* gave therefore due importance to the social history as preserved by Bhagbat, Vishnu, Vayu, Matsya and similar Purans. Raghunandan stated briefly but clearly that he would not discuss the duties of the 2nd and 3rd castes as they became extinct in the Kalijuga, and referred to the Vishnupuran. We quote below :—

महानन्दिसुतः शूद्रागर्भोद्भवः अतिलुब्धो महापद्मनन्दः परशुराम इवापरोऽखिलक्षत्रान्तकारी भविता। (Part IV. chapter 24.) Mahapadma Nanda a son of Mahanandi begotten on a Sudra wife of his, will be immensely rich and, like another Parashuram, will extirpate the 2nd caste without keeping any remnant.

यावत् परीक्षितो जन्म यावन्नन्दाभिषेचनम् ।
एतद् वर्षसहस्रन्तु ज्ञेयं पञ्चदशोत्तरम् ॥ ३२ ॥

Between the birth of Parikshit son of Abhimanyu and the installation of Mahapadma Nanda the period consists of 1015 years. Swamin explains : –

"पञ्चदशोत्तरसहस्रवर्षपर्य्यन्तं शुद्धः क्षत्रियवंशः स्थास्यति अनन्तरं नन्देन सर्व्वक्षत्रियनाशात् ।" The pure 2nd caste will remain up to 1015 of Kali after which Nanda will exterminate all of them.

The Vishnu Puran continues : –

देवापिः पौरवो राजा मरुश्चेक्ष्वाकुवंशजः ।
महायोगबलोपेतौ कलापग्रामसंश्रयौ ॥ ४५ ॥
कृते युगे इहागत्य क्षात्रप्रवर्त्तकौ हि तौ ।
भविष्यतो मनोर्वंशे बीजभूतौ व्यवस्थितौ ॥ ४६ ॥

Though the Kshatriyas became thus extinct after 1015 years of the Kalijuga, the earth will have the Kshatriyas again only in the next Satyayuga after the expiration of Kali. How? The answer is that Raja Devapi of the Lunar dynasty, and Maru of the Solar dynasty, are still living in a part of the Himalayas called the village of Kalap, practising yoga. After the Kali when the next Satyayuga will come, these two Kshatriyas will then descend on the earth and procreate the Kshatriyas again. They are living as *seeds* of the Kshatriyas.

एतेन क्रमयोगेन मनुपूर्वं वसुन्धरा।
क्षत्रवेतादिसंज्ञानि युगानि त्रीणि भुज्यते ॥ ४७ ॥

According to this method, the Kshatriyas enjoy the earth only during the first three yugas and not during the fourth.

Swamin :—

"कलेः सन्ध्यायामेव चनियमत्वात् त्रीणि युगानि भुज्यते इत्युक्तम्।" The 1015 years of Kali are only a small portion of Kali extending over millions of years. Hence the texts say three yugas only.

The great Nagoji Bhatta's celebrated *Bratyanirnaya* is a powerful exposition of these texts and commentaries. He adds "कलौ न क्षत्रियाः सन्ति कलौ न वैश्यजातयः। ब्राह्मणाश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम्।" and "कलावाद्यन्तयोः स्थितिः।" But though Raghunandan has omitted the texts we can not omit explanation.

Grammatical notes.—1. कृष्णस्य कृष्णमृगस्य इदं कार्ष्णम्। कृष्ण + अण्। 2. रुरोरिदम् – रौरवम्। रुरु + अण्। 3. बस्तस्य – छागस्य इदम् वास्तम्। बस्त + अण्। कार्ष्णञ्च रौरवञ्च वास्तञ्च कार्ष्णरौरववास्तानि। ब्रह्मचारिणः – ब्रह्म – चर + णिनिः। 4. आनुपूर्व्येण प्रकृत्यादिभ्यस्तृतीया। अनुगतः पूर्व्वम् अनुपूर्व्वः क्रान्ताद्यर्थे द्वितीययेति समासः तस्य भावः आनुपूर्व्यम् तेन। 5. शाणक्षौमाविकानि च शाणञ्च क्षौमञ्च आविकञ्च द्वन्द्वः। Acc. of वसीरन्। शणस्य क्षुमायाः च विकारः। शण + अण्। क्षुमा + अण्। अवि + ठक्। 6. वसीरन् वस् + ईरन् विधिलिङ्। वस्ते ववसे। अवसिष्ट।

*Change of voice.*—......चर्मांणि शाणक्षौमाविकानि वसेरन् ॥ ४१ ॥

BENGALI.—ব্রাহ্মণ ক্ষত্রিয় ও বৈশ্য জাতীয় ব্রহ্মচারিগণ যথাক্রমে কৃষ্ণমৃগ, রুরুমৃগ ও ছাগের চর্ম উত্তরীয়রূপে এবং শণসূত্র, রেশমের সূত্র ও মেষলোমসূত্র দ্বারা প্রস্তুত বস্ত্র অধোবসনরূপে পরিধান করিবে ॥ ৪১ ॥

ENGLISH—Religious students (belonging to the three twice-born castes) should wear (as upper or outer garments) in order of their precedence the skins of *Krishnasara* antelope, deer, and goats respectively, and should put on under-garments made of hemp, silk and wool (respectively). (41).

**मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।**
**क्षत्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणतान्तवी ॥ ४२ ॥**

PROSE.—विप्रस्य त्रिवृत् समा श्लक्ष्णा मौञ्जी मेखला कार्य्या क्षत्रियस्य तु मौर्व्वी ज्या मेखला वैश्यस्य त्रिवृत् शणतान्तवी मेखला कार्य्या ॥ ४२ ॥

KULLUKA.—मौञ्जीति। मुञ्जमयी त्रिगुणा समगुणत्रयनिर्म्मिता सुखस्पर्शा ब्राह्मणस्य मेखला कर्त्तव्या क्षत्रियस्य मूर्व्वामयी ज्या धनुर्गुणरूपा मेखला अतो ज्यात्वविनाशापत्तेस्त्रिवृत्त्वं नास्तीति मेधातिथिगोविन्दराजौ। वैश्यस्य शणसूत्रमयी अत्र त्रैगुण्यमनुवर्त्तत एव। त्रिगुणा प्रदक्षिणा मेखला इति सामान्येन प्रचेतसा त्रैगुण्याभिधानात् ॥ ४२ ॥

KULLUKA EXPLAINED.—"अतो ज्यात्वविनाशापत्तेः त्रिवृत्त्वं नास्तीति"। If the girdle be three-stringed it cannot be like a bow-string. Hence the girdle of a Khatriya cannot be a tripple cord so say Medhatithi and Govindaraja.

GRAMMATICAL NOTES.—1. त्रिवृत्—त्रेधा वृत्ता त्रिवृत्। त्रि – वृत् + क्विप्। 2. समा – समत्रिगुणान्विता or (1) त्रिवृत्समा त्रिवृता समा। 3. मौञ्जी – मुञ्जस्य विकारो मौञ्जी। मुञ्ज + अण्। 4. श्लक्ष्णा – मसृणा। श्लिष + क्स: by श्लिषेरच्चोपधाया:। 5. विप्रस्य – कर्म्मणि षष्ठी। वप + रक्। 6. मेखला – Acc. of कार्य्या:। 7. क्षत्रियस्य – क्षत्र + घ। तस्य। 8. मौर्व्वी – मूर्व्वा + अण ङीप्। 9. ज्या – ज्या + क्विप्। जिनाति। 10. ज्या – ज्यासदृशी। 11. शण – तान्तवी शणस्य तान्तवी षष्ठी समास:। तन्तु + अण् + ङीप्।

*Change of voice.*—मौञ्ज्या त्रिवृता समया श्लक्ष्णया..................मेखलया कार्य्यया भूयते ॥ ४२ ॥

BENGALI.—ব্রাহ্মণের সমান তিনটি গুণ দ্বারা নির্ম্মিত সুখস্পর্শা মুঞ্জময়ী মেখলা করিবে, ক্ষত্রিয়ের ধনুগু'ণাকারে নির্ম্মিত মূর্ব্বময়ী ত্রিগুণিত মেখলা করিবে, বৈশ্যের শণতন্তুনির্ম্মিত ত্রিগুণিত মেখলা করিবে। ৪২ ॥

ENGLISH.—The girdle of a Brahmin should be made of a triple cord of *Munja* grass, smooth and uniformly (thick) : but that of a kshatriya should be a bowstring made of *Múrbá* grass ; that of a *Vaisya* should be a ( triple ) cord made of the thread of hemp. (42).

मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ४३ ॥

PROSE.—मुञ्जालाभे ( ब्राह्मणादीनां यथाक्रमं ) कुशाश्मान्तकवल्वजैः ( मेखलाः कार्य्याः )। त्रिवृता ( मेखलाः ) एकेन ग्रन्थिना ( यथाकुलाचारं ) त्रिभिः पञ्चभि र्वा ( युक्ताः कार्य्याः ) ॥ ४३ ॥

KULLUKA.—मुञ्जालाभे त्विति। कर्त्तव्या इति बहुवचननिर्द्देशात् ब्रह्मचारिविषयस्य प्रक्रान्तत्वात् मुञ्जालाभे विषयापेक्षायाः समत्वात् कौशादीनाञ्चत्रयाणां विधानात् मुञ्जाद्यलाभ इति बोद्धव्यम्। कर्त्तव्या इति बहुवचनमुपपन्नतरं भिन्नजातिसम्बन्धितेति कुवाचस्य मेधातिथेरपि बहुवचनपाठः सम्मतः। मुञ्जाद्यलाभे ब्राह्मणादीनां त्रयाणां यथाक्रमं कुशादिभिस्त्रिभिस्तृणविशेषैर्मेखलाः कार्य्याः। त्रिगुणेनैकग्रन्थिना युक्तास्त्रिभिर्व्वा पञ्चभिर्व्वा अत्र च वाशब्दनिर्द्देशात् ग्रन्थीनां न विप्रादिभिः क्रमेण सम्बन्धः किन्तु सर्व्वत्र यथाकुलाचारं विकल्पः। ग्रन्थिभेदश्चायं मुञ्जापेक्षासम्बन्धादग्रहीतव्यः ॥ ४३ ॥

GRAMMATICAL NOTES.—**1.** मुञ्जालाभे – मुञ्जस्य मुञ्जादीनामित्यर्थः। न लाभः अलाभः नञ् समासः। मुञ्जस्य अलाभः मुञ्जालाभः तस्मिन् सति यस्य च भावेन भावलक्षणमिति सप्तमी। **2.** कुशाश्मान्तकवल्वजैः – कुशाश्च अश्मन्तकाश्च वल्वजाश्च तैः करणे तृतीया। **3.** त्रिवृता – त्रिवृत्+टा। प्रकृत्यादिभ्य इति or कर्त्तरि तृतीया and ग्रन्थिना कर्त्तरि तृतीया युक्ताः क्रिया understood. **4.** कर्त्तव्याः qualifies मेखलाः understood. **5.** or त्रिवृताः त्रि – वृ + क्त qualifying मेखलाः (vide ऊर्द्ध्ववृतम् next sloka).

*Change of voice.*—मेखलाभिः कर्त्तव्याभिः भूयते ॥ ४३ ॥

BENGALI.—মুঞ্জ মূর্ব্বা ও শণতন্তু পাওয়া না গেলে, দ্বিজত্রয়ের যথানিয়মে কুশ অশ্মান্তক ও বল্বজনামক তৃণদ্বারা মেখলা প্রস্তুত করিবে। তাহাদের সেই সেই ত্রিগুণিত মেখলা নিজ নিজ কুলাচার অনুসারে এক, তিন বা পঞ্চগ্রন্থিযুক্ত করিবে॥ ৪৩॥

ENGLISH.—But if *Munja* grass &c. could not be had, the girdles should be made of *Kusa*, *Asmantaka*, and *Valvaja* respectively), threefold, and with one knot or three or five. (43).

कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ ४४ ॥

PROSE.—त्रिवृत् ऊर्द्ध्ववृतं उपवीतं ब्राह्मणस्य कार्पासं राज्ञः शणसूत्रमयं वैश्यस्य आविकसौत्रिकं स्यात् ॥ ४४ ॥

KULLUKA.—कार्पासमिति : यद्दीयविन्यासविशेषस्योपवीतसञ्ज्ञा वक्ष्यति तद्धर्म्मिब्राह्मणस्य कार्पासं, क्षत्रियस्य शणसूत्रमयं, वैश्यस्य मेषलोमनिर्म्मितम्। त्रिवृदिति त्रिगुणं कृत्वा ऊर्द्ध्ववृतं दक्षिणावर्त्तितम् एतच्च सर्व्वत्र सम्बध्यते यद्यपि गुणत्रयमेवोर्द्ध्ववृतं मनुनोक्तं तथापि तत्त्रिगुणीकृत्य त्रिगुणं कार्य्यम्। तदुक्तं छन्दोगपरिशिष्टे ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते। देवलोऽप्याह यज्ञोपवीतं कुर्व्वीत सूत्राणि नव तन्तवः ॥ ४४ ॥

KULLUKA EXPLAINED.—"यद्दीयविन्यासविशेषस्य उपवीतसंज्ञां वक्ष्यति तद्धर्म्मि (उपवीतं) ब्राह्मणस्य"। The particular arrangement of threads is called sacred thread, that of a Brahmin is to be made of *Karpas* (cotton). "एतच्च सर्व्वत्र सम्बध्यते" this description applies to the sacred thread of all the three classes. "गुणत्रयमेव" &c. According to Manu only three threads are to be suspended, yet they are to be trippled and three of such trippled threads are to be used.

GRAMMATICAL NOTES.—1. ऊर्द्ध्ववृतम्—ऊर्द्ध्वं वृतं आवर्त्तितं ऊर्द्ध्ववृतम्। सुप्सुपेति समासः। 2. उपवीतम्—उप—वि+इ+क्त। 3. कार्पासम्—कार्पासस्य विकारः कार्पासम्। 4. शणसूत्रमयम्—शणस्य सूत्राणि शणसूत्राणि। मयट्। 5. आविकसौत्रिकम् अवेरिदं आविकम्। सूत्राणां इदं सौत्रिकम्।

*Change of voice.*—ऊर्द्धवृतेन त्रिवृता उपवीतेन विप्रस्य कार्पासेन......... क्षत्रसूत्रमयेन......आविकसौत्रिकेण भूयेत ॥ ४४ ॥

BENGALI.—তিনটি সূত্রের একদিক দক্ষিণ কর উর্দ্ধদিকে ধরিয়া যথানিয়মে ঘুরাইয়া প্রস্তুত করিলে উপবীত হয়। ঐরূপ ত্রিগুণিত ও দক্ষিণাবর্ত্তিত উপবীত ব্রাহ্মণের পক্ষে কার্পাসসূত্রনির্ম্মিত, ক্ষত্রিয়ের পক্ষে শণসূত্রনির্ম্মিত, বৈশ্যের পক্ষে মেষলোমের সূত্রনির্ম্মিত হইবে। ৪৪॥

ENGLISH.—The holy thread of a Brahmin should be made of cotton, threefold and put over the (left) shoulder; that of a Kshatriya should be made of the thread of hemp; while that of a Vaisya should be of the thread of the wool of goat or a sheep. (44).

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैलवोदुम्बरौ वैश्यो दण्डानर्हन्ति धर्म्मतः ॥ ४५ ॥

PROSE.—ब्राह्मणो बैल्वपलाशौ क्षत्रियो वाटखादिरौ वैश्यः पैलवोदुम्बरौ दण्डान् धर्म्मतः अर्हन्ति ॥ ४५ ॥

KULLUKA.—ब्राह्मण इति। यद्यपि द्वन्द्वनिर्देशेन समुच्चयावगमात् धारणमपि समुच्चितस्यैव प्राप्तं तथापि केशान्तिको ब्राह्मणस्य दण्डः कार्य्य इति तथा प्रतिगृह्येप्सितं दण्डमिति विधावेकत्वस्य विवक्षितत्वात्। बैल्वः पालाशो वा दण्ड इति वाशिष्ठे विकल्पदर्शनात् एकस्यैव दण्डस्य धारणं विकल्पितयोरेकैकब्राह्मणसम्बन्धात् समुच्चयो द्वन्द्वेनानूद्यते ब्राह्मणादयो विकल्पेन द्वौ द्वौ दण्डौ वक्ष्यमाणकार्य्यं कर्त्तुमर्हन्ति ॥ ४५ ॥

KULLUKA EXPLAINED.—"यद्यपि.........अर्हन्ति।" "बैल्वपालाशौ" is a compound of the द्वन्द्व class; such a compound implies a collective sense: therefore it seems that a Brahmin is to use staffs of Villva and Palash collectively. But that is not the intention because in other texts we get singular number and we get optional injunction in the text of Vaistha. Therefore a Brahmin is to use staffs made of Villva and Palash optionally. The same option lies with Kshatriyas and Vaisyas also.

GRAMMATICAL NOTES.—1. बैल्वपालाशौ बैल्वश्च पालाशश्च बैल्वपालाशौ

द्वन्द्वसमासः। द्वन्द्व समास is defined as चार्थे द्वन्द्वः *i. e.* द्वन्द्वसमास contains the meaning of चकार। यद्यपि समुच्चयार्थे न द्वन्द्व समासः किन्तु इतरेतरयोगे समाहारे च तथापि समुच्चयार्थः अंशेनास्तीति समुच्चयार्थे द्वन्द्वग्रहणम्। विल्वस्य विकारः वैल्वः। विल्वादिभ्योऽण् इति विकारार्थे अण्। पलाशस्य विकारः पालाशः। पलाश + अञ् by पलाशादिभ्यो वा। पालाशम् खादिरम्। 2. वाटखादिरौ—वाटश्च खादिरश्च तौ। वटस्य विकारः वाटः अवयवे च प्राण्योषधिवृक्षेभ्य इति विकारे अण्। खदिरस्य विकारः खादिरः। खदिर + अञ् by पलाशादिभ्यो वा। 3. पैलवौदुम्बरौ पैलवश्च औदुम्बरश्च तौ। पीलोर्विकारः पैलवः by ओरञ् अञ् is affixed to उकारान्त शब्द in the sense of विकार विकारे। पीलु + अञ्। उदुम्बरस्य विकारः औदुम्बरः। उदुम्बर + अञ् by प्राणिरजतादिभ्योऽञ् उदुम्बर is रजतादि। 4. धर्मतः तृतीयायाः तसिः। प्रकृत्यादिभ्य इति तृतीया। 5. दण्डान्—समुच्चयेन अन्वयात् दण्डान् बहुवचनम्। 6. अर्हन्ति अर्ह + अन्ति। आनर्ह आर्हीत्। समुच्चयेन अन्वयः अर्हन्तीति।

*Change of voice.*—ब्राह्मणेन वैल्वपलाशौ क्षत्रियेण वाटखादिरौ वैश्येन पैलवौदुम्बरौ दण्डाः अर्ह्यन्ते ॥ ४५ )

BENGALI.—ব্রাহ্মণ ( ব্রহ্মচারী ) বিল্ব অথবা পলাশের দণ্ড, ক্ষত্রিয় ( ব্রহ্মচারী ) বট অথবা খদিরের দণ্ড, বৈশ্য ব্রহ্মচারী পীলু অথবা উডুম্বরের দণ্ড ধর্মতঃ ধারণ করিবে ॥ ৪৫ ॥

ENGLISH.—A Brahmin should have in accordance with law or rule, a staff (made) of either *Vilva* or *Palash* (wood) ; a Kshatriya should have a staff of either *Vata* or *Khadira* ; and a *Vaisya* should have a staff of *Pilu* or *Udumbara*. (45).

केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥४६॥

PROSE.—ब्राह्मणस्य प्रमाणतः केशान्तिकः दण्डः कार्य्यः राज्ञः (दण्डः) ललाटसम्मितः विशः तु नासान्तिकः स्यात् ॥ ४६ ॥

KULLUKA.—केशान्तिक इति। केशललाटनासिकापर्य्यन्तपरिमाणकमेण ब्राह्मणादीनां दण्डाः कर्त्तव्याः ॥ ४६ ॥

GRAMMATICAL NOTES.—1. केशान्तिकः केशाः अन्तं अवधिर्यस्य स केशा-

न्तिक: स्वार्थे कन्। अथवा केशा अन्तिके यस्य स:। 2. प्रमाणत: तृतीया प्रकृत्यादिभ्य:। 3. ललाटमम्मित: ललाटेन सम्मित: ललाटसम्मित: तृतीया समास:। 4. नासान्तिक: नासा अन्तिके यस्य स:।

*Change of voice.*—कैशान्तिकेन दण्डेन काय्येण भूयते। ललाटसम्मितेन नासान्तिकेन (दण्डेन) भूयेत ॥ ४६ ॥

BENGALI.—ব্রাহ্মণের দণ্ড পরিমাণে কেশপর্য্যন্ত দীর্ঘ করিবে; ক্ষত্রিয়ের দণ্ড ললাটপর্য্যন্ত ও বৈশ্যের নাসিকাপর্য্যন্ত দীর্ঘ হইবে ॥ ৪৬ ॥

ENGLISH—The staff of a Brahmin should be made in point of measure (long enough) to come up to his hair ; of a Kshatriya, measuring up to his forehead ; of a Vaisya, as long as to reach his nose. (46).

## ऋजवस्ते तु सर्व्वे स्युरव्रणा: सौम्यदर्शना:।
## अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिता: ॥ ४७ ॥

PROSE.—ते तु सर्व्वे (दण्डा:) अव्रणा: सौम्यदर्शना: नृणां अनुद्वेगकरा: सत्वच: नाग्निदूषिता: स्यु: ॥ ४७ ॥

KULLUKA.—ऋजव इति। ते दण्डा: सरला: अक्षता: शोभनदर्शना: सवल्कला: अग्निदाहरहिता भवेयु: ॥ ४७ ॥

GRAMMATICAL NOTES.—1. ऋजव: सरला:। अर्ज्ज or ऋज+उ। 2. न विद्यते व्रणो येषां ते। व्रण+अच्। 3. सौम्यदर्शना:। सौम्यं दर्शनं येषां ते। 4. उद्वेगं कुर्व्वन्तीति उद्वेगकरा:। कृञो हेतुताच्छील्यानुलोम्येषु इति ताच्छील्ये ट:। न उद्वेगकरा:। उद्–विज+घञ्। उपपदसमास:। 5. नृणाम् शेषे षष्ठी। 6. सत्वच: त्वचा सह वर्त्तमाना: सत्वच: तुल्ययोगे बहुव्रीहि:। 7. अग्निदूषिता: अग्निना दूषिता: तृतीया समास:। दुष+णिच्+क्त: कर्म्मणि। दुष स्थाने दूष। दूषयति। दुष्यति।

*Change of voice.*—तै: ऋजुभि: अव्रणै: सौम्यदर्शनै: अनुद्वेगकरै: सत्वग्भि: नाग्निदूषितै:……भूयेत ॥ ४७ ॥

BENGALI.—পূর্ব্বোক্ত সকল দণ্ডই সরল, অক্ষত, ত্বগ্‌যুক্ত, ও অগ্নিদ্বারা অদূষিত, দেখিতে এমন সুন্দর হইবে, যেন লোকের উদ্বেগ না জন্মায় ॥ ৪৭ ॥

ENGLISH.—All these staves should be straight, devoid of any hole or aperture, beautiful to look at, with their bark on, not defiled

or scorched by fire, and not creating terror or anxiety (in the minds of men). (47).

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।**
**प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥ ४८॥**

PROSE.—ईप्सितं दण्डं गृहीत्वा भास्करं उपस्थाय च अग्निं प्रदक्षिणं परीत्य यथाविधि भैक्ष्यं चरेत्॥ ४८॥

KULLUKA.—न च तैः प्राणिजातमुद्वेजनीयमित्याह प्रतिगृह्येप्सितमिति। उक्तलक्षणं प्रार्थितं दण्डं गृहीत्वा आदित्याभिमुखं स्थित्वा अग्निं प्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत॥ ४८॥

GRAMMATICAL NOTES. 1. ईप्सितम् आप् सन्+क्तः कर्म्मणि। 2. प्रतिगृह्य—प्रति—ग्रह+ल्यप्। अग्रहीत्। अग्रहीष्ट। 3. भास्करम् Acc. of उपस्थाय। भास्—कृ+ट। दिवाविभा इत्यादिना। 4. उपस्थाय—उप—स्था+ल्यप्। 5. अग्निम् Acc. of परीत्य। 6. प्रदक्षिणम्—क्रियाविशेषणं प्रगतो दक्षिणं प्रदक्षिणम्। तिष्ठद्गु प्रभृतीनि च इति निपातनात् अव्ययीभावः। 7. परीत्य परि—इ+ल्यप्। एति—अगात्। 8. यथाविधि विधिं शास्त्रं अनतिक्रम्य यथाविधि। वि—धा+कि। अव्ययीभावः। 9. चरेत्—चर+यात्। 10. भैक्ष्यम्—भिक्षायै इदम् भैक्ष्यम् भिक्षते।

*Change of voice.*—भैक्ष्यं चर्य्येत॥ ४८॥

BENGALI.—পূর্ব্বোক্ত লক্ষণযুক্ত মনোমত দণ্ড গ্রহণ করত সূর্য্যাভিমুখ হইয়া উপাসনা ও অগ্নি প্রদক্ষিণ করিয়া যথাবিধানে ভিক্ষা কার্য্য করিবে॥ ৪৮॥

ENGLISH.—Having taken a staff up to his liking, standing in front of, and adoring, the sun, going round the fire keeping it to the right, a *Brahmacharin* should go for alms. (48).

**भवत्पूर्व्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः।**
**भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ ४९॥**

PROSE.—उपनीतः द्विजोत्तमः भवत्पूर्व्वं राजन्यः भवन्मध्यं वैश्यः भवदुत्तरं भैक्ष्यं चरेत्॥ ४९॥

KULLUKA.—भवदिति। ब्राह्मणो भवति भिक्षां देहीति भवच्छब्दपूर्व्वं भिक्षां याचन् वाक्यमुच्चारयेत्। क्षत्रियो भिक्षां भवति देहीति भवन्मध्यम्। वैश्यो भिक्षां देहि भवतीति भवदुत्तरं ॥ ४९ ॥

KULLUKA EXPLAINED.—"भवति भिक्षां देहि" "भिक्षां भवति देहि" "भिक्षां देहि भवति" इति यथाक्रमं ब्राह्मणक्षत्रियवैश्याः ब्रूयुः भिक्षापर्य्यायाम्। भवतीति स्त्रीलिङ्गनिर्द्देशस्तु परवचनसामर्थ्यात्।

GRAMMATICAL NOTES.—1. द्विजोत्तमः – द्विजेषु उत्तमः द्विजोत्तमः द्विजानामुत्तम इत्यपि निर्द्धारणनिषेधात्। 2. उपनीतः—उप – नी + क्त। चरेत् चरेद। It qualifies द्विजोत्तमः राजन्यः and वैश्यः। 3. भवत् पूर्व्वम् – भवत् शब्दः पूर्व्वः यस्मिन् कर्म्मणि तद् यथा स्यात् तथा बहुव्रीहिः। भा + डवतु भवती भू + शतृ भवन्तौ। Similarly भवन्मध्यम् भवदुत्तरम्। 4. राजन्यः – राजन् + यत्। न नलोपः। 5. भैक्ष्यं चरेत् explained.

*Change of voice.*—उपनीतेन द्विजोत्तमेन ... ... ... भैक्ष्यं चर्य्येत ॥४९॥

BENGALI.—উপনয়নান্তে ব্রাহ্মণ "ভবতি ভিক্ষাং দেহি" এইরূপে ভবৎ শব্দ অগ্রে উচ্চারণ করিয়া, ক্ষত্রিয় "ভিক্ষাংভবতি দেহি" এইরূপে ভবৎ শব্দ মধ্যে উচ্চারণ করিয়া, বৈশ্য "ভিক্ষাং দেহি ভবতি" এইরূপে ভবৎ শব্দ শেষে উচ্চারণ করিয়া ভিক্ষা যাচ্ঞা করিবে ॥ ৪৯ ॥

ENGLISH.—A Brahmin invested with the holy thread should go for alms, using the word "*bhavat*" (your honoured self) first; a Kshatriya should go for alms using the word *bhavat* in the middle; and a *Vaisya* should do so, using *bhabat* at the end. (49).

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ ५० ॥

PROSE. - (ब्रह्मचारी) प्रथमं मातरं वा स्वसारं वा मातुः निजां भगिनीं वा या एनं न अवमानयेत् (तां) च भिक्षां भिक्षेत ॥ ५० ॥

KULLUKA. – मातरं वेति। उपनयनाङ्गभूतां भिक्षां प्रथमं मातरं भगिनीं मातुर्व्वा भगिनीं सहोदरां याचेत या चैनं ब्रह्मचारिणं प्रत्याख्यानेन नावमन्येत पूर्व्वाभावे उत्तरापरिग्रहः ॥ ५० ॥

KULLUKA EXPLAINED. – "पूर्व्वासम्भवे उत्तरापरिग्रहः" मात्रादीनां असम्भवे या न अवमानयेत् तां याचेत इत्यर्थः नतु विकल्पः।

GRAMMATICAL NOTES.—1. मातरम् – स्वसारम् गौणकर्म्म of भिक्षेत। 2. निजाम् – नि + जन + ड। 3. भगिनीम् – भग + इनि + ङीप्। गौण कर्म्म of भिक्षेत। 4. भैक्ष्यम् – मुख्यकर्म्म of भिक्षेत। 5. भिक्षेत – भिक्ष + ईत। भिक्षते। याचनार्थत्वात् द्विकर्म्मकः धातुः। 6. एनम् – एनादेशः अन्वादेशे। 7. अवमानयेत् – सम्भावनायां लिङ्। अव – मन् + णिच् + यात्।

*Change of voice* – माता स्वसा...निजा भगिनी भिक्षां भिक्ष्येत (ब्रह्मचारिणा) यया च अयं न अवमान्येत (सा) ॥ ५० ॥

BENGALI.—ब्रह्मचारी प्रथमে माता, ভগিনী, অথবা মাতার সহোদরা ভগিনীর নিকট, তাদৃশী আত্মীয়ার অভাবে যিনি ব্রহ্মচারীকে অবমাননা না করেন এমন নারীর নিকট (উপনয়নের অঙ্গীভূত) ভিক্ষা যাচ্ঞা করিবে ॥ ৫০ ॥

ENGLISH.—A *Brahmacharin* should first beg alms of his mother, his sister, or the full-blooded sister of his mother, or a female who may not disrespect him. (50).

## समाहृत्य तु तद्भैक्षं यावदन्नममायया।
## निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः॥ ५१ ॥

PROSE.—(ब्रह्मचारी) तद् भैक्ष्यं समाहृत्य यावदन्नं अमायया गुरवे निवेद्य आचम्य प्राङ्मुखः शुचिः (सन्) अश्नीयात् ॥ ५१ ॥

KULLUKA.—समाहृत्येति। तद् भैक्षं बहुभ्य आहृत्य यावदन्नं तृप्तिमात्रोचितं गुरवे निवेद्य निवेदनं कृत्वा अमायया कदन्नेन सदन्नं प्रच्छाद्य एवमिदं गुरुर्न ग्रहीष्यती-त्यादिमायाव्यतिरेकेण तदनुज्ञात आचमनं कृत्वा शुचिः सन् भुञ्जीत प्राङ्मुखः ॥ ५१ ॥

KULLUKA EXPLAINED. –"यावदन्नम्" is explained as "तृप्तिमात्रोचितम्" "अमायया" is explained as not covering good food by bad one so that the teacher may not accept. "अमायया निवेद्य" having presented it without guile.

GRAMMATICAL NOTES.—1. समाहृत्य – सम् – आ – हृ + ल्यप्। 2. यावदन्नम् – यावन्ति अन्नानि तावन्ति इति यावदन्नम् अव्ययीभावः by यावदवधारणे। The word यावत् in यावदन्नम् is अव्यय, but the word यावत् in the

विग्रह is तद्धितान्त ; hence भक्षपदविग्रहः नित्यत्वात् समासश्च। Adv. 3. गुरवे – क्रियाग्रहणमपि कर्त्तव्यं इति चतुर्थी। 4. अश्नीयात् – अश लिङ्। अश्नाति आशीत्। 5. आचम्य—आङ् – चम + ल्यप्। आङि चम इति वक्तव्यम् इत्यनेन आचामति। चमति। अचमीत्। आचामति स्वेदलवान् मुखे ते इति रघुः। 6. प्राङ्मुखः—प्राक् पूर्व्वदिग्गतं मुखं यस्य सः। प्र – अञ्च + क्विप्। 7. शुच + इ किन्। शोचति अशोचीत्।

*Change of voice.* – प्राङ्मुखेन शुचिना... भैक्ष्यं अश्येत ॥ ५१ ॥

BENGALI—ब्रह्मचारी এইরূপে ভিক্ষা সংগ্রহ করিয়া যতটি অন্নে তৃপ্তি হইতে পারে ছল শূন্য মনে সেই পরিমাণ গুরুকে নিবেদন করিয়া গুরুর অনুজ্ঞা অনুসারে আচমনপূর্ব্বক পূর্ব্বমুখে বসিয়া শুচিভাবে ভোজন করিবে ॥ ৫১ ॥

ENGLISH.—Having collected the alms as much as may satisfy his wants, and having informed his preceptor or *guru* without deceit, the *Brahmacharin* should, after rinsing his mouth, eat it with his face towards the east and being pure (in body and mind). (51).

**आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।**
**श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः॥ ५२ ॥**

PROSE.—प्राङ्मुखः आयुष्यं भुङ्क्ते दक्षिणामुखः यशस्यं भुङ्क्ते प्रत्यङ्मुखः श्रियं भुङ्क्ते उदङ्मुखः ऋतं भुङ्क्ते ॥ ५२ ॥

KULLUKA.—इदानीं काम्यभोजनमाह आयुष्यमिति। आयुषे हितमन्नं प्राङ्मुखो भुङ्क्ते आयुष्कामः प्राङ्मुखो भुङ्क्ते इत्यर्थः, यशसे हितं दक्षिणामुखः श्रियमिच्छन् प्रत्यङ्मुखः, ऋतं सत्यं तत्फलमिच्छन् उदङ्मुखो भुञ्जीत ॥ ५२ ॥

GRAMMATICAL NOTES.—1 भुङ्क्ते भुज + ते। भुजोऽनवने इत्यात्मने-पदम्। भुनक्ति। बुभोज बुभुजे। अभौक्षीत् अभुक्त। 2. आयुष्यम् – Qualifies अन्नम् understood. आयुष् + यत्। तस्मै हितमिति। 3. यशस्यम् Qualifies अन्नम् understood. यशस् + यत्। 4. श्रियम् – Acc. of इच्छन् understood श्रयति हरिमिति श्रीः। श्रि + क्विप्। 5. ऋतम् – Acc. of इच्छन् understood. ऋ + क्त। 6. प्राङ्मुखः—प्राक् मुखं यस्य सः। 7. प्रत्यङ्मुखः – प्रत्यक् मुखं यस्य सः। 8. दक्षिणामुखः – दक्षिणायां दिशि मुखं यस्य सः। 9. उदङ्मुखः – उदक् मुखं यस्य सः।

*Change of voice.*—प्राङ्मुखेन आयुष्यं दक्षिणामुखेन यशस्यं भुज्यते। श्रियं इच्छता प्रत्यङ्मुखेन ऋतमिच्छता उदङ्मुखेन भुज्यते॥ ५२॥

BENGALI.—যিনি আয়ুর বৃদ্ধি ইচ্ছা করেন তিনি পূর্ব্বমুখে, যিনি যশ বৃদ্ধি ইচ্ছা করেন তিনি দক্ষিণমুখে ভোজন করেন; যিনি সম্পদ্ ইচ্ছা করেন তিনি পশ্চিমমুখে, যিনি সত্যফল ইচ্ছা করেন তিনি উত্তরমুখে ভোজন করেন॥ ৫২॥

ENGLISH--One facing the east eats (food) conducive to log life, one facing the south eats food conducive to fame; one wishing riches eats facing the west; and wishing truth one eats facing the north. (52).

## उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः।
## भुक्त्वा चोपस्पृशेत्सम्यगद्भिःखानिचसंस्पृशेत्॥ ५३॥

PROSE.—द्विजः नित्यं उपस्पृश्य समाहितः अन्नं अद्यात्, भुक्त्वा च सम्यक् उपस्पृशेत् च, अद्भिः खानि च संस्पृशेत्॥ ५३॥

KULLUKA.—उपस्पृश्येति। निवेद्य गुरवेऽश्नीयादाचम्येति यद्यपि भोजनात् प्रागाचमनं विहितं तथाप्यद्भिः खानि च संस्पृशेदिति गुणविधानार्थोऽनुवादः। नित्यं ब्रह्मचर्य्यानन्तरमपि द्विज आचम्यान्नं भुञ्जीत समाहितोऽनन्यमनाः। भुक्त्वा चाचामेत् सम्यक् यथाशास्त्रम् तेन प्रक्षाल्य हस्तौ पादौ च त्रिःपिबेदम्बु वीक्षितम् इत्यादि दक्षोक्तमपि संगृह्णाति जलेन खानीन्द्रियाणि षट्छिद्राणि च स्पृशेत् तानि च शिरःस्थानि प्राणचक्षुःश्रोत्रादीनि ग्रहीतव्यानि। खानि चोपस्पृशेत् शीर्षण्यानीति गौतमवचनात्। उपस्पर्शनं कृत्वा खानि च संस्पृशेदिति पृथग्विधानात् विरवृत्तजलमात्रमाचमनं खस्पर्शनादिकमिति कर्त्तव्यता इति दर्शितम्॥ ५३॥

KULLUKA EXPLAINED.—"गुणविधानार्थम्" for adding special merit. The six hollow parts of the head are the nostrils, the ears and the eyes. "अनुवादः" re-statement of what has been once stated. आचमनम् was laid down in the 51st sloka. It is re-stated stated here.

GRAMMATICAL NOTES.—1. द्विजः—द्वि—जन+ड। जायते अजनि। 2. नित्यम्—नि—त्यप्। 3. उपस्पृश्य—उप स्पृश+ल्यप्। स्पृशति। पस्पर्श। अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। 4. अन्नम् Acc. of अद्यात् अद+क्त। 5. अद्यात्

অদ্+যাত্। আদ্ অদাত্। অখাত্। 6. সমাহিতঃ সম্ আঙ—ধা+ক্ত 7. ভুক্তা ভুজ+ক্তাচ্। 8. সম্যক্ অব্যয়ম্। 9. অদ্ভিঃ করণে তৃতীয়া। আপ্+ক্বিপ্। অপ্ শব্দো নিত্যং বহুবচনান্তঃ। 10. খানি Acc. of সংস্পৃশেত্।

*Change of voice.*—দ্বিজেন অন্নং অদ্যেত উপস্পৃশ্যেত। খানি সংস্পৃশ্যেরন্ ॥৫৩॥

BENGALI.—ব্রহ্মচারী ব্রহ্মচর্য্যের পরেও নিত্য আচমন করিয়া অনন্যমনে অন্ন ভোজন করিবে। ভোজন করিয়াও যথাশাস্ত্র (তিন বার) আচমন করিবে এবং আচমনী জলদ্বারা (শিরঃস্থিত চক্ষু কর্ণ ও নাসিকাখ্য ছয়টি) ছিদ্র স্পর্শ করিবে। ৫৩।

ENGLISH—A twice-born should always eat his food, calm and collected, after having rinsed his mouth and after eating he should rinse his mouth perfectly, and touch the hollow parts (in the head) with water. (53).

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वशः॥ ५४ ॥

PROSE.—নিত্যং অশনং পূজয়েত্, অকুত্সয়ন্ চ এতদ্ অদ্যাত্, সর্ব্বশঃ (অশনং) দৃষ্ট্বা হৃষ্যেত্, প্রসীদেত্ চ, প্রতিনন্দেত্ চ ॥ ৫৪ ॥

KULLUKA.—পূজয়েদশনমিতি। সর্ব্বদা অন্নং পূজয়েত্ প্রাণার্থত্বেন ধ্যায়েত্। তদুক্তমাদিপুরাণে অন্নং বিষ্ণুঃ স্বয়ং প্রাহ ইত্যনুবর্ত্তী প্রাণার্থং মাং সদা ধ্যায়েত্ স মাং সম্পূজয়েত্ সদা চানিন্দন্ খৈতদদ্যাত্ দৃষ্ট্বা হৃষ্যেত্ প্রসীদেচ্চেতি হেত্বন্তরজমপি খেদম্ অন্নদর্শনেন ত্যজেত্ প্রতিনন্দেত্ নিত্যমস্মাকমেতদস্ত্বিতি অভিধায় বন্দনং প্রতিনন্দনম্। তদুক্তমাদিপুরাণে অন্নং দৃষ্ট্বা প্রণম্যাদৌ প্রাঞ্জলিঃ কথয়েত্ততঃ। অস্মাকং নিত্যমস্ত্বেতদিতি ভক্ত্যা স্তুবন্ নমেত্। সর্ব্বশঃ সর্ব্বমন্নম্ ॥ ৫৪ ॥

MEANING IN ENGLISH.—Food is to be honored as sustainer of life; it must be eaten without contempt; when it is seen one is to rejoice, and forget sorrows caused otherwise, and must bow to it saying that he may obtain it daily.

GRAMMATICAL NOTES.—1. অশনম্ Acc. of পূজয়েত্। অশ+ল্যুট্। অশ্নাতি। 2. পূজয়েত্ পূজ+ণিচ+যাত্। অপূপুজত্। 3. অদ্যাত্ অদ+যাত্। 4. এতদ্ Acc. of অকুত্সয়ন্ and অদ্যাত্। 5. অকুত্সয়ন্—কুত্সয়তি+শতৃ। ন কুত্সয়ন্ অকুত্সয়ন্। 6. হৃষ্যেত্ হৃষ+যাত্। হৃষ্যতি। 7. প্রসীদেত্—

प्र – सद + यात्। सीदति। असदत्। 8. प्रतिनन्देत् – प्रति – नन्द + यात् ननन्द अनन्दीत्। 9. सर्व्वशः सर्व्व + द्वितीयार्थे शस्। Acc. of इदम्।

*Change of voice.* – अशनं पूज्येत अकुत्सयता भवेत हृष्येत प्रसीदत प्रति-नन्द्येत ॥ ५४ ॥

BENGALI.—অন্ন প্রাণধারণের উপায় এইরূপ ধ্যান দ্বারা অন্নের পূজা করিবে, এবং নিন্দা না করিয়া অন্ন ভোজন করিবে; অন্ন দর্শন করিয়াই হর্ষ প্রকাশ করিবে, অন্য কারণে চিত্তে খেদ জন্মিয়া থাকিলে অন্নদর্শনমাত্র তাহা ত্যাগ করিবে, এবং এই অন্ন নিত্য যেন আমরা পাই এই বলিয়া অন্নের বন্দনা করিবে ॥ ৫৪ ॥

ENGLISH.—He should always reverence food and eat it without blaming it; he should be glad on seeing it, be satisfied, and should recieve all food with joy. (54).

पूजितं ह्यशनं नित्यं बलमूर्ज्जञ्च यच्छति।
अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥

PROSE.—पूजितं अशनं नित्यं बलं ऊर्ज्जं च यच्छति, अपूजितं च तद् इदं उभयं नाशयेत् हि (तस्मात् अन्नं पूजयेत्) ॥ ५५ ॥

KULLUKA.—पूजितमिति। यस्मात् पूजितमन्नं सामर्थ्यं वीर्य्यञ्च ददाति अपूजितं पुनरेतदुभयं नाशयति तस्मात् सर्व्वदा अन्नं पूजयेदिति पूर्व्वोक्तवाक्यतापन्नमिदं फलश्रवणम् सन्ध्यावन्दनादावुपात्तदुरितक्षयवत्, नित्यं कामनाविषयत्वेनापि नित्यश्रुति-रविहता, नित्यश्रुतिविरोधात् फलश्रवणं स्तुत्यर्थमिति तु मेधातिथिगोविन्दराजौ ॥ ५५ ॥

GRAMMATICAL NOTES— 1. पूजितम् – पूज + वर्त्तमाने क्तः मति-बुद्धि पूजार्थेभ्यश्च। 2. अशनम् – अश + ल्युट्। 3. बलम्। 4. ऊर्ज्जम् Acc. of यच्छति ऊर्ज्ज – ऊर्ज्जयति। ऊर्ज्ज + घञ्। 5. यच्छति दा + लट् ति। 6. न पूजितं अपूजितम्। 7. भुक्तम् भुज + क्तः कर्म्मणि। 8. इदम् Qualifies उभयम्। 9. उभयम् Acc. of नाशयेत्। 10. नाशयेत् नश + णिच् + यात्।

*Change of voice.* – पूजितेन अशनेन ... बलं ऊर्ज्जञ्च दीयते। तेन उभयं नाश्येत ॥५५॥

BENGALI.—সর্ব্বদা পূজাপূর্ব্বক ভোজন করিলে অন্ন সামর্থ্য ও বীর্য্য প্রদান করে, অভক্তিপূর্ব্বক ভোজন করিলে ঐ উভয়কেই নাশ করে। অতএব ভক্তিপূর্ব্বক অন্ন ভোজন করিবে ॥ ৫৫ ॥

ENGLISH.—A food reverenced always gives strength and power, but if it is eaten without being reverenced it destroys both. (55).

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा।
नचैवात्यशनं कुर्य्यान्नचोच्छिष्टःक्वचिद्व्रजेत् ॥ ५६ ॥

PROSE.—उच्छिष्टं कस्यचित् न दद्यात्, तथा अन्तरा न चैव अद्यात्, अत्यशनं च नैव कुर्य्यात् न च उच्छिष्टः सन् क्वचित् व्रजेत् ॥ ५६ ॥

KULLUKA.—नोच्छिष्टमिति। भुक्तावशेषं कस्यचिन्न दद्यात्, चतुर्थ्यां प्राप्तायां सम्बन्धमात्रविवक्षया षष्ठी। अनेनैव सामान्यनिषेधेन शूद्रस्याप्युच्छिष्टदाननिषेधे सिद्धे नोच्छिष्टं न हविष्कृतमिति शूद्रगोचरनिषेधचातुर्थः स्नातकव्रतं त्वार्थः। दिवासायं-भोजनयोश्च मध्ये न भुञ्जीत, बारद्वयेऽप्यतिभोजनं न कुर्य्यात्। नातिसौहित्यमाद्रियेदिति चातुर्थं स्नातकव्रतार्थम् उच्छिष्टः सन् क्वचिन्न गच्छेत् ॥ ५६ ॥

KULLUKA EXPLAINED.—"अनेनैव ...... स्नातकव्रतत्वार्थः"। This general injunction prohibits a twice-born from giving remnants of their dishes to the Sudras also. Yet in the fourth chapter we have a special text prohibiting the giving of the remnants of a dish to the Sudras; that is no repetition, but points out special functions of a *snatak* twice-born. Kulluka has explained elsewhere that remnants of a dish, and torn pieces of cloth may be given to Sudras who become a "griha-sudra" or domestic slave, but not to others.

GRAMMATICAL NTOES.—1. उच्छिष्टम्—उत्—शिष्+क्तः कर्म्मणि। शिनष्टि। 2. कस्यचित्—सम्बन्धविवक्षया सम्प्रदानचतुर्थीस्थले षष्ठी। 3. अद्यात् अद्+यात्। 4. अन्तरा अव्ययम् अधिकरणम्। 5. अत्यशनम्—अतिमात्रं अशनम् अत्यशनम् प्रादयो गताद्यर्थे प्रथमयेति समासः। अति—अश+ल्युट्। 6. उच्छिष्टः—उत्—शिष्+क्तः भावे उच्छिष्टम्। अर्श आदिभ्यः अच्। 7. व्रजेत् व्रजति व्रज+यात्। वव्राज अव्राजीत्। 8. क्वचित्—किम्+सप्तम्यर्थे अत्। क्व। by क्वाति। Then चित्।

*Change of voice.*—उच्छिष्टं दीयेत। अद्येत। क्रियेत। उच्छिष्टेन··· व्रज्येत ॥ ५६ ॥

BENGALI.—কাহাকেও উচ্ছিষ্ট প্রদান করিবে না, দিবা ও রাত্রিভোজনের মধ্য-কালে ভোজন করিবে না, অতিরিক্ত ভোজন করিবে না, এবং উচ্ছিষ্টমুখে কোথাও যাইবে না ॥ ৫৬ ॥

ENGLISH.—A twice-born should give the remains of his food to none, and he should not eat between the (two meals,—at daytime and night). He should not eat much, nor should he go anywhere with remains of food (in his mouth). (56).

**अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम्।**
**अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्ज्जयेत् ॥ ५७ ॥**

PROSE.—अतिभोजनं अनारोग्यं अनायुष्यं अस्वर्ग्यं अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्ज्जयेत् ॥ ५७ ॥

KULLUKA.—अतिभोजने दोषमाह अनारोग्यमिति। अरोगो रोगाभावः तस्मै हितमारोग्यम्, आयुषे हितमायुष्यम्, यस्मादतिभोजनमनारोग्यमनायुष्यञ्च भवति अजीर्णजनकत्वेन रोगमरणहेतुत्वात्, अस्वर्ग्यञ्च स्वर्गहेतुयागादिविरोधित्वात्, अपुण्यम् इतरपुण्यप्रतिपक्षत्वात् लोकविद्विष्टं बहुभोजितया लोकनिन्दनात् तस्मात् तत् न कुर्य्यात् ॥ ५७ ॥

KULLUKA EXPLAINED.—"अपुण्यम् इतरपुण्यप्रतिपक्षत्वात्" नञ् has different meanings. तत्सादृश्यं मभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः। नञ् in अपुण्यम् means विरोध inconsistent with. अपुण्यम् inconsistent with other meritorious works.

GRAMMATICAL NOTES.—1. अनारोग्यम्—रोगस्य अभावः अरोगः अभावार्थकस्य नञः अव्ययीभावेन विकल्पितः समासः। नञ् समासः। यथा अविवादः &c. &c.। अरोगस्य भावः आरोग्यम्। अरोग+ष्यञ्। न आरोग्यम् अनारोग्यम्। रुज+घञ् रोगः। कर्त्तरि। पद रुज विश स्पृशो घञ्। रुजतीति रोगः। स्पृशतीति स्पर्शः। 2. आयुषे हितम् आयुष्यम् आयुस्+यत्। न आयुष्यं अनायुष्यम्। 3. स्वर्गाय हितं स्वर्ग्यं न स्वर्ग्यं अस्वर्ग्यम्। 4. न पुण्यं पुण्यविरुद्धम् इति अपुण्यम्। पू+यत् पुण्यम्। 5. लोकविद्विष्टम् लोकैः विद्विष्टम् लोकविद्विष्टम्। तृतीया समासः। लोक्यतेऽसौ लोकः। वि—द्विष+क्तः कर्म्मणि। द्वेष्टि। अविद्वन्। 6. तस्मात् हेतौ पञ्चमी। 7. परिवर्ज्जयेत्—वृज णिच् यात्।

*Change of voice.*—...अतिभोजनेन अनारोग्येण भूयते...तत् परिवर्ज्जयेत ॥५७॥

BENGALI.—অতিভোজনে স্বাস্থ্যহানি হয়, আয়ুঃ স্বল্প হয়, স্বর্গসাধক যাগাদি ক্রিয়ার বাধা হয়, ঔদরিক বলিয়া নিন্দা হয়, পুণ্যকার্য্যে বিঘ্ন জন্মে, অতএব উহা পরিত্যাগ করিবে । ৫৭ ॥

ENGLISH.—Surfeit or eating to excess is unwholesome, detrimental to longivity, and prejudicial to the securing of heaven ; it is unholy or vicious, hated by men, and therefore one should avoid it. (57).

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥ ५८ ॥

PROSE.—विप्रः नित्यकालं ब्राह्मेण तीर्थेन उपस्पृशेत्, कायत्रैदशिकाभ्यां वा (उपस्पृशेत्) पित्र्येण कदाचन न (उपस्पृशेत्) ॥ ५८ ॥

KULLUKA.—ब्राह्मेणेति । ब्राह्मादिसंज्ञेयं शास्त्रे संव्यवहारार्था स्तुत्यर्था च नतु मुख्यं ब्रह्मदैवताकत्वं सम्भवति अप्रयागरूपत्वात्, तीर्थशब्दोऽपि पावनगुणयोगात् । ब्राह्मेण तीर्थेन सर्व्वदा विप्रादिराचामेत् । कः प्रजापतिस्तदीयः कायः तस्येदमित्यण् इकारस्यात्वादेशः । त्रैदशिको दैवः ताभ्यां वा । पित्र्येण तु तीर्थेन न कदाचिदाचामेत् अप्रसिद्धत्वात् ॥ ५८ ॥

KULLUKA EXPLAINED.—The words ब्राह्म, काय, त्रैदशिक and पित्र्य are technical ones used for praising what is indicated by them. The word तीर्थ is also technically called so because things indicated by it add purity. These are explained in the next sloka.

GRAMMATICAL NOTES.—1. ब्रह्मणः इदम् ब्राह्मम् । ब्रह्मन्+अण् । 2. तेन तीर्थेन करणे तृतीया । 3. नित्यकालम् नित्यश्चासौ कालश्च । कर्म्मधारयः । अत्यन्तसंयोगे द्वितीया । 4. कायत्रैदशिकाभ्याम् कस्य प्रजापतेः इदं कायम् । क+अण् । इकारोऽन्त्यादेशः । कि+अण् । कायम् । तिस्रः दशाः बाल्यकं विना विद्यन्ते येषां ते त्रिदशाः देवाः । त्रिदशानामिदं त्रैदशिकम् । त्रिदश+ठक् । कायञ्च त्रैदशिकञ्च कायत्रैदशिके द्वन्द्वसमासः । ताभ्याम् । Qualify तीर्थाभ्याम् understood. 5. पित्र्येण पितॄणामिदं पित्र्यम् । पितृ+यत् । सर्व्वं पारिभाषिकम् । Qualifies तीर्थेन ।

*Change of voice.*—...विप्रेण उपस्पृश्येत ॥ ५८ ॥

BENGALI.—ব্রাহ্মণাদি সকল সময়েই ব্রাহ্মতীর্থ দ্বারা (বৃদ্ধাঙ্গুষ্ঠের মূলের অধোভাগ দ্বারা) আচমন করিবে, অথবা প্রজাপতি তীর্থ (কনিষ্ঠাঙ্গুলির মূল) দ্বারা বা দৈবতীর্থ (সমস্ত অগ্রভাগ) দ্বারা আচমন করিবে, কিন্তু পিত্র্যতীর্থ (তর্জ্জনী ও অঙ্গুষ্ঠের মধ্যভাগ) দ্বারা কখনও আচমন করিবে না ॥ ৫৮ ॥

ENGLISH.—A Brahmin should always take a sip of water with (that part of his hand called) *Bahmatirtha* or with *Kaya* or *Traidasika tirtha* ; but never with the *pitryatirtha.* (58).

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।**
**कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥ ५८ ॥**

PROSE.—अङ्गुष्ठमूलस्य तले ब्राह्मं, अङ्गुलिमूले कायं अग्रे दैवं, तयोः अधः पित्र्यं तीर्थं प्रचक्षते (मन्वादयः) ॥ ५८ ॥

KULLUKA.—ब्राह्मादितीर्थान्याह अङ्गुष्ठमूलस्येति । अङ्गुष्ठमूलस्याधोभागे ब्राह्मं कनिष्ठाङ्गुलिमूले कायम्, अङ्गुलीनामग्रे दैवम्, अङ्गुष्ठप्रदेशिन्योर्मध्ये पित्र्यं तीर्थं मन्वादयः आहुः । यद्यपि कायमङ्गुलिमूले तयोरध इत्यत्र चाङ्गुलिमात्रं श्रुतं तथापि स्मृत्यन्तराद्विशेषपरिग्रहः । तथाच याज्ञवल्क्यः कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ ५८ ॥

KULLUKA EXPLAINED.—As deduction from other texts, Kulluka has explained "अङ्गुलिमूले" as "कनिष्ठाङ्गुलिमूले," "अग्रे" as "अङ्गुलीनां (सकलानां) अग्रे" and "तयोः" as "अङ्गुष्ठ-प्रदेशिन्योः and not अङ्गुष्ठकनिष्ठयोः" ।

GRAMMATICAL NOTES.—1. अङ्गुष्ठमूलस्य – अङ्गुष्ठस्य मूलं तस्य षष्ठीसमासः । 2. प्रचक्षते – प्र + चक्ष् + अन्ते । लट् । 3. कायम् qualifies तीर्थम् । क + अण् इकारः अन्तादेशः । 4. अङ्गुली: मूलं अङ्गुलिमूलं तस्मिन् । 5. तयोः षष्ठी by षष्ठ्यतसर्थप्रत्ययेन, षष्ठी is added in conection with अतसर्थक प्रत्ययान्त words. अधः is such a word. 6. अधः – अधर + असि = अध् + अस् = अधस् by पूर्व्वाधरावराणामसि पुरधवश्चैषाम् *i. e.* असि is affixed to पूर्व्व अधर and अवर in the sense of अस्तात् and they become पुर् अध् and अव् respectively.

*Change of voice*.—तीर्थं प्रख्यायते ॥ ५८ ॥

BENGALI.—বৃদ্ধাঙ্গুষ্ঠের মূলের অধোভাগকে ব্রাহ্মতীর্থ, কনিষ্ঠাঙ্গুলির মূলদেশকে প্রজাপতি তীর্থ, সমুদয় অঙ্গুলির (মিলিত) অগ্রভাগকে দৈবতীর্থ, তর্জ্জনী ও অঙ্গুষ্ঠের মধ্যভাগকে পিত্র্যতীর্থ নামে মন্বাদি মুনিগণ নির্দ্দেশ করিয়াছেন ॥ ৫৯ ॥

ENGLISH.—The (part) on the surface of the root of the thumb is called *Brahmatirtha*; the part at the root of the (little) finger *Kaya*; the tips (brought together) of the fingers the *Daiva* and the part below the two (the thumb and the forefinger) the *Pitrya tirtha*. (59).

त्रिराचामेदपः पूर्व्वं द्विःप्रमृज्यात्ततोमुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥ ६० ॥

PROSE.—पूर्व्वं त्रिः अपः आचामेत्, ततः द्विः मुखं प्रमृज्यात्, खानि च आत्मानं शिरः च अद्भिः एव स्पृशेत् ॥ ६० ॥

KULLUKA.—सामान्येनोपदिष्टस्य आचमनस्यानुष्ठानक्रममाह त्रिराचामेदिति। पूर्व्वं ब्राह्मादितीर्थेन जलगण्डूषत्रयं पिबेत् अनन्तरं संवृत्यौष्ठाधरौ वारद्वयमङ्गुष्ठमूलेन संमृज्यात् संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततोमुखम् इति दक्षेण विशेषाभिधानात्। खानि चेन्द्रियाणि जलेन स्पृशेत् मुखस्य सन्निधानान्मुखखान्येव। गौतमोऽप्याह खानि चोपस्पृशेच्छीर्षण्यानि। हृदयज्योतिः पुरुष इति उपनिषत्सु हृदयदेशत्वेनात्मनः श्रवणात् आत्मानं हृदयं शिरश्चाद्भिरेव स्पृशेत् ॥ ६० ॥

KULLUKA EXPLAINED.—"आचामेत्" – "पिबेत्" Kulluka supplies "ब्राह्मादितीर्थेन" प्रमृज्यात्" Kulluka supplies "संवृत्याधरौष्ठौ" and "अङ्गुष्ठमूलेन" "खानि" is explained as "मुखखान्येव" "आत्मानं" is explained as "हृदयम्" " on the strength of other texts of Smritis and Upanishads.

GRAMMATICAL NOTES.—1. त्रिः – त्रि + सुच् by द्वि – त्रि – चतुर्भ्यः सुच्। अल्लसुचोऽपवादः। Adv. 2. अपः Acc. of आचामेत्। 3. आचामेत्—आङ् – चम + यात्। 4. द्विः – द्वि + सुच्। 5. प्रमृज्यात् – प्र – मृज + यात्। मृज conjugated. 6. मुखम् Acc. of प्रमृज्यात्। 7. खानि। 8. आत्मानम्। 9. शिरः Acc. of स्पृशेत्। 10. अद्भिः करणे तृतीया। 11. स्पृशेत् स्पृशति पस्पर्श। अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्।

*Change of voice.*—आपः आचम्येरन्। खानि आत्मा शिरः स्पृश्येरन् ॥६०॥

BENGALI.—প্রথমতঃ ব্রাহ্মাদি তীর্থ দ্বারা তিন বার জল পান করিবে, তৎপর সংবৃত ওষ্ঠাধর অঙ্গুষ্ঠমূলদ্বারা দুই বার মার্জ্জনা করিবে, এবং মস্তকস্থ ছিদ্রসকল, হৃদয় ও মস্তক জল দ্বারাই স্পর্শ করিবে। ৬০ ॥

ENGLISH.—Let him (a Brahmin) first take three sips (of water); then wipe his mouth twice; and touch with water the openings in the face, the head and the body (the breast). (60.)

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्म्मवित्।
शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥

PROSE.—धर्म्मवित् शौचेप्सुः (सन्) तीर्थेन अनुष्णाभिः अफेनाभिः अद्भिः एकान्ते प्रागुदङ्मुखः सर्व्वदा आचामेत् ॥ ६१ ॥

KULLUKA.—अनुष्णाभिरिति। अनुष्णीकृताभिः फेनवर्ज्जिताभिर्ब्राह्मादितीर्थेन शौचमिच्छन् एकान्ते जनैरनाकीर्णे शुचिदेश इत्यर्थः। प्राङ्मुख उदङ्मुखो वा सर्व्वदा आचामेत्। आपत्स्वेन तप्ताभिश्च कारणादित्यभिधानात् व्याध्यादिकारणव्यतिरेकेण नाचामेत्, व्याध्यादौ तु उष्णीकृताभिरप्याचमने दोषाभावः। तीर्थव्यतिरेकेणाचमने शौचाभाव इति दर्शयितुमुक्तस्यापि तीर्थस्य पुनर्व्वचनम् ॥ ६१ ॥

GRAMMATICAL NOTES. 1. धर्म्मवित्—धर्म्मं वेत्तीति धर्म्मवित् उपपदसमासः। धर्म्मविद् + क्विप्। 2. शौचेप्सुः—शौचं ईप्सुः शौचेप्सुः द्वितीया समासः। शुचेर्भावः शौचम्। आप्—सन्+उः। 3. एकान्ते—अधिकरणम्। एकः अन्तः एकान्तः तस्मिन्। 4. प्राक् च उदक् च मुखं यस्य स प्रागुदङ्मुखः। बहुव्रीहिः। प्र—अञ्च+क्विप्। उत्—अञ्च्+क्विप्। 5. अनुष्णाभिः न उष्णाभिः अनुष्णाभिः। 6. अफेनाभिः न विद्यन्ते फेना यासु ताभिः बहुव्रीहिः। ताभिः qualifies अद्भिः। 7. अद्भिः करणे तृतीया। 8. तीर्थेन करणे तृतीया.

*Change of voice.*—धर्म्मविदा शौचेप्सुना &c. &c.......आचम्येत ॥ ६१ ॥

BENGALI.—যে ধর্ম্মজ্ঞ ব্যক্তি শুদ্ধ হইতে ইচ্ছা করেন, তিনি ব্রাহ্মাদি তীর্থদ্বারা অনুষ্ণ ফেনশূন্য জলদ্বারা নির্জনে পূর্ব্ব বা উত্তরমুখে সর্ব্বদা আচমন করিবে। ৬১ ॥

ENGLISH.—One who knows the laws (of duty) and is desirous of purity should always take sips of water devoid of foam or froth and not heated, by mans of the *Brahmatirtha* in a retired place, with his face either towards the east or the north. (61).

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥ ६२ ॥

PROSE—विप्रः हृद्गाभिः, भूमिपः तु कण्ठगाभिः, वैश्यः प्राशिताभिः शूद्रः तु अन्ततः स्पृष्टाभिः अद्भिः पूयते ॥ ६२ ॥

KULLUKA.--आचमनजलपरिमाणमाह हृद्गाभिरिति। ब्राह्मणो हृदयगामिनीभिः क्षत्रियः कण्ठगामिनीभिः वैश्योऽन्तरास्यप्रविष्टाभिः कण्ठमप्राप्ताभिरपि शूद्रो जिह्वौष्ठान्तेनापि स्पृष्टाभिरद्भिः पूतो भवति, अन्तत इति तृतीयार्थे तसिः ॥ ६२ ॥

GRAMMATICAL NOTES.—1. हृद्गाभिः—हृदं गच्छन्तीति हृद्गाः हृद्-गम+ड। 2. कण्ठं गच्छन्तीति कण्ठगाः कण्ठ-गम+ड। 3. भूमिपः-भूमिं पातीति भूमिपः क्षत्रियः। भूमि+पा+क। 4. प्राशिताभिः-प्र—अश्-क्तः कर्म्मणि। 5. अन्ततः तृतीयायाः तसिः करणे तृतीया। जिह्वोष्ठयोरन्तेन इत्यर्थः। 6. अद्भिः करणे। 7. पूयते पूञ् पवने। कर्म्म कर्त्तरि। Or make अद्भिः कर्त्तरि तृतीया and पूयते कर्म्मणि प्रत्ययः।

*Change of voice.*—विप्रः......पूयते। कर्म्मकर्त्तरि। Change विप्रेण पूयते। If कर्म्मणि आपः विप्रं...पुनन्ति ॥ ६२ ॥

BENGALI.—আচমনকালে হৃদয় পর্য্যন্ত প্রবেশ করে এই পরিমাণ জলদ্বারা ব্রাহ্মণ, কণ্ঠ পর্য্যন্ত গমন করে এই পরিমাণ জলদ্বারা ক্ষত্রিয়, মুখের অভ্যন্তর পর্য্যন্ত যাইতে পারে এই পরিমাণ জলদ্বারা বৈশ্য, জিহ্বা ও ওষ্ঠের অন্তভাগ স্পর্শ করে এই পরিমাণ জলদ্বারা শূদ্র আচমন করিলে পবিত্র হয় ॥ ৬২ ॥

ENGLISH.—A Brahmin is purified by (sips of as much) water as may reach the heart; a Kshatriya by as much as reaches the throat; a Vaisya by water simply entering into the mouth; and a Sudra by water touched by the extremity (of his lips). (62).

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥ ६३ ॥

PROSE.—द्विजः दक्षिणे पाणौ उद्धृते उपवीती इत्युच्यते, सव्ये पाणौ उद्धृते प्राचीन आवीती, कण्ठसज्जने निवीती उच्यते ॥ ६३ ॥

KULLUKA.—आचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्षणं तत्प्रसङ्गेन प्राचीनावीत्यादिलक्षणमाह उद्धृते इति। दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिण-

कण्ठावलम्बे यज्ञसूत्रे वस्त्रे वा उपवीती द्विजः कथ्यते, वामपाण्यावृते दक्षिणस्कन्धस्थिते वामकक्षावलम्बे प्राचीनावीती भण्यते सव्ये प्राचीन आवीतीति छन्दोऽनुरोधादुक्तम्। तथा च गोभिलः दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनं भवति एवं यज्ञोपवीती भवति, सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवत्येवं प्राचीनावीती भवति। निवीती कण्ठसज्जन इति शिरोऽवधाय दक्षिणपाण्यादावप्यनुद्धृते कण्ठादेव सज्जने ऋजुप्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति॥ ६३॥

KULLUKA EXPLAINED.—"दक्षिणे पाण्यावुद्धृते वामस्कन्धस्थिते दक्षिणकक्षावलम्बने यज्ञसूत्रे" प्राक् कण्ठात् यज्ञसूत्रं लम्बय, ततः यज्ञसूत्रमण्डलस्य मध्यभागेन दक्षिणहस्तं उत्तोलय, तथा सति यज्ञसूत्रं वामस्कन्धे स्थास्यति दक्षिणकटिपार्श्वं आश्रयिष्यति एवम्भूतं यज्ञसूत्रं उपवीतं कथ्यते। Place the sacred thread on the neck suspending on the breast. Raise the left hand through the circle of the thread. It will then rest on the right shoulder and the left-side. This is प्राचीनावीतम्। Suspend from the neck merely without raising any hand through it. It will be निवीतम्।

GRAMMATICAL NOTES.—1. उद्धृते—उत् — धृ + क्तः कर्म्मणि। qualifies पाणौ। 2. पाणौ यस्य च भावेन भावलक्षणमिति सप्तमी। 3. उपवीती—उप—वि—इ + क्त उपवीतम्। उपवीत+इनि। 4. प्राचीन—आवीती अससन्धिः आर्षः।=प्राचीनावीती। प्र—अञ्च+क्विप्। ख। प्राचीन। आङ्—वि—इ+क्तः। प्राचीनं आवीतं कर्म्मधारयः। प्राचीनावीत+इनि। 5. कण्ठसज्जने—कण्ठे सज्जनम् कण्ठसज्जनम् सप्तमीति योगविभागात् सप्तमी समासः। सञ्ज्+ल्युट्। सज्जते, ससञ्ज, असाङ्क्षीत्। 6. नि—वि—इ+क्त +इनि। 7. सव्ये qualifies पाणौ।

*Change of voice.*—द्विजं उपवीतिनं प्राचीनावीतिनं निवीतिनं (प्राहुः)॥६३॥

BENGALI.—কণ্ঠ হইতে বক্ষোদেশে লম্বিত যজ্ঞসূত্রের মধ্য দিয়া দক্ষিণ হস্ত উঠাইলে যজ্ঞসূত্র বামস্কন্ধ হইতে লম্বিত হইয়া দক্ষিণপার্শ্ব বেষ্টন করিয়া অবস্থান করে, এই অবস্থাপন্ন যজ্ঞসূত্রধারী দ্বিজকে উপবীতযুক্ত বলে, কণ্ঠ হইতে বক্ষোদেশে লম্বিত যজ্ঞসূত্রের মধ্য দিয়া বাম হস্ত উঠাইয়া দিলে যজ্ঞসূত্র দক্ষিণ স্কন্ধ হইতে লম্বিত হইয়া বামপার্শ্বে বেষ্টন করিয়া অবস্থান করে, এই অবস্থাপন্ন যজ্ঞসূত্রধারী দ্বিজকে প্রাচীনাবীতযুক্ত বলে; কণ্ঠ হইতে বক্ষোপরি লম্বমান যজ্ঞসূত্রধারী দ্বিজকে নিবীতযুক্ত বলে। ৬৩॥

ENGLISH.—A twice-born is said to be *Upaviti* when his right hand is raised up (so that the sacred thread might rest on his left shoulder and pass under his right arm); and he is said to be *Prachinaviti*, when his left hand is lifted up (so that the sacred thread might rest on the right shoulder and pass under his left arm); and he is said to be *Niviti*, when the sacred thread is round his neck (without passing under either arm). (63).

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥ ६४॥

PROSE.—विनष्टानि मेखलां अजिनं दण्डं उपवीतं कमण्डलुं अप्सु प्रास्य अन्यानि मन्त्रवत् गृह्णीत॥ ६४॥

NOTE.—विनष्टानि अन्यानि सामान्ये नपुंसकबहुवचनम्।

KULLUKA.—मेखलामिति। मेखलादीनि विनष्टानि भिन्नानि छिन्नानि च जले प्रक्षिप्य अन्यानि नवानि स्वस्वग्रहणोक्तमन्त्रं गृह्णीयात्॥ ६४॥

GRAMMATICAL NOTES.—1. मेखलाम् अजिनम् दण्डम् उपवीतम् कमण्डलुम् Acc. of प्रास्य। 2. विनष्टानि मेखलादीनां सामान्यविशेषणं बहुवचनान्तम्। 3. अन्यानि Acc. of गृह्णीत। सामान्ये नपुंसकम्। 4. मन्त्रवत् समन्त्रं यथा स्यात् तथा।

*Change of voice.*—विनष्टानि गृह्यं रन्॥ ६४॥

BENGALI.—মেখলা, অজিন, দণ্ড, উপবীত ও কমণ্ডলু প্রভৃতি ছিন্ন বা ভগ্ন হইলে জলে ফেলিয়া দিয়া মন্ত্রোচ্চারণ পূর্ব্বক নূতন মেখলাদি গ্রহণ করিবে॥ ৬৪॥

ENGLISH.—Having thrown into water a worn out girdle, hide of a deer (used as a garment), staff sacred thread and water-pot he should take (fresh) ones with the (chanting) *mantras* or sacred texts. (64).

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥ ६५॥

PROSE.—केशान्तः ब्राह्मणस्य षोडशे; राजन्यबन्धोः द्वाविंशे, वैश्यस्य ततः द्व्यधिके वर्षे, विधीयते॥ ६५॥

KULLUKA.—केशान्त इति। केशान्ताख्यो गृह्योक्तसंस्कारः, गर्भषोड़शे वर्षे ब्राह्मणस्य, क्षत्रियस्य गर्भद्वाविंशे, वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्त्तव्यः ॥ ६५ ॥

GRAMMATICAL NOTES. – 1. केशान्तः केशान्तनामको यस्मिन् सः संस्कारः। 2 ब्राह्मणस्य शेषे षष्ठी। 3. षोड़शे qualifies वर्षे। 4. विधीयते वि–धा+कर्म्मणि लट् ।ते। 5. राजन्यबन्धोः राजन्यः बन्धुः यस्य सः तस्य शेषे षष्ठी। 6. द्व्यधिके द्वौ अधिकौ यस्मिन् तत् तस्मिन्। Qualifies वर्षे।

*Change of voice.*—केशान्तं विदधते ॥ ६५ ॥

BENGALI.—গর্ভ হইতে ষোড়শ বর্ষে ব্রাহ্মণের, দ্বাবিংশ বর্ষে ক্ষত্রিয়ের, তাহার দুই বৎসর অধিক পরে বৈশ্যের কেশান্তনামক সংস্কার করিবে। ৬৫ ॥

ENGLISH—The tonsure ceremony or *Kesanta* of a Brahmin should be performed in the 16th year; of a Kshatriya in the 22nd year; and of a Vaisya in two years more (than that of a Kshatriya). (65).

**अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः।**
**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ६६ ॥**

PROSE – शरीरस्य संस्कारार्थं स्त्रीणां इयं आवृत् अशेषतः यथाकालं यथाक्रमं अमन्त्रिका कार्य्या ॥ ६६ ॥

KULLUKA.—अमन्त्रिकेति इयमावृत् अयं जातकर्म्मादिक्रियाकलापः समस्त उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्य्यः ॥ ६६ ॥

KULLUKA EXPLAINED. – इयं आवृत् = "जातकर्म्मादिक्रियाकलापः।

GRAMMATICAL NOTES.—1. इयं qualifies आवृत्। 2. आवृत् आङ् वृत+क्विप। आवर्त्तनं संस्काराणां क्रम इत्यर्थः। Acc. of कार्य्या। 3. कार्य्या कृ+ण्यत्। 4. शरीरस्य शेषे षष्ठी। 5. संस्कारार्थम् संस्काराय इदं संस्कारार्थं चतुर्थ्या नित्य समासः अर्थेन। सम्–कृ+घञ्। सुट आगमः। सम्पर्य्युपेभ्य इति। 6. कालमनतिक्रम्य यथाकालम्। 7. क्रम मनतिक्रम्य यथाक्रमम्। 8. अशेषतः प्रकृत्यादिभ्यः तृतीयायास्तसिः। 9. अमन्त्रिका न विद्यते मन्त्रो यस्यां सा अमन्त्रिका। समासान्तः कप्। ततः स्त्रियां आप् इकारश्च। अव्ययत्वात् वानपूर्व्वत्वात इदाप्यसुपः।

***Change of voice.*** – अमया आवृता…कार्य्यया भूयते ॥ ६६ ॥

BENGALI.—পুরুষের ন্যায় স্ত্রীলোকদিগেরও দেহশুদ্ধির জন্য উপনয়ন ভিন্ন জাত-কর্ম্মাদি সংস্কার বর্ণিত বয়স ও ক্রম অনুসারে বিনামন্ত্রে সম্পাদন করিবে ॥ ৬৬ ॥

ENGLISH—For the consecration of the bodies of females this course (of purificatory rites) should all be done in due time and due order, but without the (chanting of the) *mantras* or sacred texts. (66).

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिया ॥ ६७ ॥

PROSE.—वैवाहिकः विधिः स्त्रीणां वैदिकः संस्कारः स्मृतः. पतिसेवा गुरौ वासः, (स्मृतः) गृहार्थः अग्निपरिष्क्रिया (स्मृता) ॥ ६७ ॥

KULLUKA.—अनेनोपनयनेऽपि प्राप्ते विशेषमाह, वैवाहिक इति। वैवाहिक-विधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः गृहकृत्यमेव सायं प्रातः समिद्धोमरूपाग्निपरिचर्य्या, तस्माद्विवाहा-देरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिरिति ॥ ६७ ॥

NOTE. In some Smritis females also had investiture ceremony. But Manu clearly lays down that nuptial ceremony is in their case investiture ceremony.

GRAMMATICAL NOTES – 1. वैवाहिकः विवाह + ठक्। 2. वि – धा + कि: विधिः। 3. स्त्रीणाम् शेषे षष्ठी। 4. वैदिकः वेद + ठक। 5. स्मृतः स्मृ + क्तः कर्म्मणि। 6. पतिसेवा पत्युः सेवा same case with गुरौ वासः। 7. गुरौ गुरुकुले इत्यर्थः अधिकरणकारकं। 8. वासः विधेयविशेषण of पति-सेवा। 9. गृहार्थः गृहस्य अर्थः विषयः गृहार्थः गृहकृत्यमित्यर्थः। षष्ठी समासः। 10. अग्निपरिष्क्रिया अग्नेः परिष्क्रिया अग्निपरिष्क्रिया। षष्ठीसमासः। परि + कृ + शः।

*Change of voice.*—......विधिं......वैदिकं संस्कारं पतिसेवां वासं...... गृहार्थं......परिष्क्रियां स्मृतवन्तः (मन्वादयः) ॥ ६७ ॥

BENGALI.—উপনয়ন একটি সংস্কার হইলেও স্ত্রীলোকের উপনয়ন হইবেনা, কেননা বিবাহই স্ত্রীলোকের উপনয়ন সংস্কার, পতিসেবাই গুরুগৃহে বাস, এবং গৃহকৃত্যই স্ত্রীলোকের অগ্নিপরিচর্য্যা বলিয়া গণ্য। ॥ ৬৭ ॥

ENGLISH—The marriage ceremony is regarded as the Vedic consecration for women, attendance to and serving their husbands is looked upon as staying with the *Guru* (or a course of student-life); and the performance of household duties as worshipping the fire. (67).

एष प्रोक्तो द्विजातीनामौपनायनिको विधिः।
उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निबोधत ॥ ६८ ॥

PROSE—द्विजातीनां एषः उत्पत्तिव्यञ्जकः पुण्यः औपनायनिकः विधिः प्रोक्तः (इदानीम्) कर्म्मयोगं निबोधत ॥ ६८ ॥

KULLUKA.—एष इति। औपनायनिक इति अनुशतिकादित्वादुभयपदवृद्धिः, अयं द्विजातीनामुपनयनसम्बन्धी कर्म्मकलाप उक्तः उत्पत्तेर्द्वितीयजन्मनो व्यञ्जकः, इदानीमुपनीतस्य येन कर्म्मणा योगस्तं शृणुत इति ॥ ६८ ॥

GRAMMATICAL NOTES.—1. औपनायनिकः qualifies विधिः उपनयन + ठक्। 2. उत्पत्तिव्यञ्जकः उत्पत्तेः व्यञ्जकः षष्ठी समासः। वि—अनज् णवुल्। 3. कर्म्मयोगम् कर्म्मणा योगः कर्म्मयोगः तृतीयासमासः। युज + घञ्। 4. नि—बुध + भ्वादि लोट् त।

*Change of voice.*—विधिना प्रोक्तेन भूयते। कर्म्मयोगः निबुध्यताम् ॥ ६८ ॥

BENGALI.—ब्राह्मणादि द्विजगणेर द्वितीय जन्मेर ব্যঞ্জক পবিত্র উপনয়নসম্বন্ধীয় বিধি বলা হইল; এখন উপনীত দ্বিজগণ যে ভাবে কর্ম্মের সঙ্গে যুক্ত হইবেন, তাহা শ্রবণ করুন ॥ ৬৮ ॥

ENGLISH—The holy rule relating to the investiture of the three twice born classes which indicetes or rather constitutes their (second) birth, is thus described. Now learn their course of conduct or actions. (68.)

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च ॥ ६९ ॥

PROSE.—गुरुः शिष्यं उपनीय आदितः शौचं आचारं अग्निकार्य्यं सन्ध्योपासनं एव च शिक्षयेत् ॥ ६९ ॥

KULLUKA.—उपनीय गुरुरिति गुरुः शिष्यमुपनीय प्रथमम् एका लिङ्गे गुदे तिस्र इत्यादि वक्ष्यमाणं शौचं स्नानाचमनाद्याचारमग्नौ सायं प्रातः समिद्धोमानुष्ठानं समन्त्रकसन्ध्योपासनविधिञ्च शिक्षयेत् ॥ ६९ ॥

GRAMMATICAL NOTES.—1. उपनीय—उप—नी+ल्यप्। अनैषीत् अनैष्ट। 2. शिष्यम् शास्+क्यप्। Acc. of उपनीय and प्रयोज्य कर्त्ता of शिक्षयेत् बुध्यर्थक शिक्षधातोः प्रयोगात् प्रयोज्यस्य कर्म्मसंज्ञा। 3. आदितः आदि+सप्तम्यर्थे तसिः। 4. शिक्षयेत्—शिक्ष+णिच्+यात्। 5. आचारम् Acc. of शिक्षयेत्। 6. अग्निकार्य्यम् अग्नेः कार्य्यम् षष्ठीसमासः। 7. सन्ध्योपासनम् सन्ध्यायाः उपासनम्। षष्ठीसमासः Acc. of शिक्षयेत्। सम् ध्यै+अङ्। उप—आस्+ल्युट्।

*Change of voice*—......गुरुणा शिष्यः शिक्ष्येत आचारं अग्निकार्य्यम् सन्ध्योपासनम् ॥ ६९ ॥

BENGALI.—গুরু শিষ্যকে উপনীত করত প্রথমতঃ স্নান ও আচমনাদি শৌচ শিক্ষা দিবেন, সায়ং ও প্রাতঃকালে হোমানুষ্ঠান প্রভৃতি আচার এবং সন্ধ্যাবন্দন শিক্ষা দিবেন॥ ৬৯॥

ENGLISH—A *Guru* or preceptor, after having invested his disciple with the sacred thread, should first teach him purity of habits, customary conduct, the attendance to the sacred fires and *Sandhya* devotions. (69).

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।**
**ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः॥ ७०॥**

PROSE.—अध्येष्यमाणः (शिष्यः) तु यथाशास्त्रं आचान्तः उदङ्मुखः ब्रह्माञ्जलिकृतः लघुवासाः जितेन्द्रियः (गुरुणा) अध्याप्यः॥ ७०॥

KULLUKA.—अध्येष्यमाण इति। अध्ययनं करिष्यमाणः शिष्यो यथाशास्त्रं कृताचमन उत्तराभिमुखः कृतब्रह्माञ्जलिः पवित्रवस्त्रः कृतेन्द्रियसंयमी गुरुणा अध्याप्यः। प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखोवेति गौतमवचनात् प्राङ्मुखस्यापि अध्ययनम्। ब्रह्माञ्जलिकृत इति वाहिताग्न्यादिष्विष्यनेन कृतशब्दस्य परनिपातः॥ ७०॥

GRAMMATICAL NOTES.—1. अध्येष्यमाणः अधि—इङ्+स्यमानः (शानच्—स्यकारागमः) कर्त्तरि। अधीते अधिजगे अध्यैष्ट अध्यगीष्ट। 2. आचान्तः आङ्—चम+क्तः कर्त्तरि। 3. यथाशास्त्रम् अव्ययीभावः। 4. उदङ्मुखः—उदक् मुखं यस्य सः बहुव्रीहिः। उत्—अञ्च्+क्विप्। 5. ब्रह्माञ्जलिकृतः ब्रह्मणः वेदपाठस्य अञ्जलिः ब्रह्माञ्जलिः। वाहिताग्न्यादित्वात् कृतस्य परनिपातः। 6. लघु—वासः वस्त्रं यस्य स लघुवासाः बहुव्रीहिः। 7. कृतानि इन्द्रियाणि येन स जितेन्द्रियः। 8. अध्याप्यः अधि—इङ्—णिच् यत्।

*Change of voice.*—अध्येष्यमाणेन आचान्तेन उदङ्मुखेन ब्रह्माञ्जलिकृतेन लघुवाससा जितेन्द्रियेण (शिष्येण) अध्याप्य न भूयते ॥ ७० ॥

BENGALI.—শিষ্য অধ্যয়ন করিতে ইচ্ছুক হইলে, তৎপূর্ব্বে যথাশাস্ত্র আচমন করিয়া পবিত্র বস্ত্র পরিধানান্তে ইন্দ্রিয়সংযম করিয়া ব্রহ্মাঞ্জলি বন্ধন করিয়া উত্তরাভিমুখে বসিলে, তৎপর গুরু তাহাকে অধ্যয়ন করাইবেন ॥ ৭০ ॥

ENGLISH—A disciple about to read the Vedas should be taught, after he has properly taken the sips of water according to the Sastras has seated himself facing the north, has done the folding of his palms in honour* of the Vedas, has controlled his senses and with a light garment on. (70).

**ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।**
**संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥**

PROSE.—ब्रह्मारम्भे अवसाने च सदा गुरोः पादौ ग्राह्यौ। हस्तौ संहत्य अध्येयम्। स हि ब्रह्माञ्जलिः स्मृतः ॥ ७१ ॥

KULLUKA.—ब्रह्मारम्भेऽवसाने चेति। वेदाध्ययनस्यारम्भे कर्त्तव्ये समापने च कृते गुरोः पादोपसंग्रहणं कर्त्तव्यं हस्तौ संहत्य संश्लिष्टौ कृत्वा अध्येतव्यं स एव ब्रह्माञ्जलिः स्मृत इति पूर्वश्लोकोक्तब्रह्माञ्जलिशब्दार्थव्याकारः ॥ ७१ ॥

GRAMMATICAL NOTES.—1. ब्रह्मणः आरम्भे ब्रह्मारम्भे। भावे सप्तमी आङ्+रभ+घञ्। रभते रेभे आरब्ध। 2. अवसाने भावे सप्तमी अव—सो+ल्युट्। स्यति। 3. गुरोः शेषे षष्ठी। 4. संहत्य—सम्—हन्+ल्यप्। 5. हस्तौ Acc. of संहत्य। 6. अध्येयम् अधि—इङ्+भावे यत्।

*Change of voice.*—पादाभ्यां ग्राह्याभ्यां भूयेत। अध्येयेन भूयते। ब्रह्माञ्जलिना स्मृतेन भूयते ॥ ७१ ॥

BENGALI.—বেদপাঠের আরম্ভে এবং অন্তে শিষ্য সর্ব্বদা বক্ষ্যমাণনিয়মে গুরুর উভয় পাদ স্পর্শ করিবে; হস্তদ্বয় অঞ্জলিবদ্ধ করিয়া অধ্যয়ন করিবে; এইরূপ অধ্যয়ন অনুষ্ঠানকে ব্রহ্মাঞ্জলি বলে। ৭১ ॥

ENGLISH—At the commencement of the reading of the Vedas, and at the end, the feet of the teacher should ever be clasped. One should read with his hands folded together; that is called the folding of the palms in homage to the Vedas. (71).

**व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः॥ ७२॥**

PROSE.—गुरोः (तत्) उपसंग्रहणं व्यत्यस्तपाणिना—कार्य्यम्; (तत्र) सव्येन सव्यः दक्षिणेन दक्षिणः स्प्रष्टव्यः॥ ७२॥

KULLUKA.—पादोपसंग्रहणं कार्य्यमित्यनन्तरमुक्तं तद्व्यत्यस्तपाणिना कार्य्यमिति विधीयते कीदृशो व्यत्यासः कार्य्य इत्यत आह व्यत्यस्तपाणिनेति। सव्येन पाणिना सव्यः पादो दक्षिणेन पाणिना दक्षिणः पादः गुरोः स्प्रष्टव्यः उत्तानहस्ताभ्याञ्चेदं पादयोः स्पर्शनं कार्य्यं यदाह पैठीनसिः उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्। दक्षिणोपरिभावेन व्यत्यासोऽत्राऽयं शिष्टसमाचारात्॥ ७२॥

KULLUKA EXPLAINED.—व्यत्यस्तपाणिना with crossed hands (placing the right hand above the left one).

GRAMMATICAL NOTES.—1. गुरोः शेषे षष्ठी। 2. उप – सम – ग्रह + ल्युट। 3. व्यत्यस्तपाणिना व्यत्यस्तेन पाणिना व्यत्यस्तपाणिना। करणे तृतीया: वि – अति – अस् + क्तः। 4. कार्य्यम् कृ + ण्यत्। 5. सव्येन दक्षिणेन qualifies पाणिना। 6. स्प्रष्टव्यः—स्पृश् + तव्य। Conjugated.

*Change of voice*.—उपसंग्रहणेन कार्य्येण भूयते। सव्येन दक्षिणेन (पादेन) स्प्रष्टव्येन भूयते॥ ७२॥

BENGALI.—পূর্ব্ব শ্লোকে যে পাদসংগ্রহণের বিধান করা হইয়াছে সে পাদসংগ্রহণ বিপর্য্যস্ত হস্তে করিতে হইবে; শিষ্য দক্ষিণ হস্তে গুরুর দক্ষিণ পাদ এবং বামহস্তে গুরুর বাম পাদ স্পর্শ করিবে এবং দক্ষিণ হস্ত বামহস্তের উপর দিয়া যাইবে॥ ৭২॥

ENGLISH—The clasping of the feet of the teacher should be done with hands crossed; the left foot is to be touched by the left hand; and the right foot by the right hand. (72).

**अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।**
**अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्॥ ७३॥**

PROSE.—गुरुः नित्यकालं अतन्द्रितः अध्येष्यमाणं (शिष्यम् आरम्भे) अधीष्व भो इति ब्रूयात्, (अन्ते) विरामः अस्तु इति च (उक्त्वा) आरमेत्॥ ७३॥

KULLUKA.—अध्येष्यमाणमिति। अध्ययनं करिष्यमाणं शिष्यं सर्व्वदा अनलसो गुरुरधीष्व भो इति प्रथमं वदेत् शेषे विरामोऽस्त्वित्यभिधाय विरमेत् निवर्त्तेत॥ ७३॥

BENGALI.—শিষ্য অধ্যয়ন করিতে ইচ্ছুক হইলে, গুরু সর্ব্বদা অনলস হইয়া প্রথমে "ভো অধ্যয়ন কর" এই কথা বলিবেন, এবং অন্তে "বিরাম হউক" ইহা বলিয়া নিবৃত্ত হইবেন ॥ ৭৩ ॥

ENGLISH—The teacher should always without idleness or fatigue say to the disciple about to recite the Vedas,—"recite," and saying "let there be a stop or pause," he should cease (from teaching). (73)

ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा।
स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति ॥ ७४ ॥

PROSE.—ब्राह्मणः आदौ अन्ते च सर्व्वदा प्रणवं कुर्य्यात् (यतः) पूर्व्वं अनोङ्कृतं स्रवति, परस्तात् च (अनोङ्कृतं) विशीर्य्यति ॥ ७४ ॥

KULLUKA.—ब्राह्मणः प्रणवमिति। ब्राह्मणो वेदस्याध्ययनारम्भे अध्ययन-समाप्तौ चोङ्कारं कुर्य्यात् यस्मात् पूर्व्वं यस्योङ्कारो न कृतस्तत् स्रवति शनैःशनैर्नश्यति यस्य परस्तान्न कृतस्तद्विशीर्य्यति अवस्थितिमेव न लभते ॥ ७४ ॥

KULLUKA EXPLAINED.—अनोङ्कृतम् ओङ्काररहितम् यत् अध्ययनं तत्। ओङ्कृतम्=ओङ्कारः। भावे क्तः। स्रवति शनैर्नाशं याति। विशीर्य्यति स्मृतेः नश्यति।

GRAMMATICAL NOTES.—1. प्रणवम्—प्र–नु+अप्। प्रणवं Acc. of कुर्य्यात्। 2. पूर्व्वम् Adv. 3. अनोङ्कृतम् न विद्यते ओङ्कृतं ओङ्कारः यस्मिन् तत्। 4. स्रवति सुस्राव असुस्रुवत्। 5. परस्तात् पर+अस्ताति by दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। अधिकरणसप्तम्याः अस्तातिः। 6. विशीर्य्यति—वि–शॄ+लट् ति।

*Change of voice.*—अनोङ्कृतेन स्रूयते......विशीर्य्यते ॥ ७४ ॥

BENGALI.—ব্রাহ্মণ সর্ব্বদাই অধ্যয়নের আদি ও অন্তে প্রণব উচ্চারণ করিবে; কারণ যে অধ্যয়নের পূর্ব্বে ওঙ্কার উচ্চারিত না হয় তাহা ধীরে ধীরে নাশ পায়; যাহার অন্তে ওঙ্কার উচ্চারিত না হয়, তাহা বিশীর্ণ হয় (স্মৃতিপথে আরূঢ় হয় না) ॥ ৭৪ ॥

ENGLISH—A Brahmin should always utter (the syllable) "om" at the beginning and at the end. Without *om* at the end it disappears (*i, e.* obtains no hold at all). (74).

प्राक्कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥ ७५ ॥

PROSE.—प्राक्कूलान् (दर्भान्) पर्य्युपासीन: पवित्रै: (दर्भै:) पावित: त्रिभि: प्राणायामै: पूत: तत: ओङ्कारं अर्हति ॥ ७५ ॥

KULLUKA.—प्राक्कूलानिति प्राक्कूलान् प्रागग्रान् दर्भान् अध्यासीन:, पवित्रै: कुशै: करद्वयस्थै: पवित्रीकृत: प्राणायामास्त्रय: पञ्चदशमात्रा इति गौतमस्मरणात् पञ्चदशमात्रैस्त्रिभि: प्राणायामै: प्रयत:, अकारादिलघ्वक्षरकालश्च मात्रा ततोऽध्ययनार्थमोङ्कारमर्हति ॥ ७५ ॥

GRAMMATICAL NOTES. 1. प्रागग्रान् प्राक् पूर्व्वदिगभिमुखं अग्रं अग्रभागो येषां तान् qualifies दर्भान् understood. Kusha grasses with points to the east. 2. पर्य्युपासीन: परि - उप - आङ् आस् शानच्। आसिङ। 3. पवित्रै: qualifies दर्भै: understood. पु + इत्र। 4. पावित: पू + णिच् + क्त: कर्म्मणि। 5. प्राणायामै: प्राणानां प्राणवायूनां आयामा: दैर्घ्यसम्पादनम् निश्वासरोधा: प्राणायामा: तै: करणे तृतीया। To repeat a number of letters mentally while suppressing the breath. Here suppression of breath for a time enabling one to utter fifteen short vowels is advised. 6. पूत: पू + क्त:। 7. तत: तद् + तस्। 8. ओङ्कारम् Acc. of अर्हति ओम + कार (suffix). 9. अर्हति अर्ह + लट् ति।

*Change of voice.*—...पर्य्युपासीनेन ... पावितेन ... पूतेन ...... ओङ्कार: अर्ह्यते ॥ ७५ ॥

BENGALI.—যাহার অগ্রভাগ পূর্ব্বদিগভিমুখে স্থিত এমন কুশে উপবেশন করিয়া উভয় হস্তস্থিত পবিত্র দর্ভ দ্বারা পবিত্রীকৃত হইয়া এবং যত সময়ে পোনরটি হ্রস্বস্বর উচ্চারণ করা যায় তত সময়ে যে একটি প্রাণায়াম হয় এইরূপ তিনটি প্রাণায়াম দ্বারা বিশুদ্ধ হইয়া তবে ওঙ্কার উচ্চারণে অধিকারী হইতে পারা যায় ॥ ৭৫ ॥

ENGLISH—Sitting on Kusa grass with the points or tips to the east purified by the holy or sacred Kusa grass in his hands and purified also by three *Pranavams* or suppressions of breath, a disciple is fit to utter (the syllable) *om*. (75).

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापति:।
वेदत्रयान्निरदुहद्भूर्भुव: स्वरितीति च ॥ ७६ ॥

PROSE.—प्रजापति: अकारञ्च उकारञ्च मकारञ्च अपि भूर्भुव: स्वरितीति च वेदत्रयात् निरदुहत ॥ ७६ ॥

KULLUKA.—अकारञ्चेति। एतदक्षरमेतांचेति वक्ष्यति तस्यार्थं शेषः अकारमुकारं मकारञ्च प्रणवावयवभूतं ब्रह्मा वेदत्रयात् ऋग्यजुःसामलक्षणात् भूर्भुवः स्वरिति व्याहृतित्रयञ्च क्रमेण निरदुहत् उद्धृतवान्॥ ७६॥

KULLUKA EXPLAINED.—भूर्भुवः स्वरिति गायत्र्युपलक्षणम्। अ+उ+म् ओम्=ओं=प्रणवः। The Gayatri and the Pranava were milched out from the Vedas.

GRAMMAR.—1. अकारम्। 2. उकारम्। 3. मकारम् सर्व्वत्र अवयवे कारप्रत्ययः। Acc. of निरदुहत्। 4. प्रजापतिः षष्ठीसमासः नित्यः। 5. वेदानां त्रयं तस्मात विवक्षया पञ्चमी पक्षे वेदत्रयं निरदुहत् इत्यपि दुहेर्द्विकर्म्मकत्वात्। गां दुग्धं दोग्धि। 6. भूर्भुवः स्वरितीति Acc. of निरदुहत्। 7. निरदुहत् used for निरधोक्।

*Change of voice.*—प्रजापतिना अकारः उकारः मकारः भूर्भुवः स्वरितिश्च निरदुह्यन्त॥ ७६॥

BENGALI—অকার, উকার ও মকার এই তিনটি প্রণবাবয়ব এবং ভূঃ ভুবঃ স্বরিতি এই তিন ব্যাহৃতি প্রজাপতি ঋক্, যজুঃ, ও সামবেদ হইতে দোহন করিয়াছিলেন।৭৬।

ENGLISH—Prajapati or the Creator milked from the three Vedas the letter *A*, the letter *U* and the letter *M*, and also (the three words) *Bhuh*, *Bhubah*, (and) *Swar*. (76).

## त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
## तदित्यचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ ७७॥

PROSE.—परमेष्ठी प्रजापतिः तदित्यचः अस्याः सावित्र्याः पादं पादं त्रिभ्य एव वेदेभ्यः अदूदुहत्॥ ७७॥

KULLUKA.—त्रिभ्य एवेति। तथा त्रिभ्य एव वेदेभ्यः ऋग्यजुःसामभ्यः तदित्यचइति प्रतीकेनानुदितायाः सावित्र्याः पादं पादमिति त्रीन् पादान् ब्रह्मा आचकर्ष। परमे स्थाने तिष्ठतीति परमेष्ठी॥ ७७॥

KULLUKA EXPLAINED.—"तदित्यचः इति प्रतीकेन अनुदितायाः"। तदित्यचः *i. e.* a ऋक् commencing with the word "तत्"। प्रतीकेन अनुदितायाः which has been stated here not bodily but by representation *i. e.* by quoting a portion of it.

GRAMMAR.—1. वेदेभ्यः अपादाने पञ्चमी। 2. पादं पादम् वीप्सायां द्विर्वचनम् Acc. of अदूदुहत्। 3. अदूदुहत् दुह णिच् लुङ त्। 4. तदित्यृचः तत् इति तदिति कर्म्मधारयः। तदिति ऋक् तदित्यृक् पूर्ववत् समासः। अस्याः same case with सावित्र्याः 5. सावित्र्याः सवितृ + अण् + ङीप्। शेषे षष्ठी। 6. परमेष्ठी परमे - स्था + इन्। अलुक् अलुक समासः।

*Change of voice.*—पादः पादः अदोहि ॥ ७७ ॥

BENGALI :—সর্ব্বশ্রেষ্ঠ স্থানস্থিত ব্রহ্মা "তৎ" এই সাবিত্রী মন্ত্রের এক এক পাদ করিয়া তিন পাদ ঋক্ যজুঃ ও সামবেদ হইতে উদ্ধৃত করিয়াছেন ॥ ৭৭ ॥

ENGLISH.—The Creator, the Supreme Being, milked from the three Vedas, foot by foot, the hymn beginning with *tad*, (and known as) *Savitri* or *Gayatri*. (77).

## एतदक्षरमेताञ्च जपन् व्याहृतिपूर्व्विकाम्।
## सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥

PROSE.—एतदक्षरं व्याहृतिपूर्व्विकां एताञ्च सन्ध्ययोः जपन् वेदवित् विप्रः वेदपुण्येन युज्यते ॥ ७८ ॥

KULLUKA.—यत एवं अतः एतदक्षरमिति। एतदक्षरमोङ्काररूपम् एताञ्च त्रिपदां सावित्रीं व्याहृतित्रयपूर्व्विकां सन्ध्याकाले जपन् वेदज्ञो विप्रादिर्वेदत्रयाध्ययनपुण्येन युक्तो भवति अतः सन्ध्याकाले प्रणवव्याहृतित्रयोपेतां सावित्रीं जपेदिति विधिः कल्प्यते ॥ ७८ ॥

GRAMMAR.—1. व्याहृतिपूर्व्विकाम् व्याहृतिः पूर्व्वं यस्याः ताम्। 2. सन्ध्ययोः अधिकरणे सप्तमी। 3. वेद विद् + क्विप्। 4. वप् + रक् विप्रः। 5. वेदपुण्येन वेदस्य वेदपाठस्य पुण्यम् तेन सहार्थे तृतीया। 6. युज्यते युज कर्म्मणि लट् ते। Nom. विधिना understood.

*Change of voice.*—विप्रं वेदपुण्येन युनक्ति विधिः ॥ ७८ ॥

BENGALI.—এই প্রণবরূপ অক্ষর এবং ভূর্ভুবঃস্বঃ এই ব্যাহৃতিত্রয়যুক্ত গায়ত্রী উভয় সন্ধ্যাকালে জপ করিলে বেদবিৎ ব্রাহ্মণ বেদপাঠজনিত পুণ্য লাভ করে ॥ ৭৮ ॥

ENGLISH.—A Brahmin versed in the Vedas is gifted with the merit of reading the Vedas, by muttering this syllable (*Om*) and this hymn (*Gayatri*) preceded by the words (*Bhuh*, *Bhuvah*, and *Swar*), at both the *Sandhyas*, (morning and evening). (78).

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।**
**महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते॥ ७९॥**

PROSE.—द्विजः एतत् त्रिकं बहिः सहस्रकृत्वः अभ्यस्य महतः अपि एनसः अहिः त्वचा इव मासात् विमुच्यते॥ ७९॥

KULLUKA.—सहस्रकृत्व इति। सन्ध्यायामन्यत्र च काले एतत् प्रकृतं प्रणवव्याहृतिवयसावित्र्यात्मकं त्रिकं ग्रामाद्बहिर्नदीतीरारण्यादौ सहस्रावृत्तिं जपित्वा महतोऽपि पापात् सर्प इव कञ्चुकान्मुच्यते तस्मात् पापक्षयार्थमिदं जपनीयमिति अप्रकरणेऽपि लाघवार्थमुक्तम् अन्यत्तन्त्र्यौच्चारणमपि पुनः कर्त्तव्यं स्यात्॥ ७९॥

GRAMMAR.—1. सहस्रकृत्वः सहस्र+कृत्वसुच्। 2. अभि—अस्+ल्यप्। 3. बहिः अव्ययम्। 4. एनसः अपादाने पञ्चमी अपेतापोढमुक्त इति ज्ञापकात्। 5. त्वचा कर्त्तरि तृतीया। 6. अहिः Acc. of विमुच्यते कर्म्मणि। 7. मासात् विवक्षया पञ्चमी तृतीया स्थाने वा मासं प्रतीत्य इति ल्यब्लोपे कर्म्मणि पञ्चमी।

*Change of voice.*—द्विजेन विमुच्यते (कर्म्म कर्त्तरि)। त्वक् अहिं विमुञ्चति॥ ७९॥

BENGALI.—দ্বিজ গ্রামের বাহিরে নদীতীর ও অরণ্যাদি স্থানে পূর্ব্বোক্ত প্রণব ব্যাহৃতিত্রয় ও সাবিত্রী এই তিনটি সহস্রবার করিয়া জপ করিলে কঞ্চুক হইতে সর্পের ন্যায় মহাপাপ হইতে এক মাস মধ্যে বিমুক্ত হয়॥ ৭৯॥

ENGLISH.—Having repeated a thousand times this triad outside public resorts (in a forest or on the banks of a river), a twice-born is exonerated in a month from even a most serious sin, in the same way as a snake is freed from its slough. (79).

**एतयर्चाविसंयुक्तः काले च क्रियया स्वया॥**
**ब्रह्मक्षत्त्रियविड्योनिर्गर्हणां याति साधुषु॥ ८०॥**

PROSE.—एतया ऋचा काले च स्वया क्रियया विसंयुक्तः ब्रह्मक्षत्रियविड्योनिः साधुषु गर्हणां याति॥ ८०॥

KULLUKA.—एतयर्चेति। सन्ध्यायामन्यत्र समये वा ऋचैतया सावित्र्या वियुक्तः ब्राह्मणक्षत्रियवैश्यः स्वकीयया क्रियया च सायम्प्रातर्होमादिरूपया स्वकाले त्यक्तो

ब्राह्मणः क्षत्रियो वैश्योऽपि सज्जनेषु निन्दां गच्छति तस्मात् स्वकाले सावित्रीजपं स्वक्रियाञ्च न त्यजेत् ॥ ८० ॥

GRAMMAR.—1. एतया qualifies ऋचा। 2. काले अधिकरणकारकम्। 3. स्वया adj. 4. ऋचा कर्त्तरि तृतीया। ऋच्+क्विप्। 5. क्रियया कर्त्तरि तृतीया। कृ+श:। 6. विसंयुक्तः वि+सम्+युज+क्तः कर्म्मणि। 7. ब्रह्मक्षत्रियविड्योनिः ब्रह्मा च क्षत्रियश्च विट् च ब्रह्मक्षत्रियविशः इतरेतरद्वन्द्वः। ते योनयः उत्पत्तिस्थानं यस्य सः। 8. गर्हणाम् Acc. of याति गर्ह+युच्। 9. साधुषु आधारे सप्तमी।

*Change of voice.* – ब्रह्मक्षत्रिय-विड्योनिना गर्हणा याय्यते ॥ ८० ॥

BENGALI.—ব্রাহ্মণ ক্ষত্রিয় ও বৈশ্য এই গায়ত্রী এবং যথাকালে স্বকর্ত্তব্য হোমাদি ক্রিয়া না করিলে সাধুজনসমাজে নিন্দিত হয় ॥ ৮০ ॥

ENGLISH.—A Brahmin, or a Kshatriya or a Vaisya who has foregone this hymn and his proper sacraments at their due times, is put to disgrace among the good. (80).

ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ॥
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ८१ ॥

PROSE. – ओङ्कारपूर्व्विकाः तिस्रः अव्ययाः महाव्याहृतयः त्रिपदा सावित्री च एव ब्रह्मणः मुखं विज्ञेयम् ॥ ८१ ॥

KULLUKA.—ओङ्कारपूर्व्विकेति। ओङ्कार पूर्व्विकास्तिस्रो व्याहृतयः भूर्भुवः स्वरित्येता अक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः त्रिपदा च सावित्री ब्रह्मणो वेदस्य मुखमाद्यं तत्पूर्व्वकवेदाध्ययनारम्भात् अथवा ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतदध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तिः ॥ ८१ ॥

KULLUKA EXPLAINED.—अव्ययाः immutable. Why? Kulluka answers "अक्षरब्रह्मावाप्तिफलत्वेन।"

GRAMMAR.—1. ओङ्कारपूर्व्विकाः ओङ्कारः पूर्व्वः यासां ताः ओङ्कारपूर्व्विकाः। अकारस्य इकारः प्रत्ययस्थात्कात् पूर्व्वस्यात इदाप्यसुपः। 2. महाव्याहृतयः महत्यः व्याहृतयः महाव्याहृतयः। कर्म्मधारयः। आन् महतः समानाधिकरणजातीययोरिति आत्। 3. अव्ययाः न विद्यते व्ययो यासां ताः।

बहुव्रीहिः। 4. त्रिपदा त्रीणि पदानि यस्याः सा त्रिपदा। 5. ब्रह्मणः शेषे षष्ठी।

*Change of voice.*—महाव्याहृतिभिः...त्रिपदया सावित्र्याच मुखेन विज्ञेयेन भूयते ॥ ८१ ॥

BENGALI.—আদিতে ওঙ্কারযুক্ত ভূঃ ভুবঃ স্বঃ ব্রহ্মপ্রাপ্তির কারণীভূত এই তিনটি অবিনাশী মহাব্যাহৃতিসংজ্ঞক শব্দ এবং ত্রিপদযুক্তা গায়ত্রী বেদের আদি অথবা ব্রহ্মপ্রাপ্তির দ্বার বলিয়া জানিবে ॥ ৮১ ।

ENGLISH.—The three imperishable great words (*Bhuh* preceded *O m*, and the three-footed *Gayatri* are to be known as the beginning or the mouth of the *Vedas*. (81).

## योऽधीतेऽहन्यहन्येतां त्रीणिवर्षाण्यतन्द्रितः।
## सब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥ ८२ ॥

PROSE.—यः अहनि अहनि अतन्द्रितः एतां त्रीणि वर्षाणि अधीते सः परं ब्रह्म अभ्येति ( च ) वायुभूतः खमूर्त्तिमान् ( भवति ) ॥ ८२ ॥

KULLUKA.—अतएवाह योऽधीत इति। यः प्रत्यहमनलसः सन् सावित्रीं प्रणवव्याहृतियुक्तां वर्षत्रयमधीते स परं ब्रह्माभिमुख्येन गच्छति स वायुभूतो वायुरिव कामचारी जायते खं ब्रह्मतदेवास्य मूर्त्तिरिति खमूर्त्तिमान् भवति शरीरस्यापि नाशात् ब्रह्मैव सम्पद्यते ॥ ८२ ॥

GRAMMAR.—1. अधीते – अधि – इङ् लट् ते। अध्यैष्ट अध्यगीष्ट। 2. अहनि अहनि वीप्सायां द्विरुक्तिः अधिकरणे सप्तमी। 3. वर्षाणि कालाध्वनोरत्यन्तसंयोगे द्वितीया। 4. न तन्द्रितः अतन्द्रितः। तन्द्रा + इतच्। or तन्द्र + क्तः कर्त्तरि। 5. सः Nom. to the verb अभ्येति। 6. ब्रह्म कर्म्मणि द्वितीया। 7. परम् qualifies ब्रह्म। 8. अभ्येति governs ब्रह्म अभि – इ + लट् ति। 9. न वायुः वायुः सम्पन्नः वायुभूतः कुगतिप्रादयः इति समासः। 10. खस्य मूर्त्तिः खमूर्त्तिः षष्ठी समासः। खमूर्त्ति + मतुप्।

*Change of voice.*—येन एषा अधीयते तेन परं ब्रह्म अभीयते वायुभूतेन खमूर्त्तिमता भूयते ॥ ८२ ॥

BENGALI.—যিনি প্রতিদিন অনলস হইয়া তিন বৎসর প্রণব ও ব্যাহৃতিযুক্ত ত্রিপদা

গায়ত্রী জপ করেন তিনি ব্রহ্মপ্রাপ্তির অভিমুখে গমন করেন, বায়ুর ন্যায় কামচারী হন, এবং মৃত্যুর পর ব্রহ্মের ন্যায় মূর্তিবিশিষ্ট হন অর্থাৎ ব্রহ্ম হইয়া যান। ৮২।

ENGLISH.—He who reads this hymn (*Gayatri*) day by day for three years without being careless, attains to the Supreme *Brahma* with an etherial body, becoming like air, (82).

एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥ ८३ ॥

PROSE.—एकाक्षरं परं ब्रह्म (भवति), प्राणायामाः परं तपः (भवन्ति), सावित्र्याः परं तु (मन्त्रः) नास्ति, सत्यं मौनात् विशिष्यते ॥ ८३ ॥

KULLUKA.—एकाक्षरमिति। एकाक्षरमोङ्कारः परं ब्रह्म परब्रह्मावाप्तिहेतुत्वात्। ओङ्कारस्य जपेन तदर्थस्य च परब्रह्मणो भावनया तदवाप्तेः। प्राणायामाः सप्रणवसव्याहृतिसशिरस्कगायत्रीभिः कृताश्चान्द्रायणादिभ्योऽपि परन्तपः प्राणायामा इति बहुवचननिर्देशात् त्रयोऽवश्यं कर्त्तव्या इत्युक्तं सावित्र्याः प्रकृष्टमन्यन्मन्त्रजातं नास्ति मौनादपि सत्यवाग्विशिष्यते। एषां चतुर्णां स्तुत्या चत्वार्य्येतान्युपासनीयानीति विधि कल्प्यते। धरणीधरेण तु एकाक्षरपरंब्रह्म प्राणायामपरन्तप इति पठितं व्याख्यातञ्च एकाक्षरं परं यस्य तदेकाक्षरपरम् एवं प्राणायामपरमिति। मेधातिथि प्रभृतिभिर्वृद्धैर लिखितं यतः। लिखनपाठान्तरं तत्र स्वतन्त्रो धरणीधरः॥ ८३ ॥

GRAMMAR.—1. एकाक्षरम् एकमक्षरं यत्र तत् एकाक्षरम् बहुव्रीहिः। 2. परम् qualifies ब्रह्म। 3. ब्रह्म विधेय विशेषण of एकाक्षरम्। 4. प्राणायामाः same case with तपः। 5. सावित्र्याः पञ्चमी विभक्ति इति पञ्चमी। 6. परम् Adj. used as noun, agrees with the verb अस्ति। 7. मौनात् पूर्ववत् पञ्चमी। 8. सत्यम् कर्म of विशिष्यते in the passive voice 9. विशिष्यते—वि शिष+कर्मणि लट्। शिनष्टि अशिषत्। कर्मणि शिष्यते।

*Change of voice.*—एकाक्षरेण परेण ब्रह्मणा भूयते। प्राणायामैः परेण तपसा भूयते, सावित्र्याः परेण न भूयते मौनात् सत्यं विशिषन्ति ॥ ८३ ॥

BENGALI.—একাক্ষর অর্থাৎ প্রণব পরম ব্রহ্ম, কেননা প্রণব ব্রহ্মপ্রাপ্তির হেতু, প্রাণায়ামত্রয় চান্দ্রায়ণাদি তপস্যাতুল্য, গায়ত্রী হইতে শ্রেষ্ঠ কোন মন্ত্র নাই, মৌন হইতে সত্য বাক্য উৎকৃষ্ট। অতএব নিয়ত এই চারিটির উপাসনা করিবে। ৮৩।

ENGLISH.—The single syllable (*Om*) is the supreme Brahma;

suppressions of breath are the highest penance; but there is nothing superior to *Gayatri*; truth is better than silence. (83).

**क्षरन्ति सर्व्वा वैदिक्यो जुहोति यजति क्रियाः।**
**अक्षरन्त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः॥ ८४॥**

PROSE.—सर्व्वाः वैदिक्यः जुहोति यजति क्रियाः क्षरन्ति अक्षरम् तु अक्षरं प्रजापतिः ब्रह्म च ज्ञेयम्॥ ८४॥

KULLUKA.—क्षरन्तीति सर्व्वा वेदविहिता होमयागादिरूपाः क्रियाः स्वरूपतः फलतश्च विनश्यन्ति अक्षरन्तु प्रणवरूपमक्षयं ब्रह्मप्राप्तिहेतुत्वात् फलद्वारेणाक्षरं ब्रह्मोभावस्याविनाशात्। कथमस्य ब्रह्मप्राप्तिहेतुत्वमत आह ब्रह्म चैवेति। च शब्दो हेतौ यस्मात् प्रजानामधिपतिर्यत् ब्रह्म तद्वाचकमोङ्कारः स्वरूपतो ब्रह्मप्रतिपादकत्वेन चास्य ब्रह्मत्वम् उभयथापि ब्रह्मत्वेन प्रतिपादकत्वेन वाचमुपासितो जपकाले मोक्षहेतुत्वेन दर्शितः॥ ८४॥

GRAMMAR.—1. वैदिक्यः वेद+ठक्+ङीप्। qualifies जुहोति यजति क्रियाः। 2. जुहोतिश्च यजतिश्च जुहोतियजती तयोः क्रियाः जुहोतियजतिक्रियाः। अथवा जुहोति यजत्यादयः क्रियाः ताः मध्यपदस्य लोपः। क्रियायां श्तिपा निर्द्देशः। 3. क्षरन्ति ध्वंसन्ते। 4. अक्षरम् प्रणवः Acc. of ज्ञेयम्। न क्षरम् अक्षरम्। 5. अक्षरम् qualifies अक्षरम्। न विद्यते क्षयो यस्य तत् बहुव्रीहिः। 6. ज्ञेयम्—ज्ञा+कर्म्मणि यः। अज्ञासीत्। 7. प्रजापतिः प्रजानां पतिः qualifies ब्रह्म। 8. ब्रह्म विधेय विशेषणम् of अक्षरम्।

*Change of voice*....क्रियाभिः क्षर्य्यते। अक्षरेण अक्षरेण प्रजापतिना ब्रह्मणा ज्ञेयेन भूयते॥ ८४॥

BENGALI.—বেদবিহিত হোম ও যাগাদি ক্রিয়া মাত্রই ক্ষয় প্রাপ্ত হয়, কিন্তু ওঙ্কারকে অক্ষয় এবং প্রজাদিগের অধিপতি পরব্রহ্ম বলিয়া জানিবে॥ ৮৪॥

ENGLISH.—All the Vedic rites—"oblational and sacrificial" decay; but the syllable *Om* is imperishable, and is to be known as *Brahma*, the lord of creation. (84).

**विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।**
**उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥ ८५॥**

PROSE.—विधियज्ञात् जपयज्ञः दशभिः गुणैः विशिष्टः, उपांशुः शतगुणः स्यात्, मानसः साहस्रः स्यात् ॥ ८५ ॥

KULLUKA.—विधियज्ञादिति। विधिविषयो यज्ञो विधियज्ञो दर्शपौर्णमासादिः तस्मात् पाकृतानां प्रणवादीनां जपयज्ञो दशगुणाधिकः सोऽप्युपांशुश्चेदनुष्ठितः तदा शतगुणाधिकः, यत् समीपस्थोऽपि परो न शृणोति तदुपांशुः। मानसस्तु जपः सहस्रगुणाधिकः यत्र जिह्वोष्ठं मनागपि न चलति स मानसः ॥ ८५ ॥

GRAMMAR.—1. विधियज्ञात् विधेयज्ञः विधियज्ञः। यजेत इत्यादि विधिना यो यागः प्राप्यते स विधियज्ञः। तस्मात्। पञ्चमी विभक्ते इति विभागे पञ्चमी। वि-धा+कि:। यज+नः। यजति यजते अयष्ट अयाक्षीत्। 2. जपयज्ञः जप एव यज्ञः जपयज्ञः कर्म्मधारयः। जपन् यजेत इति विधिना यज्ञत्वेन न प्राप्तः किन्तु जपेत् इति विधिना। जपस्य यज्ञत्वं उपचारात्। 3. उपांशुः qualifies जपयज्ञः। 4. शतगुणः शतं गुणाः यस्मिन् स शतगुणः। 5. मानसः मनस्+अण् qualifies जपयज्ञः। 6. साहस्रः सहस्र+अण्। सहस्रसम्बन्धी सहस्रगुणः इत्यर्थः। 7. स्मृतः-स्मृ+क्तः कर्म्मणि।

*Change of voice.*—जपयज्ञेन विशिष्टेन भूयते। उपांशुना शतगुणेन भूयेत। मानसेन साहस्रेण स्मृतेन भूयते ॥ ८५ ॥

BENGALI.—দর্শ পৌর্ণমাসাদি যজ্ঞ হইতে প্রণবজপরূপ যজ্ঞ দশগুণ শ্রেষ্ঠ, জপ নির্জ্জনে অর্থাৎ নিকটবর্ত্তী লোকেও না শুনিতে পারে এমন ভাবে অনুষ্ঠিত হইলে শতগুণ ফলপ্রদ হয়, মানস অর্থাৎ যে জপে জিহ্বা এবং ওষ্ঠ কিঞ্চিন্মাত্র চলিত না হয় এমন জপ সহস্রগুণ ফলপ্রদ ॥ ৮৫ ॥

ENGLISH.—The sacrifice of muttering (the syllable *Om* and *Gayatri* is ten times superior to the sacrifice enjoined (by the *sastras*); if it is done in secret (being inaudible), it is hundred times superior; but if it is mental, it is thousand times superior. (85).

**ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।**
**सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥ ८६ ॥**

PROSE.—विधियज्ञसमन्विताः ये चत्वारः पाकयज्ञाः ते सर्व्वे जपयज्ञस्य षोड़शीं कलां न अर्हन्ति ॥ ८६ ॥

KULLUKA.—ये पाकयज्ञा इति। ब्रह्मयज्ञादन्ये ये पञ्चमहायज्ञान्तर्गता वैश्वदेवहोमबलिकर्म्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाः विधियज्ञा, दर्शपौर्ण-

माध्यादय: तै: सहिता जपयज्ञस्य षोड़शीमपि कलां न प्राप्नुवन्ति जपयज्ञस्य षोड़शांशेनापि न समा इत्यर्थ: ॥ ८६ ॥

GRAMMAR.—1. पाकयज्ञा: पाकसम्बन्धिनो यज्ञा: पाकयज्ञा:। 2. विधियज्ञसमन्विता: विधेर्यज्ञा: विधियज्ञा: तै: समन्विता: विधियज्ञसमन्विता: qualifies पाकयज्ञा:। 3. जपयज्ञस्य शेषे षष्ठी। 4. षोड़शीम् qualifies कलाम् षड़धिका दश षोड़श षोड़शानां पूरण: षोड़श: स्त्रियाम् षोड़शी ताम्। 5. कलाम् Acc. of अर्हन्ति।

*Change of voice.*—विधियज्ञसमन्वितै: यै: चतुर्भि: पाकयज्ञै: भूयते, तै: सर्व्वै: षोड़शी कला न अर्ह्यते ॥ ८६ ॥

BENGALI.—দর্শ পৌর্ণমাসাদি বিধিযজ্ঞ সমন্বিত যে চারিটি পাকযজ্ঞ আছে, তাহারা সকলে মিলিয়াও জপযজ্ঞের এক কলার সমান হয় না॥ ৮৬॥

ENGLISH.—The four household sacrifices together with the sacrifices enjoined by the sastras, all those are not wo... the sixteenth part of the sacrifice of muttering. (86).

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशय:।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ ८७ ॥

PROSE.—ब्राह्मण: जप्येन एव तु संसिध्येत् अत्र संशय: न (अस्ति), अन्यत् कुर्य्यात् न वा कुर्य्यात् मैत्र: ब्राह्मण: उच्यते ॥ ८७॥

KULLUKA.—जप्येनैवेति। ब्राह्मणो जप्येनैव नि:सन्देहां सिद्धिं लभते मोक्षप्राप्तियोग्यो भवति। अन्यद्वैदिकं यागादिकं करोतु न करोतु वा यस्मान्मैत्रो ब्राह्मण: ब्रह्मणि लीयते इत्यागमेपूच्यते। मित्रमेव मैत्र: स्वार्थेऽण् यागादिषु पशुबीजादिवधान्न सर्व्वप्राणिप्रियता सम्भवति तस्माद्यागादिना विनापि प्रणवादिजपनिष्ठो निस्तरतीति जपप्रशंसा नतु यागादीनां निषेध: तेषामपि शास्त्रीयत्वात् ॥ ८७ ॥

ELUCIDATION.—"मैत्र: ब्राह्मण: उच्यते"=ब्राह्मण: यदि मैत्र: मित्रं सर्व्वप्राणिनां भवति, तर्हि स ब्राह्मण: अर्थात् ब्रह्मणि लयार्ह: उच्यते। यज्ञपरो ब्राह्मण: मैत्र: न भवति यज्ञे तु शस्यबीजानां पशूनां च हननात्; तस्मात् याज्ञिकोऽपि ब्राह्मण: न ब्रह्मणि लयार्ह: भवति, भवति तु कालान्तरे। योऽपि ब्राह्मणो जपयज्ञ' एव अनुतिष्ठति तत्र हिंसाभावात् स मैत्रो भवति एवं ब्रह्मणि लयार्हो भवति। तस्मात् विधि-

यस्मात् जपयज्ञः श्रेष्ठः। किन्तु विधियज्ञस्य निषेधो न भवति तस्यापि शास्त्रेण विधीयमानत्वात्।

GRAMMAR.—1. जप्येन करणे तृतीया। जप+य। भावे प्रत्ययः। जपेन इत्यर्थः। 2. संसिध्येत् सम् सिध+यात्। असिधत्। ऊदित् पाठस्य प्रामादिकत्वात्। 3. ब्रह्मन्+अण् ब्राह्मणः जात्यर्थे। 4 संशयः—सम+शी+अच्। शीते अस्मिन्निष्ट। 5. कुर्य्यात्—कृ+यात्। 6. मैत्रः मित्रमेव मैत्रः स्वार्थे अण् लिङ्गव्यत्ययश्च। 7. उच्यते वच+ते कर्म्मणि।

*Change of voice.*—ब्राह्मणेन संसिध्येत। संशयेन न भूयते। अन्यत् क्रियेत...मैत्रं ब्राह्मणं वक्ति॥ ८७॥

BENGALI.—ব্রাহ্মণ কেবল জপ দ্বারাই সিদ্ধিলাভ করিতে পারেন তাহাতে সংশয় নাই; ব্রাহ্মণ বেদোক্ত অন্য কোন যাগ করুক আর নাই করুক, হিংসারহিত জপকর্ম অনুষ্ঠান বশত জগতের মিত্র হওয়াতে পরব্রহ্মে লীন হইতে পারে, এরূপ বেদে কথিত আছে॥ ৮৭॥

ENGLISH.—A Brahmin attains to final success by muttering (the syllable *Om* a...) ; there is no doubt about it ; though he may do or do not anything else (suchas the Vedic rites) a Brahmin is called *maitra* or friendly to all...(87).

इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम्॥ ८८॥

PROSE.—विद्वान् यन्ता वाजिनामिव अपहारिषु विषयेषु विचरतां इन्द्रियाणां संयमे यत्नं आतिष्ठेत्॥ ८८॥

KULLUKA.—इदानीं सर्व्ववर्णानुष्ठेयं सकलपुरुषार्थोपयुक्तमिन्द्रियसंयममाह इन्द्रियाणामिति। इन्द्रियाणां विषयेष्वपहरणशीलेषु वर्त्तमानानां अस्थिरत्वादिविषयदोषान् जानन् संयमे यत्नं कुर्य्यात् सारथिरिव रथनियुक्तानामश्वानाम्॥ ८८॥

KULLUKA EXPLAINED.—"अस्थिरत्वादिविषयदोषान्" शब्दस्पर्शरूपरसगन्धादिविषया उच्यन्ते। ते हि विनाशशीला इति तेषां दोषः तम् अन्यांश्च विमोहनत्वादीन् जानन्। विद्वान्=ज्ञानी।

GRAMMAR.—1. अपहारिषु अप—हृ+णिनिः। 2. विषयेषु वि—सि+अच् विषयः। अधिकरणे सप्तमी। 3. विचरताम्—वि—चर+शतृ।

qualifies इन्द्रियाणाम्। 4. इन्द्रियाणाम् कर्तृकर्मणोः कृतीति कर्मणि षष्ठी in connection with संयमे। 5. वाजिनाम् पूर्व्ववत् षष्ठी। 6. यत्नं—यम्+तृच्। यच्छति अयंसीत्।

*Change of voice.*—यत्नः आस्थीयेत ॥ ८८ ॥

BENGALI.—সারথি যেরূপ রথাশ্বগণকে সংযত রাখে, সেইরূপ বিদ্বান্ ব্যক্তি মনোহরণশীল শব্দস্পর্শাদি ভোগ্য বিষয়সমূহে বিচরণকারী ইন্দ্রিয়গণকে সংযত রাখিবার জন্য যত্ন করিবেন ॥ ৮৮ ॥

ENGLISH.—A wise man should, like the driver of horses, take care to control his senses running after captivating sensual objects. (88).

**एकादशेन्द्रियाण्याहुर्यानि पूर्व्वं मनीषिणः।**

**तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥ ८९ ॥**

PROSE—पूर्व्वं मनीषिणः यानि एकादश इन्द्रियाणि आहुः तानि यथावत् अनुपूर्व्वशः सम्यक् प्रवक्ष्यामि ॥ ८९ ॥

KULLUKA.—एकादशेति। पूर्व्वपण्डिता यान्येकादशेन्द्रियाण्याहुस्तान्यर्व्वाचां शिक्षार्थं सर्व्वाणि कर्म्मतो नामतश्च क्रमाद्वक्ष्यामि ॥ ८९ ॥

KULLUKA EXPLAINED.—"अर्व्वाचां शिक्षार्थम्" For teaching the gnorant.

GRAMMAR.—1. एकादश एकाधिकानि दश एकादश। 2. इन्द्रियाणि Acc. of आहुः। 3. पूर्व्वं qualifies मनीषिणः। 4. मनीषिणः Nom. verb आहुः। मनीषा—मनसः ईषा मनीषा। शकन्ध्वादित्वात् साधुः। मनीषा+इनि। 5. प्रवक्ष्यामि—प्र+वच्+स्यामि लृट्। 6. यथावत् यथा+वति। 7. अनुपूर्व्वशः—अनुपूर्व्व+शस्।

*Change of voice.*—मनीषिभिः यानि इन्द्रियाणि उच्यन्ते। तानि मया प्रवक्ष्यन्ते ॥ ८९ ॥

BENGALI.—পূর্ব্বপণ্ডিতগণ যে একাদশ ইন্দ্রিয়ের কথা বলিয়া গিয়াছেন, যথানিয়মে ক্রম অনুসারে সেই গুলির ইন্দ্রিয় নাম বলিতেছি। ৮৯।

ENGLISH.—I will tell rightly in due orher those eleven senses which former wise men have told. (89).

**श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।**
**पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥ ९० ॥**

PROSE.—श्रोत्रम् त्वक् चक्षुषी जिह्वा पञ्चमी नासिका च एव पायूपस्थं हस्त-पादं च वाक् दशमी स्मृता ॥ ९० ॥

KULLUKA.—श्रोत्रमिति। तेषु एकादशसु श्रोत्रादीनि दशैतानि बहिरिन्द्रियाणि नामतो निर्द्दिष्टानि। पायूपस्थं हस्तपादमिति द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानामिति प्राण्यङ्ग-द्वन्द्वत्वादेकवद्भावः ॥ ९० ॥

GRAMMAR.—1. श्रोत्रम श्रु+ष्ट्रन्। श्रूयतेऽनेन इति। 2. त्वक् त्वच+क्विप्। त्वचति व्याप्नोतीति त्वक्। 3. चक्षुषी। चक्षुष्+औ। चक्ष्+करणे उषिः। 4. जिह्वा लेढीति जिह्वा। लिह्+व। 5. पञ्चमी पञ्चानां पूरणी पञ्चम+ङीप्। 6. नासिका नास्+ण्वुल्। नासते शब्दायते इति नासिका। 7. पायूपस्थम् पा+यु पायुर्गुदम्। उपस्थ उप+स्था+कः। पायुश्च उपस्थश्च पायुपस्थम्। प्राण्यङ्गत्वात् समाहारद्वन्द्वः। 8. हस्तपादम् हस्तौच पादौच समाहारे एकवत् प्राण्यङ्गत्वात्। 9. दशमी qualifies वाक्। 10. वाक् वच्+क्विप्। Verb भवति understood.

*Change of voice.*—श्रोत्रेण त्वचा चक्षुर्भ्यां पञ्चम्या नासिकया पायूपस्थेन हस्तपादेन दशम्या वाचा भूयते ॥ ९० ॥

BENGALI.—সেই একাদশ ইন্দ্রিয়মধ্যে কর্ণ এবং চক্ষুঃ জিহ্বা ও পঞ্চম নাসিকা, এবং মলদ্বার, জননেন্দ্রিয়, হস্ত, পাদ ও দশম ইন্দ্রিয় বাক্, সমস্ত এই দশটি বহিরিন্দ্রিয়ের নাম বলা হইল ॥ ৯০ ॥

ENGLISH.—Ears, skin, the two eyes, the tongue and the nose, (as) fifth the anus and the generative organ the hands and the feet; and the organ of speech is considered as the tenth. (90).

**बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्व्वशः।**
**कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥ ९१ ॥**

PROSE.—एषां (मध्ये) अनुपूर्व्वशः श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि, एषां च पाय्वादीनि पञ्च कर्म्मेन्द्रियाणि प्रचक्षते ॥ ९१ ॥

KULLUKA.—बुद्धीन्द्रियाणीति। एषां दशानां मध्ये श्रोत्रादीनि पञ्च कर्म्मोत्पत्ति

बुद्धेः करणत्वात् बुद्धीन्द्रियाणि पाय्वादीनि चोत्सर्गादिकर्मकरणत्वात् कर्म्मेन्द्रियाणि तद्विदो वदन्ति ॥ ९१ ॥

ELUCIDATION.—Five senses *i.e.* the senses of hearing, touch, sight, taste and smelling, are called the organs of knowledge; because we acquire the knowledge of external things through them. The organs of excretion, hands, feet and the organ of speech, are called the organs of action.

GRAMMAR.—1. एषाम् निर्द्धारणे षष्ठी। 2. श्रोत्रादीनि श्रोत्रं आदिः येषां तानि बहुव्रीहिः qualifies पञ्च। 3. बुद्धीन्द्रियाणि बुद्धेः इन्द्रियाणि बुद्धीन्द्रियाणि षष्ठीसमासः। विधेयविशेषणं of पञ्च। 4. पायुरादि येषां तानि पाय्वादीनि qualifies पञ्च। 5. कर्म्मेन्द्रियाणि कर्म्मणः इन्द्रियाणि षष्ठीसमासः। विधेयम् of पञ्च। 6. प्रचक्षते agreeing with its nominatve पण्डिताः understood. प्र – चक्ष् लट् अन्ते।

*Change of voice*....कर्म्मेन्द्रियाणि ख्यायन्ते पण्डितैः ॥ ९१ ॥

BENGALI.—এই দশটির মধ্যে যথাক্রমে শ্রোত্র প্রভৃতি পাঁচটিকে বুদ্ধীন্দ্রিয় এবং ঐ দশটি মধ্যে পায়ু প্রভৃতি পাঁচটিকে কর্ম্মেন্দ্রিয় বলে ॥ ৯১ ॥

ENGLISH.—Of these the five in order beginning with "ears" they call the organs of knowledge; and the (other) five of these beginning with the "anus" they call the motor senses or organs of action. (91).

**एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।**
**यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ ॥ ९२ ॥**

PROSE.—मनः एकादशं (इन्द्रियं) ज्ञेयम्, (तत्) स्वगुणेन उभयात्मकं ज्ञेयम्, यस्मिन् जिते एतौ पञ्चकौ गणौ जितौ भवतः ॥ ९२ ॥

KULLUKA.—एकादशमिति। एकादशसङ्ख्यापूरकञ्च मनोरूपमन्तरिन्द्रियं ज्ञातव्यं स्वगुणेन सङ्कल्परूपेण उभयरूपेन्द्रियगणप्रवर्त्तकस्वरूपम् अतएव यस्मिन् मनसि जिते उभावपि पञ्चकौ बुद्धीन्द्रियकर्म्मेन्द्रियगणौ जितौ भवतः। पञ्चकाविति तदस्य परिमाणमित्यनुवृत्तौ संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति पञ्चसंख्यापरिमितसङ्घार्थे कः ॥ ९२ ॥

KULLUKA EXPLAINED.—"स्वगुणेन सङ्कल्परूपेण"। The natural property of mind is सङ्कल्प or desire which controls the senses of knowledge as well as those of action.

GRAMMAR.—1. मनः Acc. of ज्ञेयम्। 2. एकादशम् एकादशानां पूरणम् एकादशम् एकादश+डट्। विशे॰ of मनः 3. ज्ञेयम् governs मनः। ज्ञा+यः। 4. स्वगुणेन करणे तृतीया। 5. उभयात्मकम् उभयं आत्मा यस्य तत् बहुब्रीहिः समासे उभयशब्दस्य उभयादेशः। 6. यस्मिन् qualifies मनसि। 7. जिते यस्य च भावेन भावलक्षणं इति सप्तमी उभयत्र। 8. पञ्चकौ qualifies गणौ। पञ्चानां सङ्घः पञ्चसंख्यापरिमितसंङ्घः। पञ्चन्+क। 9. गणौ agreeing with भवतः। 10. जितौ qualifies गणौ।

*Change of voice.*—मनसा एकादशेन ज्ञेयेन भूयते। एताभ्यां पञ्चकाभ्यां गणाभ्यां जिताभ्यां भूयते॥ ९२॥

BENGALI.—মনকে একাদশ ইন্দ্রিয় জানিবে, উহা স্বকীয় সঙ্কল্পরূপ গুণ দ্বারা বুদ্ধীন্দ্রিয় ও কর্ম্মেন্দ্রিয় উভয়েরই চালক, ঐ মনকে জয় করিতে পারিলে উভয়বিধ পঞ্চ পঞ্চ ইন্দ্রিয় সমষ্টি পরাজিত হয়॥ ৯২॥

ENGLISH.—Mind is to be known as the eleventh sense, which by its own property is of the nature of both (knowledge giving and motor); which being controlled those two sets of five are also controlled. (92).

**इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।**
**संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ ९३॥**

PROSE.—(पुरुषः) इन्द्रियाणां प्रसङ्गेन असंशयं दोषं ऋच्छति, तान्येव सं संनियम्य ततः सिद्धिं नियच्छति॥९३॥

KULLUKA.—मनोधर्मसङ्कल्पमूलत्वादिन्द्रियाणां प्रायेण प्रवृत्तेः किमर्थमिन्द्रियनिग्रहः कर्त्तव्य इत्यत आह इन्द्रियाणामिति। यस्मादिन्द्रियाणां विषयेषु प्रसक्त्या दृष्टादृष्टञ्च दोषं निःसन्देहं प्राप्नोति तान्येव पुनरिन्द्रियाणि सम्यक् नियम्य सिद्धिंमोक्षादिपुरुषार्थयोग्यतारूपां लभते तस्मादिन्द्रियसंयमं कुर्य्यादिति शेषः॥ ९३॥

GAMMAR.—1. इन्द्रियाणाम् कर्त्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी in connection with प्रसङ्गेन। 2. प्रसङ्गेन—हेतौ तृतीया। प्र—सन्ज+घञ्।

3. न विद्यते संशयो यस्मिन् कर्म्मणि तत् यथास्यात् तथा। 4. ऋच्छति governs दोषम्: ऋ+लट्ति। ऋच्छति भार आर्च्चीत् भरिष्यते। 5. संनियम्य – सम् – नि – यम् ल्यप् governs तानि। 6. सिद्धिम् कर्म्मणि द्वितीया। 7. नियच्छति नि – यम् + लट् ति।

*Change of voice.*—दोषः भर्य्यते। सिद्धिः नियम्यते ॥९३॥

BENGALI.—মনুষ্য ইন্দ্রিয়ে আসক্ত হইলেই ইহলোকে ও পরলোকে অনিষ্ট, ভোগ করে, এবং সেই ইন্দ্রিয়গণকে সংযত করিতে পারিলেই পরে ধর্ম্ম, অর্থ, কাম ও মোক্ষ লাভ করে॥ ৯৩॥

ENGLISH.—Surely does a man incur fault by giving indulgence to the senses; but by controll ing them he can have success at his command. (93).

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ९४ ॥

PROSE.–कामः कामानां उपभोगेन न जातु शाम्यति (किन्तु) हविषा कृष्णवर्त्मेव भूय एव अभिवर्द्धते ॥ ९४ ॥

KULLUKA.—किमिन्द्रियसंयमेन विषयोपभोगादेव लब्धकामो निवर्त्स्यतीत्याशङ्क्याह न जात्विति। न कदाचित् कामोऽभिलाषः काम्यन्त इति कामा विषयाः तेषामुपभोगेन निवर्त्तते किन्तु घृतेनाग्निरिवाधिकाधिकमेव वर्द्धते प्राप्तभोगस्यापि प्रतिदिनं तदधिकभोगवाञ्छादर्शनात्। अतएव विष्णुपुराणे ययातिवाक्यम्। यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्य्याप्तं तदित्यतितृष्णं त्यजेत्। तथा पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः तथाप्यनुदिनं तृष्णा यत्स्वेव हि जायते ॥ ९४ ॥

ELUCIDATION.—There is a false theory current among the Tantriks that desire is extinguished by its fulfilment. That theory is attacked here. कामानाम् = विषयाणाम् = भोग्यवस्तूनाम्।

GRAMMAR.—1. कामः कम+घञ्। Verb कामयते अचीकमत अचकमत चकमे। 2. शाम्यति शम लट्ति अशमत्। 3. कामानाम् कर्त्तृकर्म्मणोः कृतीति कर्म्मणि षष्ठी in connection with कृदन्त word उपभोगेन। 4. उपभोगेन करणे तृतीया। उप – भुज + घञ्। 5. हविषा करणे तृतीया। 6. कृष्णवर्त्मेव कृष्णं कृष्णवर्णं वर्त्म पन्थाः यस्य स बहुव्रीहिः।

Then इवेन समास: विभक्त्यलोपश्च। 7. बहु+ईयसुन्=भूय: Adv. 8. अभिवर्द्धते—वृध्+लट्ते। वद्दर्घं अवर्द्धिष्ट।

*Change of voice.*—कामेन शम्यते। कृष्णवर्त्मनेव वृध्यते॥ ९४॥

BENGALI.—বিষয়ভোগদ্বারা কখনও কামনা নিবৃত্ত হয় না, বরং বিষয়ভোগ দ্বারা কামনা ঘৃতসিক্ত অগ্নির ন্যায় অধিকতর বৃদ্ধি পায়। ৯৪।

ENGLISH.—Never does desire become extinguished or stopped by the enjoyment of sensual objects; it rather gets more and more inflamed like fire (which makes its path dark) by clarified butter (poured into it). (94).

यश्चैतान्प्राप्नुयात् सर्व्वान्यश्चैतान्केवलांस्त्यजेत्।
प्रापणात् सर्व्वकामाणां परित्यागो विशिष्यते॥ ९५॥

PROSE.—यश्च एतान् सर्व्वान् प्राप्नुयात् यश्च केवलान् तान् त्यजेत्, सर्व्वकामानां प्रापणात् परित्याग: विशिष्यते॥ ९५॥

KULLUKA.—यश्चैता'नति। य एतान् सर्व्वान् विषयान् प्राप्नुयात् यश्चैतान् कामान् उपेक्षते तयोर्विषयोपेक्षक: श्रेयान् तस्मात् सर्व्वकामप्राप्तेस्तदुपेक्षा प्रशस्या तथाहि विषयलोलुपस्य तत्साधनाद्युत्पादने कष्टसम्भवो विपत्तौ च क्लेशातिशय: नतु विषयाविरतस्य॥ ९५॥

KULLUKA EXPLAINED—"तयोर्विषयोपेक्षक: श्रेयान्।" This is the meaning of "सर्व्वकामानां प्रापणात् परित्यागो विशिष्यते"। The sentence is not strictly grammatical, since य: य: of the first part is not completed by स: स: or तयो:।

GRAMMAR.—1. य: Nom. verb प्राप्नुयात्। 2. प्र-आप्+यात् प्राप्नुयात्। प्रापत्। 3. सर्व्वान् governed by प्राप्नुयात् कर्म्मणि द्वितीया। 4. य: Nom. verb त्यजेत्। 5. त्यजेत् त्यज+यात्; अत्याक्षीत्। 6. केवलान्=कृत्स्नान्=समस्तान्। केवल: कृत्स्न एकश्च इत्यमर: qualifies तान्। 7. तान् Acc. of त्यजेत्। 8. य: य:-यत्तदोर्नित्यसम्बन्धात् तच्छब्दस्यापेक्षा स च तच्छब्दो न व्यवहृत: तच्छब्दस्यार्थस्तु प्रापणात् इत्यादि वाक्येन उपन्यस्त इति। 9. प्रापणात् पञ्चमी विभक्ते इति विभागे पञ्चमी प्र-आप्+ल्युट्। सर्व्वकामानाम् कर्त्तृकर्म्मणो: कृतीति षष्ठी। सर्व्वे च ते कामाश्च इति कर्म्मधारय:। 10. परित्याग: उक्तकर्म्म of विशिष्यते। 11. विशिष्यते वि-शिष्+कर्म्मणि लट्। अशिषत्।

*Change of voice*—येन एते सर्व्वे प्राप्येरन् येन ते त्यज्येरन् परित्यागं विशिष्टं ॥ ९५ ॥

BENGALI.—যিনি সমস্ত কাম্য বিষয় লাভ করেন, আর যিনি সমস্ত কাম্য বিষয় ত্যাগ করেন, এই উভয়ের মধ্যে পরিত্যাগকারীই শ্রেষ্ঠ ( কেননা বিষয় প্রাপ্তির উপায় সংগ্রহে এবং প্রাপ্তবিষয় নাশে অত্যন্ত কষ্ট হয়, বিষয়রসবিহীন ব্যক্তির সেরূপ ক্লেশ হয় না ) ॥ ৯৫ ॥

ENGLISH.—He who attains all these desires; and he who relinquishes them all,—(in reference to these two) the renunciation of all desires is better than their attainment. (95).

## न तथैतानि शक्यन्ते संनियन्तुमसेवया।
## विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥ ९६ ॥

PROSE.—विषयेषु प्रजुष्टानि एतानि असेवया तथा संनियन्तुं न शक्यन्ते नित्यशः ज्ञानेन यथा ( संनियन्तुं शक्यन्ते ) ॥ ९६ ॥

KULLUKA.—इन्द्रियसंयमोपायमाह न तथेति। एतानीन्द्रियाणि विषयेषु प्रसक्तानि तथा नासेवया विषयसन्निधिवर्ज्जनरूपया नियन्तुं शक्यन्ते दुर्निवारत्वात् यथा सर्व्वदा विषयाणां अनित्यादिदोषज्ञानेन शरीरस्य चास्थिस्थूणमित्यादि वक्ष्यमाणदोषचिन्तनेन तस्माद्विषयदोषज्ञानादिना बहिरिन्द्रियाणि मनश्च नियच्छेत् ॥ ९६ ॥

GRAMMAR.—1. विषयेषु विषयाधारे सप्तमी। 2. प्रजुष्टानि qualifies एतानि। प्र—जुष+क्त। 3. एतानि उक्ते कर्म्मणि प्रथमा। Governed by नियन्तुम् and शक्यन्ते। 4. शक्यन्ते शक् कर्म्मणि लट् अन्ते। शक्नोति शक्यन्ते। अशकत्। 5. असेवया करणे तृतीया। न सेवा असेवा नञ् समासः। नञः अभावः। सेव्+अ। सेवते असेविष्ट। 6. तथा अव्ययम् तद्+थाल्। 7. सम्—नि—यम्+तुमुन्। अयंसीत्। 8. नित्यशः नि+त्यप् नित्य+शस्। 9. ज्ञानेन करणे तृतीया।

*Change of voice.*—एतानि...न शक्नुवन्ति (जनाः)...॥ ९६ ॥

BENGALI.—বিষয়ে আসক্ত ইন্দ্রিয়গণকে বিষয়ভোগ পরিত্যাগ দ্বারা সেরূপ সংযত করা যায় না, ভোগ্য বিষয় অনিত্য সর্ব্বদা এরূপ বুদ্ধি অবলম্বন দ্বারা সেরূপ সংযত করিতে পারা যায় ॥ ৯৬ ॥

**ENGLISH.—These senses can not be so controlled by non-indulgence, as they, attached to sensual objects, can be done ever by knowledge (of their real nature). (96).**

## वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
## न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥ ९७॥

PROSE.—विप्रदुष्टभावस्य वेदाः त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च कर्हिचित् सिद्धिं न गच्छन्ति॥ ९७॥

KULLUKA.—यस्मादनियमितं मनोविकारस्य हेतुः स्यादत आह वेदा इति। वेदाध्ययनदानयज्ञनियमतपांसि स्वगादिविषयसेवासङ्कल्पशीलिनो न कदाचित् फलसिद्धये प्रभवन्ति॥ ९७॥

GRAMMAR.—1. विप्रदुष्टभावस्य विप्रदुष्टः विषयासक्त्या कलुषितः भावः सङ्कल्पो यस्य स विप्रदुष्टभावः तस्य। वि–प्र–दुष+क्तः कर्त्तरि। भू+घञ् भावः। 2. वेदाः already derived. 3. त्यागाः त्यज+घञ्। 4. यज्ञाः यज+नः। 5. नि–यम+घञ्। 6. तपांसि तप+असुन् all nominative to the verb गच्छन्ति। 7. सिद्धिम् Acc. of गच्छन्ति। सिध+क्तिन् भावे। असिधत्।

*Change of voice.*–वेदैः त्यागैः यज्ञैः नियमैः तपोभिः सिद्धिः न गम्यते॥ ९७॥

BENGALI.—যাহার সঙ্কল্প বিষয়সেবায় নিযুক্ত তাহার বেদপাঠ, দান, যজ্ঞ, নিয়ম ও তপস্যা কখনও ফলপ্রদান করে না॥ ৯৭॥

ENGLISH—(The reading of) the Vedas, making gifts, sacrifices, observances (of rituals) and austerities do never contribute to the success or perfection of one, the state of whose mind is vitiated. (97)

## श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
## न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः॥ ९८॥

PROSE.—यो नरः श्रुत्वा स्पृष्ट्वा च दृष्ट्वा भुक्त्वा घ्रात्वा च न हृष्यति वा ग्लायति स जितेन्द्रियः विज्ञेयः॥ ९८॥

KULLUKA.—जितेन्द्रियस्य स्वरूपमाह श्रुत्वेति। स्तुतिवाक्यं निन्दावाक्यञ्च श्रुत्वा, सुखस्पर्शं दुकूलादि दुःखस्पर्शं मेषकम्बलादि स्पृष्ट्वा सुरूपं कुरूपञ्च दृष्ट्वा, स्वादु अस्वादु च भुक्त्वा, सुरभिमसुरभिञ्च घ्रात्वा यस्य न हर्षविषादौ स जितेन्द्रियो ज्ञातव्यः॥ ९८॥

GRAMMAR—1. श्रुत्वा श्रु+क्त्वाच्। 2. स्पृष्ट्वा स्पृश+क्त्वाच्। स्पृशति अस्पृचत् अस्प्राचीत् अस्पार्चीत्। 3. दृष्ट्वा दृश+क्त्वाच्। अद्राचीत् अदर्शत्। 4. भुक्त्वा भुज+क्त्वाच् अभौचीत् अभुक्त। 5. घ्रात्वा घ्रा+क्त्वाच्। जिघ्रति। अघ्रासीत्। 6. हृष्यति अहृषत्। 7. ग्लायति जग्लौ अग्लासीत्। 8. सः Acc. of ज्ञेयः।

*Change of voice.*—येन नरेण श्रुत्वा......न हृष्यते ग्लायते तेन जितेन्द्रियेण विज्ञेयेन भूयते ॥ ९८ ॥

BENGALI.—यिनि स्तुति वा निन्दा श्रवण करिया, कोमल कि कर्कश वस्तु स्पर्श करिया, सुरूप कि कुरूप देखिया, स्वादु कि अस्वादु भोजन करिया, सुगन्ध कि दुर्गन्ध आघ्राण करिया हृष्ट अथवा विषाद प्राप्त हन ना, ताहाके जितेन्द्रिय बलिया जानिबे ॥ ৯৮ ॥

ENGLISH—The man who does neither rejoice nor droop with sorrow on hearing (agreeable or disagreeable sounds), touching (soft or hard things), seeing (beautiful or ugly objects), eating (delicious or bad food), and smelling (sweet or bad smells) is known to have controlled his senses. (98)

**इन्द्रियाणान्तु सर्व्वेषां यद्येकं चरतीन्द्रियम्।**
**तेनास्य चरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ९९ ॥**

PROSE.—सर्व्वेषां इन्द्रियाणां तु यदि एकं इन्द्रियं चरति तेन दृतेः पात्रात् उदकं इव अस्य प्रज्ञा चरति ॥ ९९ ॥

KULLUKA.—एकेन्द्रियासंयमोऽपि निवार्य्यत इत्याह इन्द्रियाणान्त्विति। सर्व्वेषाम इन्द्रियाणां मध्ये यद्येकमपि इन्द्रियं विषयप्रवणं भवति ततोऽस्य विषयपरस्य इन्द्रियान्तरैरपि तत्त्वज्ञानं चरति न व्यवतिष्ठते चर्म्मनिर्म्मितोदकपात्रादिव एकेनापि छिद्रेण सर्व्वस्थानस्थमेव उदकं न व्यवतिष्ठते ॥ ९९ ॥

ELUCIDATION—दृतिः चर्म्मपात्रम्।

GRAMMAR.—1. इन्द्रियाणाम् निर्द्धारणे षष्ठी। 2. इन्द्रियम् Nom. verb चरति। 3. तेन करणे तृतीया। 4. प्रज्ञा Nom. verb चरति प्र–ज्ञा+अङ्। 5. अस्य शेषे षष्ठी। 6. दृतेः शेषे षष्ठी। दृ+क्तिन्। 7. पात्रात् अपादाने पञ्चमी। पा+ष्ट्रन्। 8. उदकम् Nom. verb चरति understood.

*Change of voice.*—एकेन इन्द्रियेण यदि चर्य्यते,......प्रज्ञया...उदकेन...चर्य्यते ॥ ९९ ॥

BENGALI.—সকল ইন্দ্রিয়ের মধ্যে একটি ইন্দ্রিয়ও যদি বিষয়াসক্ত হয়, তবে চর্ম্মপাত্রে একটি ছিদ্র থাকিলেই যেমন সেই ছিদ্র দ্বারা সমস্ত জল পড়িয়া যায়, তেমন সেই একটি ইন্দ্রিয় দ্বারাই সমস্ত তত্ত্বজ্ঞান বাহির হইয়া যায়। ৯৯।

ENGLISH.—If any one of all the senses of a man goes astray, then his wisdom fails thereby, just as water goes out by one hole from a bag of leather. (99).

**वशेकृत्येन्द्रियग्रामं संयम्य च मनस्तथा।**
**सर्व्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम्॥ १००॥**

PROSE.—( पुरुषः ) इन्द्रियग्रामं वशे कृत्वा तथा मनश्च संयम्य तनुं अक्षिण्वन् योगतः सर्व्वान् अर्थान् संसाधयेत्॥ १००॥

KULLUKA.—इन्द्रियसंयमस्य सर्व्वपुरुषार्थहेतुतां दर्शयति वशे कृत्वेति। बहिरिन्द्रियगणमायत्तं कृत्वा मनश्च संयम्य सर्व्वान् पुरुषार्थान् सम्यक् साधयेत्। योगत उपायेन स्वदेहमपीड़यन्, यः सहजसुखी संस्कृतान्नादिकं भुङ्क्ते स क्रमेण तं त्यजेत्॥ १००॥

GRAMMAR.—1. इन्द्रियाणां ग्रामः समूहः षष्ठी समासः। तम्। Acc. of कृत्वा। 2. मनः Acc. of संयम्य। 3. संयम्य सम्—यम्+ल्यप्। 4. अर्थान् (सर्व्वान्) कर्म्मणि द्वितीया Acc. of संसाधयेत्। 5. संसाधयेत् सम्—सिध+णिच्+यात्। 6. तनुम् कर्म्मणि द्वितीया Acc. of अक्षिण्वन्। 7. अक्षिण्वन् स्वादि क्षि or तनादि क्षिण+शतृ। स्वादि—क्षि क्षिणोति अक्षैषीत्। तनादि—क्षिण। क्षिणोति क्षेणोति। अक्षेणीत् अक्षेणिष्ट—अक्षित। 8. उपायतः करणे तृतीया। तृतीयायाः तसिः।

*Change of voice*....तनुं अक्षिण्वता सर्व्वे अर्थाः संसाध्येरन्॥ १००॥

BENGALI.—বাহ্য দশ ইন্দ্রিয় বশীভূত করিয়া, অন্তরিন্দ্রিয় মন সংযত করিয়া, শরীরকে পীড়া না দিয়া উপায় অবলম্বনে ধর্ম্মাদি সমস্ত পুণ্যকর্ম্ম সাধন করিবে। যথা সহজসুখী ও স্বাদুভোজী ব্যক্তি ক্রমশ স্বাদু অন্ন পরিত্যাগ করিবে। ১০০।

ENGLISH.—Bringing the host of senses under subjugation and controlling the mind, one may secure all objects or aims without decaying his body by asceticism. (100).

पूर्व्वां सन्ध्यां जपं स्तिष्ठेत् सावित्रीमार्कदर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्॥ १०१॥

PROSE.—पूर्व्वां सन्ध्यां आर्कदर्शनात् सावित्रीं जपन् तिष्ठेत् पश्चिमां (सन्ध्याम्) तु आसम्यगृक्षविभावनात् सावित्रीं जपन् समासीनः (स्यात्)॥ १०१॥

KULLUKA.—पूर्व्वां सन्ध्यामिति। पूर्व्वां सन्ध्यां पश्चिमामिति च कालाध्वनोरत्यन्त-संयोगे द्वितीया, प्रथमसन्ध्यां सूर्य्यदर्शनपर्य्यन्तं सावित्रीं जपन् तिष्ठेत् आसनादुत्थाय निवृत्तगतिरेकत्र देशे कुर्य्यात्। पश्चिमान्तु सन्ध्यां सावित्रीं जपन् सम्यङ्नक्षत्रदर्शन-पर्य्यन्तमुपविष्टः स्यात्। अत्र च फलवत्त्वात् जपः प्रधानं स्थानासने त्वङ्गे, फलवत्-सन्निधावफलं तदङ्गमिति न्यायात्। सन्ध्ययोर्ब्बेदविहितौ वेदपुण्येन युज्यते। अपक्व-कालस्तथास्य इति च पूर्व्वं जपात् फलमुक्तम् मेधातिथिस्तु स्थानासनयोरेव प्राधान्यमाह। सन्ध्याकालश्च मुहूर्त्तमात्रं तदाह योगियाज्ञवल्क्यः। ह्रासवृद्धौ तु सततं दिवसानां यथाक्रमम्। सन्ध्या मुहूर्त्तमात्रन्तु ह्रासे वृद्धौ च सा स्मृता॥ १०१॥

KULLUKA EXPLAINED.—तिष्ठेत् = "आसनादुत्थाय निवृत्तगति रेकत्र देशे कुर्य्यात्।" Leaving his seat and standing, one will utter.

GRAMMAR.—1. पूर्व्वाम् qualifies सन्ध्याम्। 2. सन्ध्याम् कालाध्वनो। रत्यन्तसंयोगे द्वितीया। सन्ध्यां ध्याय इत्यर्थः। सम्—ध्यै+अङ्। सम्यक् ध्यायति अस्यामिति। ध्यायति दध्यौ अध्यासीत्। 3. सावित्रीम् कर्म्मणि द्वितीया Acc. of जपन्। 4. जपन् जप+शतृ। 5. आर्कदर्शनात् आ+अर्कदर्शनात् सन्धिः। आङ् मर्य्यादावचने इति कर्म्मप्रवचनीयत्वात्। पञ्चम्यपाङ्परिभिरिति पञ्चमी अर्क-दर्शनात्। अर्कस्य दर्शनं अर्कदर्शनम् तस्मात्। न तु अव्ययीभावः आ and अर्क-दर्शनात् पदद्वयम्। Thus explain सम्यगृक्षविभावनात् आङ् योगे पञ्चमी। ऋक्षाणां नक्षत्राणां विभावनं दर्शनम्। सम्यक् ऋक्षविभावनम् सम्यगृक्षविभावनम्। तस्मात्। 6. समासीनः सम्—आस+शानच्। आसिष्ट।

*Change of voice.*—जपता स्थीयते...समासीनेन॥ १०१॥

BENGALI.—पूर्व्व सन्ध्यावेला सूर्य्यदर्शनकालपर्य्यन्त आसन हइते उत्थित हइया एक स्थाने दाँड़ाइया सावित्री जप करिबे; पश्चिम सन्ध्यावेला सम्यक्रूप नक्षत्रदर्शन पर्य्यन्त उपविष्ट हइया सावित्री जप करिबे। १०१।

ENGLISH.—One should remain standing, muttering the *Gayatri* at the morning twilight till the sun is seen; and in the evening

he should remain sitting, muttering the *Gayatri*, till the stars are clearly visible. (101).

पूर्व्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्॥ १०२॥

PROSE.—पूर्व्वां सन्ध्यां (व्याप्य) जपन् तिष्ठन् नैशं एनः व्यपोहति पश्चिमां (सन्ध्यां व्याप्य) (जपन्) समासीनः दिवाकृतं मलं हन्ति॥ १०२॥

KULLUKA.—पूर्व्वां सन्ध्यामिति। पूर्व्वसन्ध्यायां तिष्ठन् जपं कुर्व्वाणो निशासञ्चितं पापं नाशयति। पश्चिमसन्ध्यायान्तूपविष्टो जपं कुर्व्वन् दिवार्जितपापं निहन्ति अत्रापि जपात् फलमुक्तं एतच्चाज्ञानादिकृतपापविषयम्। अतएव याज्ञवल्क्यः—दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत्। त्रिकालसन्ध्याकरणात्तत् सर्व्वं विप्रणश्यति॥ १०२॥

KULLUKA EXPLAINED.—पूर्व्वां सन्ध्यां पूर्व्ववत् कालाध्वनोरत्यन्तसंयोगे द्वितीया। पश्चिमां सन्ध्याम् do. सन्ध्या indicates a division of time. Hence द्वितीया by the rule कालाध्वनोः।

GRAMMAR.—1. सन्ध्याम् कालाध्वनोरत्यन्तसंयोगे द्वितीया। 2. नैशम् qualifies एनः। निशा+अण्। 3. व्यपोहति वि-अप-ऊह+लट् ति। ऊहते। औहिष्ट। 4. दिवाकृतम् दिवा इत्यव्ययम्। सप्तमी समासः। Qualifies मलम्। 5. हन्ति अवधीत्।

*Change of voice.*—जपता तिष्ठता एनः व्यपोह्यते। समासीनेन मलः हन्यते॥ १०२॥

BENGALI.—প্রাতঃসন্ধ্যাকালে দণ্ডায়মান হইয়া সাবিত্রী জপ করিলে রাত্রিকালে অজ্ঞাতসারে কৃত পাপ নষ্ট হয়, সায়ংকালে আসনে সমাসীন হইয়া সাবিত্রী জপ করিলে দিবাভাগে অজ্ঞাতসারে কৃত পাপ নষ্ট হইয়া যায়॥ ১০২॥

ENGLISH.—Standing up and muttering the (*Gayatri*) at the morning twilight, one expiates the sin (unwillingly done) at night; and sitting down and muttering the *Gayatri* in the evening, he poes away with sin (unknowingly done) during day. (102).

न तिष्ठति तु यः पूर्व्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः॥ १०३॥

PROSE.—यः तु पूर्व्वां ( सन्ध्याम् ) न तिष्ठति यश्च पश्चिमां न उपास्ते सः शूद्रवत् सर्व्वस्मात् द्विजकर्म्मणः वहिष्कार्य्यः ॥ १०३ ॥

KULLUKA.—न तिष्ठतीति। यः पुनः पूर्व्वसन्ध्यां नानुतिष्ठति पश्चिमाञ्च नोपास्ते तत्तत्कालविहितं जपादि न करोतीत्यर्थः, स शूद्र इव सर्व्वस्माद्द्विजातिकर्म्मणोऽतिथिसत्कारादेरपि वहिः कार्य्यः। अनेनैव प्रत्यवायेन सन्ध्योपासनस्य नित्यतोक्ता नित्यत्वेऽपि सर्व्वदा अपेक्षितपापक्षयस्य फलत्वमविरुद्धम् ॥ १०३ ॥

ELUCIDATION.—यः पूर्व्वां न तिष्ठति यश्च पश्चिमां नोपास्ते = यः पूर्व्वां पश्चिमाञ्च एकतरां वा सन्ध्यां नोपास्ते।

GRAMMAR—1. यः Nom. verb तिष्ठति। 2. पूर्व्वाम् qualifies सन्ध्याम् understood which is governed by तिष्ठति। 3. तिष्ठति स्था धातुः कर्म्मकोऽपि प्राप्तार्थकत्वात् सकर्म्मकः सर्व्वेषामेव धातूनां गमनार्थप्राप्तार्थत्वादित्वात्। अस्मात्। 4. पश्चिमाम् qualifies सन्ध्याम् understood governed by उपास्ते। 5. उपास्ते उप—आस् लट् ते। आसिष्ट। 6. शूद्रवत् अव्ययम् शूद्र + वति। तेन तुल्यं क्रिया चेत् वतिरिति। ब्राह्मणेन तुल्यं अधीते ब्राह्मणवत् अधीते। शूद्रेण तुल्यं वहिष्कार्य्यः शूद्रवत् वहिष्कार्य्यः। 7. वहिष्कार्य्यः वहिस्—कृ + ण्यत्। 8. सर्व्वस्मात् qualifies द्विजकर्म्मणः। 9. द्विजस्य कर्म्म द्विजकर्म्म षष्ठी समासः तस्मात् द्विजकर्म्मणः अपादाने पञ्चमी।

*Change of voice.*—येन पूर्व्वा न स्थीयते येन पश्चिमा नोपास्यते तेन शूद्रवत् वहिष्कार्य्येण भूयते ॥ १०३ ॥

BENGALI.—যে ব্যক্তি প্রাতঃসন্ধ্যা ও সায়ংসন্ধ্যা না করে তাহাকে শূদ্রের ন্যায় অতিথিসৎকারাদি সমস্ত দ্বিজোচিত কার্য্য হইতে বাহির করিয়া দিবে। ১০৩।

ENGLISH.—He who does not stand up and mutter the *Gayatri* at the morning twilight, and does not sit at the evening twilight and mutter the *Gayatri*, should be expelled, like a *Sudra*, from all the rites of a twice-born. (103).

**अपां समीपे नियतो नैत्यकं विधिमास्थितः।**
**सावित्रीमप्यधीयीत गत्वारण्यं समाहितः॥ १०४ ॥**

PROSE.—नैत्यकं विधिं आस्थितः ( द्विजः ) अरण्यं गत्वा अपां समीपे नियतः समाहितश्च ( सन् ) सावित्रीं अपि अधीयीत ॥ १०४ ॥

KULLUKA.—अपां समीप इति । ब्रह्मयज्ञरूपमिदं बहुवेदाध्ययनाशक्तो सावित्रीमात्राध्ययनमपि विधीयते । अरण्यादिनिर्जनदेशं गत्वा नद्यादिजलसमीपे नियतेन्द्रियः समाहितोऽनन्यमना नैत्यकं विधिं ब्रह्मयज्ञरूपमास्थितोऽनुतिष्ठासुः सावित्रीमपि प्रणव व्याहृतित्रययुतां यथोक्तामधीयीत ॥ १०४ ॥

ELUCIDATION.—आस्थितः = "अनुतिष्ठासुः" one who intends to perform, नैत्यकं विधिम् *i.e.* ब्रह्मयज्ञम् described in the next श्लोक which consists in reading the Vedas.

GRAMMAR—1. नैत्यकम् qualifies विधिम् नित्य + अण् + क । 2. विधिम् Acc. of आस्थितः । वि – धा + कि: । 3. आस्थितः आङ् – स्था + क्तः कर्त्तरि । It has here the meaning of सन् प्रत्ययः । 4. अरण्यम् Acc. of गत्वा । 5. अपाम् शेषे षष्ठी । 6. समीपे संगता आपः यस्य इति समीपम् बहुव्रीहिः । द्व्यन्तरुपसर्गेभ्य इति अकारस्य ईकारः । अधिकरणे सप्तमी । 6. नियतः नि – यम् + क्तः 7. सम् – आ – धा + क्तः । 8. सावित्रीम् Acc. of अधीयीत । 9. अधि – इङ् + ईत विधिलिङ् ।

*Change of voice*.......नियतेन समाहितेन सावित्री अधीयेत ॥ १०४ ॥

BENGALI.—যিনি ব্রহ্মযজ্ঞরূপ নিত্যকর্ম্ম অনুষ্ঠান করিতে ইচ্ছুক, তিনি অরণ্যে যাইয়া জলাশয়ের তীরে ইন্দ্রিয়গুলি সংযত ও মন স্থির করিয়া ( বেদ অধ্যয়নে অশক্ত হইলে অন্ততঃ তৎপরিবর্ত্তে ) প্রণব ও ব্যাহৃতিযুক্ত গায়ত্রী পাঠ করিবেন। (অর্থাৎ এরূপ করাই ব্রহ্মযজ্ঞ সম্পাদন করা বটে) ॥ ১০৪ ॥

ENGLISH.—One who is bent on doing the (daily) obligatory ceremonies, and has subdued his senses, should, after having gone to a forest, read, near a river or tank, the *Savitri* also being self-possessed. (104).

**वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।**
**नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ १०५ ॥**

PROSE.—वेदोपकरणे चैव नैत्यके स्वाध्याये चैव होममन्त्रेषु चैव हि अनध्याये अनुरोधः नास्ति ॥ १०५ ॥

KULLUKA.—वेदोपकरण इति । वेदोपकरणे वेदाङ्गे शिक्षादौ नैत्यके नित्यानुष्ठेये च स्वाध्याये ब्रह्मयज्ञरूपे होममन्त्रेष्वानध्यायादरो नास्ति ॥ १०५ ॥

GRAMMAR.—1. वेदोपकरणे उपक्रियतेऽनेन उपकरणम् सामग्री। वेदानां उपकरणं वेदोपकरणम् तस्मिन्। 2. स्वाध्याये सु अध्यायः अध्ययनं यस्य स इति बहुव्रीहिः or सु अध्यायः स्वाध्यायः इति तत्पुरुषः। तस्मिन्। सर्व्वत्र विषयाधिकरणे सप्तमी। 3. नैत्यके qualifies स्वाध्याये। 4. होममन्त्रेषु होमानां मन्त्राः होममन्त्राः षष्ठी समासः तेषु पूर्व्ववत् सप्तमी 5. अनध्याये न अध्यायः अनध्यायः अध्ययनाभावः तस्मिन्। 6. अनुरोधः अनुरुध्यते इति अनुरोधः। अनु—रुध+घञ्। रुधाश्र् रुन्धे। अरुधत् अरौत्सीत् अरुद्ध। Verb अस्ति। अनध्यायः is described elsewhere; it means that time when reading is prohibited.

*Change of voice.*—अनुरोधेन न भूयते ॥ १०५ ॥

BENGALI.—শিক্ষা কল্প প্রভৃতি বেদাঙ্গে বেদপাঠরূপ নিত্য কর্ম্মে এবং হোমমন্ত্রে অনধ্যয়নপাঠবক্ষ রাখার নিয়মটি বর্ত্তিবে না, অর্থাৎ যে দিন অধ্যয়ন নিষিদ্ধ সে দিনও ঐ সকল করিবে ॥ ১০৫ ॥

ENGLISH.—To the six subsidiary studies of the Veda (*i. e.* the *angas*), the obligatory (daily) study of the Vedas, and the *mantras* or texts for offerings to fire, no prohibition of study does apply. (105).

नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम्।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥ १०६ ॥

PROSE.—नैत्यके अनध्यायः नास्ति तत् हि ब्रह्मसत्रं स्मृतम्; अनध्यायवषट्कृतम् ब्रह्माहुतिहुतम् पुण्यम् (भवति) ॥ १०६ ॥

KULLUKA.—नैत्यके इति। पूर्व्वोक्तनैत्यकस्वाध्यायस्यायमनुवादः। नैत्यकजपयज्ञे अनध्यायो नास्ति यतः सततभवत्वात् सत्रं ब्रह्मैव सत्रं ब्रह्मसत्रं तन्मन्वादिभिः स्मृतम्, ब्रह्मैवाहुतिर्ब्रह्माहुतिर्हविस्तस्याहुतमध्ययनरूपम् अनध्यायवषट्कृतम् अनध्यायस्वीकृतमपि पुण्यमेव भवति ॥ १०६ ॥

ELUCIDATION.—ब्रह्माहुति = ब्रह्मैवाहुतिः। आहुतिः = हविः। तेन हुतम् हवनम्। ब्रह्माहुतिहुतम् = वेदरूपहविषा यत् हवनम् = वेदपाठरूपयज्ञकरणम्। अनध्यायवषट्कृतम् = अनध्यायेन अनध्यायकालेन वषट्कृतं गृहीतं वषट्कारस्तुत्याय्यं यहवात् यज्ञमपि वषट्करणमुच्यते तस्मात् वषट्कृतं स्वीकृतमिति कुल्लूकव्याख्यानम्।

GRAMMAR.—1. नैत्यके derived विषयाधारे सप्तमी। 2. अनध्याय: explained. 3. तत् refers to नैत्यकम्। 4. ब्रह्मसत्रम् विधेयविशेषणम् of नैत्यकम। ब्रह्मैव सत्रम् कर्म्मधारय:। सततं भवतीति सत्रम्। सतत+त्र। नित्यत्वात् सत्रम् इत्यर्थ:। 5. ब्रह्माहुतिहुतम् ब्रह्म वेद: तदेव आहुति: हवनद्रव्यम् हुतम् ब्रह्माहुति:। तथा हुतम् हवनम् ब्रह्माहुतिहुतम् = वेदरूपहविषायज्ञकरणम् = वेदपाठरूपयज्ञकरणम् इति भाव:। 6. अनध्यायवषट्कृतम् अध्ययनस्य अभाव: अनध्याय: तत्पुरुष: पक्षे अव्ययीभावश्च तत्र क्लीवता। तेन वषट्कृतम् स्वीकृतम् अनध्यायवषट्कृतम्। वषट्कृतम् गतिसमास:। अव्ययात् न ईकारागमादि: अर्थेऽपि। 7. पुण्यम् qualifies ब्रह्माहुतिहुतम्। पू+यत पुण्यम् by पूञो यण् ग् ह्रस्वश्च।

*Change of voice*....अनध्यायेन न भूयते। तेन ब्रह्मसत्रेण स्मृतेन भूयते। अनध्यायवषट्कृतेन ब्रह्माहुतिहुतेन पुण्येन भूयते ॥ १०६ ॥

BENGALI.—নিত্য কর্ত্তব্য বেদপাঠাদিতে অনধ্যায় খাটে না, কেননা নিত্য কর্ত্তব্য বেদপাঠকে ব্রহ্মযজ্ঞ বলে ; বেদরূপ হবিঃ দ্বারা যে অধ্যয়নরূপ যজ্ঞকরণ তাহা অনধ্যায় দিন কর্ত্তৃক স্বীকৃত ( অর্থাৎ অনধ্যায় দিনে কৃত ) হইলে পুণ্যজনকই হয় ॥ ১০৬ ॥

ENGLISH.—The prohibition of study does not apply to the obligatory recitation; for it is regarded as the Veda sacrifice. The sacrifice done with the (reciting of the) Veda as clarified butter, and completed (as in the case of a sacrifice with the words *Vasatkar*) with reading on a day which is though a day for general prohibition of study, is meritorious. (106).

**य: स्वाध्यायमधीतेऽब्दं विधिना नियत: शुचि:।**
**तस्य नित्यं क्षरत्येष पयोदधिघृतं मधु ॥ १०७ ॥**

PROSE.—य: अब्दं नियत: शुचि: ( सन् ) विधिना स्वाध्यायम् अधीते एष तस्य नित्यंपय: दधि घृतं मधु क्षरति ॥ १०७ ॥

KULLUKA.—य: स्वाध्यायमिति। अब्दमिति अत्यन्तसंयोगे द्वितीया वर्षमप्येकं स्वाध्यायमहरहर्व्विहिताङ्गयुक्तं नियतेन्द्रिय: प्रयतो जपति तस्यैव स्वाध्यायो अपयश्च: क्षीरादीनि क्षरति क्षीरादिभिर्द्देवान् पितृंश्च प्रीणाति ते च प्रीता: सर्व्वकामैस्तंपयश्च- कारिणस्तर्पयन्तीत्यर्थ:। अतएव याज्ञवल्क्य:—मधुना पयसा चैव स देवांस्तर्पयेद्द्विज:। पितृन् मधुघृताभ्याञ्च ऋचोऽधीते हि योऽन्वहम् इत्युपक्रम्य चतुर्थान्त वेदानां पुराणा-

माध्व जपस्य दैवपितृदत्तनिफलमुक्ता क्षीरे ते तमात्तर्पयन्त्येनं सर्व्वकामफलैः शुभैरित्युक्तवान् ॥ १०७ ॥

GRAMMAR.—1. अब्दम् अत्यन्तसंयोगे द्वितीया अपीद्ददातीति अब्दः तम् अप्–दा+क। हायनोऽब्दशरत्समा इत्यमरः। 2. नियतः शुचिः qualify यः। 3. विधिना करणे तृतीया वि–धा+क्ति। 4. स्वाध्यायम् Acc. of अधीते 5. अधीते अधि इङ् ते। 6. नित्यम् Adv. 7. पयः दधि घृतम् मधु Acc. of चरति।

*Change of voice.*—येन......स्वाध्यायः अधीयते तस्य अनेन...पयं दधि घृतम् मधु चर्य्यते ॥ १०७ ॥

BENGALI.—যিনি শুচি হইয়া ও ইন্দ্রিয় সংযত করত যথাবিধানে অন্ততঃ একটি বৎসর ও প্রতিদিন জপযজ্ঞ করেন, সেই জপযজ্ঞ তাঁহাকে নিয়ত ক্ষীর, দধি, ঘৃত ও মধু প্রদান করে। অর্থাৎ যিনি বেদ বা পুরাণ জপ করেন, তাঁহার সেই জপে দেবতাগণ ক্ষীরাদি দ্বারা তৃপ্ত হইয়া তাঁহাকে ক্ষীরাদি প্রদান করিয়া তর্পিত করেন ॥ ১০৭ ॥

ENGLISH.—For him who being pure and self-controlled makes according to due form the recitation for a full year, it ever flows with milk, curds, butter and honey. (107).

## अग्नीन्धनं भैक्ष्यचर्य्यामधःशय्यां गुरोर्हितम् ।
## आ समावर्त्तनात्कुर्य्यात्कृतोपनयनो द्विजः ॥ १०८ ॥

PROSE.—कृतोपनयनः ( ब्रह्मचारी ) द्विजः आ समावर्त्तनात् अग्नीन्धनं भैक्ष्यचर्य्यां अधःशय्यां गुरोः हितं कुर्य्यात् ॥ १०८ ॥

KULLUKA.—अग्नीन्धनमिति। सायंप्रातः समिद्धोमं भिक्षासमूहाहरणमखट्वाशयनरूपामधःशय्यां नतु स्थण्डिलशायित्वमेव गुरोरुदककुम्भाद्याहरणरूपं हितं कृतोपनयनो ब्रह्मचारी समावर्त्तनपर्य्यन्तं कुर्य्यात् ॥ १०८ ॥

GRAMMAR.—1. कृतोपनयनः कृतं उपनयनं यस्य सः qualifies द्विजः। 2. समावर्त्तनात् कर्म्मप्रवचनीया ङ्योगे पञ्चमी। 3. आ अव्ययम् मर्य्यादायाम्। 4. अग्नीन्धनम् इध्यते अनेन इति इन्धनम् अग्नेरिन्धनं अग्नीन्धनम् Acc. of कुर्य्यात्। 5. भैक्ष्यचर्य्यम् भिक्षया प्राप्तं भैक्ष्यम् ष्यञ्। भैक्ष्य–चर+य। वार्त्तिकेन परिचर्य्याशब्दस्य ग्रहणात् अन्यत्रापि ग्रहणम्। 6. अधःशय्याम् अधः भूमौ एव शय्या ताम् शी+क्यप्। 7. हितम् Acc. of कुर्य्यात्।

*Change of voice.*—দ্বিজেন......অগ্নীন্ধনং ভৈক্ষ্যচর্য্যা অধঃশয্যা···হিতম্ ক্রিয়েত ॥ ১০৮ ॥

BENGALI.—দ্বিজাতি উপনয়ন গ্রহণান্তে যে পর্য্যন্ত গুরুগৃহ ছাড়িয়া গৃহস্থ ধর্ম্ম গ্রহণার্থে পিতার বাড়ীতে প্রত্যাগমন না করেন তাবৎকাল সায়ং ও প্রাতে যজ্ঞকাষ্ঠ আহরণ ও হোমকরণ, ভিক্ষাসংগ্রহ, বিনা খট্টায় শয়ন, এবং গুরুর জল ও কুশ আহরণ প্রভৃতি হিতসাধক কর্ম্ম করিবে। ১০৮॥

ENGLISH.—A twice-born, invested with the sacred string, should collect fuel for the sacrificial fire, beg alms, sleep low on the ground, and do what is conducive to the good of his preceptor, till the ceremony of his returning home from the preceptor's place. (108).

**आचार्य्यपुत्त्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः।**
**आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः॥ १०९॥**

PROSE.—आचार्य्यपुत्त्रः शुश्रूषुः ज्ञानदः धार्म्मिकः शुचिः आप्तः शक्तः अर्थदः साधुः स्वः (एते) दश धर्म्मतः अध्याप्याः ॥ १०९ ॥

KULLUKA.—कीदृशः शिष्योऽध्याप्य इत्याह आचार्य्यपुत्त्र इति। आचार्य्य-पुत्त्र-परिचारक-ज्ञानान्तरदातृ-धर्मविन्मृ द्वार्थ्यादिशुचि-बान्धवग्रहणसमर्थधनदातृद्रोहिज्ञातयो दशैते-धर्म्मेणाध्याप्याः ॥ १०९ ॥

GRAMMAR.—**1.** आचार्य्यस्य पुत्त्र आचार्य्यपुत्त्रः। **2.** शुश्रूषुः श्रु सन्+उ। **3.** ज्ञान-दा+क। **4.** धर्म्म+ठञ्। **5.** आप्+क्तः आप्तः। **6.** शक्+क्तः। **7.** अर्थ-दा+कः। **8.** स्वः स्वकीयः। **9.** धर्म्मतः तृतीयायास्तसिः। **10.** अध्याप्याः अधि-इङ्+णिच् य।

*Change of voice.*—आचार्य्यपुत्रेण.........स्वेन (एतैः) दशभिः अध्याप्यैः भूयते ॥ १०९ ॥

BENGALI.—আচার্য্যপুত্র, পরিচর্য্যাকারক, অন্যবিদ্যাপ্রদ, ধর্ম্মবিৎ, মৃত্তিকা ও জলাদিদ্বারা শুচি, বান্ধব, বিদ্যাগ্রহণ ও ধারণে সমর্থ, ধনদাতা, অদ্রোহি ও জ্ঞাতি এই দশজনকে অধ্যয়ন করাইবে। ১০৯।

ENGLISH.—The son of a preceptor, a pupil willing to learn, a communicator of some knowledge, a virtuous or pious person,

a man who is pure, a man who is trustworthy and faithful, one who is capable (of retaining what is taught), one who gives money, one who is honest and good and one who is a relative—these ten are lawfully to be taught. (109).

**नापृष्टः कस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः ।**
**जानन्नपि हि मेधावी जड़वल्लोक आचरेत् ॥ ११० ॥**

PROSE.—मेधावी अपृष्टः कस्यचित् न ब्रूयात्, अन्यायेन पृच्छतः च न ब्रूयात्, जानन् अपि मेधावी लोके जड़वत् आचरेत् ॥ ११० ॥

KULLUKA.—नापृष्ट इति । यदान्येनाल्पाक्षरं विस्वरञ्चाधीतं तस्य तत्त्वमपृष्टः सन् न वदेत् शिष्यस्य त्वपृच्छतोऽपि वक्तव्यं भक्तिश्रद्धादिप्रश्नधर्म्मोल्लङ्घनमन्यायः तेन पृच्छतो न ब्रूयात् । जानन्नपि हि प्राज्ञो लोके, मूक इव व्यवहरेत् ॥ ११० ॥

GRAMMAR.—1. मेधा + विनिः । 2. न पृष्टः अपृष्टः । 3. कस्यचित् सम्बन्धविवक्षया षष्ठी । 4. अन्यायेन प्रकृत्यादिभ्य उपसंख्यानं इति तृतीया । 5. जानन् – ज्ञा + शतृ । 6. लोके अधिकरणे सप्तमी । 7. जड़वत् जड़ + वतिः तेन तुल्यं क्रिया चेद्वतिः ।

*Change of voice.*—मेधाविना अपृष्टेन...उच्येत । जानता आच-र्य्यते ॥ ११० ॥

BENGALI.—মেধাবী গুরু জিজ্ঞাসিত না হইলে অন্যের অধ্যয়নে অক্ষরস্খলন বিস্বরতা দেখিয়া ও শিষ্য না হইলে তাহাকে কিছু বলিবেন না, অথবা শাস্ত্রানুসারে ভক্তিশ্রদ্ধা-পূর্ব্বক জিজ্ঞাসা না করিলে জিজ্ঞাসাকারীকেও বলিবেন না, এবং ঐ উভয় অবস্থাতেই জানিয়াও লোকসমাজে মূকের ন্যায় ব্যবহার করিবেন ॥ ১১০ ॥

ENGLISH.—No one should say (any thing of the Vedas) to any one without being asked; nor should he answer any person asking improperly. A wise man, though he knows, should act like a dumb man (or a dullard) in the world. (110).

**अधर्म्मेण च यः प्राह यश्चाधर्म्मेण पृच्छति ।**
**तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १११ ॥**

PROSE.—यः अधर्म्मेण प्राह यश्च अधर्म्मेण पृच्छति तयोः अन्यतरः प्रैति विद्वेषं वा अधिगच्छ ति ॥ १११ ॥

KULLUKA.—उक्तप्रतिषेधव्यतिक्रमे दोषमाह अधर्म्मेणेति। अधर्म्मेण पृष्टोऽपि यो यस्य वदति यथान्यायेन यं पृच्छति तयोरन्यतरो व्यतिक्रमकारी म्रियते विद्वेषं वा तेन सह गच्छति॥ १११॥

GRAMMAR.—1. अधर्म्मेण प्रकृत्यादिभ्य स्तृतीया। 2. प्राह प्र—ब्रू लट् ति। 3. तयोः निर्द्धारणे षष्ठी। 4. प्रैति म्रियते। प्र+एति। इ—लट्तिप्। अगात्। 5. विद्वेषम् Acc. of अधिगच्छति। वि—द्विष्+घञ्।

*Change of voice.*—येन...उच्यते येन पृच्छ्यते अन्यतरेण प्रेयते विद्वेषः अधिगम्यते॥ १११॥

BENGALI.—যিনি অধর্ম্ম অনুসারে জিজ্ঞাসিত হইয়া উত্তর দেন এবং যিনি অধর্ম্ম অনুসারে প্রশ্ন করেন সেই উভয়ের একজন মৃত্যুমুখে পতিত হয় অথবা উভয়েই লোকের দ্বেষের পাত্র হয়। ১১১।

ENGLISH.—He who says unlawfully, and he who asks unlawfully, either of these two may die or incur hatred. (111).

**धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।**
**तत्र विद्या न वक्तव्या शुभं वीजमिवोषरे॥ ११२॥**

PROSE.—यत्र धर्म्मार्थौ न स्याताम्, तद्विधा शुश्रूषा वा अपि न (स्यात्), ऊषरे शुभं वीजमिवतत्रविद्या न वक्तव्या॥ ११२॥

KULLUKA.—धर्म्मार्थाविति। यस्मिन् शिष्येऽध्यापिते धर्म्मार्थौ न भवतः परिचर्य्या वा अध्ययनानुरूपा, तत्र विद्या नार्पणीया सुष्ठुव्रीह्यादिवीजमिवोषरे यत्र वीजभूतं न प्ररोहति स ऊषरः। न चार्थवहवी भृतकाध्यापकत्वमापद्यनीयं यदेतावन्मह्यं दीयते तदेतावदध्यापयामीति नियमाभावात्॥ ११२॥

GRAMMAR.—1. यत्र यद्+त्रल् अधिकरणे। 2. धर्म्मार्थौ धर्म्मश्च अर्थश्च धर्म्मार्थौ (द्वन्द्वः) पक्षे अर्थधर्म्मौ। धर्म्मादिष्वनियम इति वार्त्तिकात्। 3. स्याताम् अस्+याताम्। 4. तद्विधा सा एव विधा यस्या सा तद्विधा (बहु) qualifies शुश्रूषा। वि—धा+अङ्। 5. शुश्रूषा—श्रु+सन्+अ। 6. ऊषरे अधिकरणे सप्तमी। ऊष—दाहे। ऊष+क। ऊष—रः अस्त्यर्थे। 7. वीजमिव इवेन सह समासः विभक्त्यलोपश्च। Acc. of वप्तव्यम् understood. 8. विद्या—विद्+क्यप्। 9. वप्तव्यं—वप+तव्य। वपति उवाप। अवाप्सीत्। उप्यते। उप्तः।

*Change of voice.*—धर्म्मार्थाभ्याम् न भूयेत...शुश्रूषया न भूयेत बीजेनैव विद्यया वप्तव्यया न भूयते ॥ ११२ ॥

BENGALI.—যে শিষ্যকে পড়াইলে ধর্ম্ম কি অর্থ কিছুই হয় না, অথবা অনুরূপ পরিচর্য্যাও লাভ হয় না, ঊষর ভূমিতে যেমন উত্তম বীজ বপন করিতে নাই, ঐরূপ শিষ্যেও তেমনই বিদ্যার উপদেশ করিবে না। ১১২।

ENGLISH.—Where there may not be virtue or wealth, or proper service and obedience, there no instruction should be imparted as seed is not sown in a barren soil. (112).

## विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना।
## आपद्यपि हि घोरायां नत्वेनामिरिणे वपेत् ॥ ११३ ॥

PROSE.--ब्रह्मवादिना विद्यया एव समं कामं मर्त्तव्यम् घोरायां आपदि अपि हि एनां तु इरिणे न वपेत् ॥ ११३ ॥

KULLUKA.–विद्ययेति। विद्ययैव सह वेदाध्यापकेन वरं मर्त्तव्यं नतु सर्व्वथाध्यापनयोग्यशिष्याभावे अपात्रायैनां प्रतिपादयेत्। तथाच छान्दोग्यब्राह्मणं विद्यया सार्द्धं म्रियेत न विद्यामूषरे वपेत ॥ ११३ ॥

GRAMMAR–1. ब्रह्मवादिना ब्रह्म वेदं वदितुं शीलमस्य स ब्रह्मवादी तेन। वेदवक्त्रा कर्त्तरि तृतीया। 2. विद्यया समम् योगे सहार्थे तृतीया। 3. कामम् Adv. अव्ययम् अकामानुमती कामम्। 4. मर्त्तव्यम् मृ+भावे तव्य। म्रियते मरिष्यति अमृत। 5. घोरायाम् qualifies आपदि। हन्+अच् हन स्थाने घुरादेशः by हन्तेरच् घुर् च। 6. आपदि अधिकरणे सप्तमी। 7. एनाम् Acc. of वपेत्। 8. इरिणे ऊषरे, शून्ये स्थाने। अधिकरणे सप्तमी। ऋ+इनच् by अर्त्तः किदिच। "इरिणं शून्यम्" Bhatto. 9. वपेत्—वप+यात्।

*Change of voice.*–ब्रह्मवादी...म्रियेत। एषा न उप्येत ॥ ११३ ॥

BENGALI.—বেদের অধ্যাপক বরং বিদ্যা লইয়াই মরিয়া যাইবেন, তথাপি অধ্যাপনযোগ্য পাত্রের অভাবে ঊষর ভূমিতে ( অপাত্রে ) এই বিদ্যাবীজ বপন করিবেন না। ১১৩।

ENGLISH.—A teacher of the Veda should rather die with his learning (not communicated to any one); even in great distress he should not sow it in an unfertile soil. (113).

विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्।
असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तमा॥ ११४॥

PROSE.—विद्या ब्राह्मणं एत्य आह ते शेवधिः अस्मि मां रक्ष असूयकाय मां मादाः तथा (सति) वीर्य्यवत्तमा स्याम्॥ ११४॥

KULLUKA.—अस्यानुवादमाह विद्या ब्राह्मणमिति। विद्याधिष्ठात्री देवता कञ्चिदध्यापकं ब्राह्मणमागत्य एवमवदत् तवाहं निधिरस्मि मां रक्ष असूयकादिदोषवते न मां वदेः तथा सत्यतिशयेन वीर्य्यवती भूयासम्। तथा च छान्दोग्यब्राह्मणं, विद्या ह वै ब्राह्मणमाजगाम तवाहमस्मि त्वं मां पालय अनर्हते मानिने नैवमादा गोपाय मा श्रेयसी तेऽहमस्मीति॥ ११४॥

GRAMMAR.—1. विद्या Nom. to the verb आह। 2. ब्राह्मणम् Acc. of एत्य, कर्म्मणि द्वितीया। 3. आह governs वाक्यार्थ। from ते – to अप्रमादिने of the next sloka. 4. ते शेषे षष्ठी। 5. शेवधिः or सेवधिः शी + वन् शेव। शेव – धा + किः। निधिर्ना शेवधि र्भेदाइत्यमरः। विधेय विशेषणम् of अहम् understood. 6 माम् Acc. of रक्ष। 7. माम् Acc. of अदाः। 8. असूयकाय सम्प्रदाने चतुर्थी। असूय – ण्वुल्। असूयति। 9. दाः दा + लुङ् स। न माङ्योगे इत्यडागमनिषेधः। 10. अतिशयेन वीर्य्यवती वीर्य्यवत्तमा वीर्य्य + मतुप् + तमप्। 11. स्याम् अस + याम।

*Change of voice.*—विद्यया......उच्यते। शेवधिना मया भूयते। त्वया अहं रक्ष्ये।...अहम् मा दिषि वीर्य्यवत्तमया मया भूयेत॥ ११४॥

BENGALI.—বিদ্যার অধিষ্ঠাত্রী দেবতা কোন অধ্যাপক ব্রাহ্মণের নিকটে আসিয়া বলিয়াছিলেন—আমি তোমার নিধিস্বরূপ, তুমি আমাকে পালন কর, আমাকে অসূয়াশীল পাত্রে অর্পণ করিও না, তাহা হইলে আমি অধিকতর বলশালিনী হইব। ১১৪।

ENGLISH.—(The goddess of) learning coming to a Brahman says:—"I am your treasure, guard me. Do not impart me to a spiteful man; then I shall be strongest." (114).

यमेव तु शुचिं विद्या नियतं ब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने॥ ११५॥

PROSE.—यं एव तु शुचिं नियतं ब्रह्मचारिणं विद्याः निधिपाय अप्रमादिने तस्मै विप्राय मां ब्रूहिः। ११५॥

KULLUKA.—यमिति। यमेव पुनः शिष्यं शुचिं नियतेन्द्रियं ब्रह्मचारिणं जानासि तस्मै विद्यारूपनिधिरक्षकाय प्रमादरहिताय मां वद॥ ११५॥

GRAMMAR.—1. यम् कर्म्मणि द्वितीया। Governed by विद्याः यम् is qualified by विप्राय विशेषणानि। 2. शुचिम्। 3. नियतम्। 4. ब्रह्मचारिणम्। 5. विद्याः विद्+याम्। वेत्ति विवेद विदाञ्चकार अवेदीत् विदाङ्क्रीत्। 6. निधिपाय qualifies विप्राय। नि—धा+कि। निधि—पा+क। 7. अप्रमादिने न प्रमादी अप्रमादी तस्मै अप्रमादिने नञ् समासः। प्र—माद्यतीति प्रमादी तस्मै। Qualifies विप्राय। 8. तस्मै qualifies विप्राय। 9. विप्राय क्रियाग्रहणमपि कर्त्तव्यमिति सम्प्रदानत्वात् चतुर्थी। 10. माम् Acc. of ब्रूहि। 11. ब्रूहि—ब्रू+हि। अवोचत् अवोचत।

*Change of voice.*—यः.........शुचिः नियतः ब्रह्मचारी विद्येत......अहं... उच्यं॥ ११५॥

BENGALI.—যাহাকে শুচি সংযতেন্দ্রিয় ব্রহ্মচারী জানিবে; বিদ্যারূপ নিধির প্রতিপালক সাবধান সেই বিপ্রের নিকট আমাকে উপদেশ দিবে। ১১৫।

ENGLISH.—"But impart me to that Brahman who guards his treasure, is never careless, and whom you may know to be a pure and self-restrained student observing the vow of celibacy." (115).

**ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्।**
**स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते॥ ११६॥**

PROSE.—यः तु अधीयानात् अननुज्ञातं ब्रह्म अवाप्नुयात् सः ब्रह्मस्तेयसंयुक्तः (सन्) नरकं प्रतिपद्यते॥ ११६॥

KULLUKA.—ब्रह्मेति। यः पुनरभ्यासार्थमधीयानात् अन्यं वा कञ्चिदध्यापयतस्तदनुमतिरहितं वेदं गृह्णाति स वेदस्तेययुक्तो नरकं गच्छति तस्मादेतन्न कर्त्तव्यम्॥ ११६॥

GRAMMAR.—1. यः Nom. verb अवाप्नुयात्। 2. अननुज्ञातम् may be taken as an adverb of अवाप्नुयात् or as an adj. of ब्रह्म। न अनुज्ञातं अननुज्ञातम्। 3. अवाप्नुयात् अव—आप+यात्। आपत्। 4. ब्रह्मस्तेयसंयुक्तः ब्रह्मणः स्तेयं ब्रह्मस्तेयं (षष्ठी) तेन संयुक्तः तृतीया समासः qualifies सः। स्तेनयति चोरयतीति स्तेनः। स्तेन+अच्। स्तेनस्य भावः स्तेयम्। स्तेन+यत् नलोपश्च। 5. प्रतिपद्यते प्रति—पद+लट् ते।

*Change of voice.*—येन...ब्रह्म अवाप्येत तेन...नरकः प्रतिपद्यते ॥ ११६ ॥

BENGALI.—কেহ অভ্যাসের জন্য বেদপাঠ করিতে থাকিলে অথবা অন্যকে পড়াইতে থাকিলে তদবস্থায় বিনা অনুমতিতে যে ব্যক্তি বেদ গ্রহণ করে, সে বেদ চুরি করার জন্য পাতকী হইয়া নরক প্রাপ্ত হয়। ১১৬।

ENGLISH.—He, who learns the Veda without permission from one reading or reciting it, is charged with theft of the Veda and goes to hell. (116).

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत् ॥ ११७ ॥

PROSE.—यतः लौकिकं वैदिकं वापि तथा आध्यात्मिकं एव च ज्ञानं आददीत तं पूर्व्वं अभिवादयेत् ॥ ११७ ॥

KULLUKA.—लौकिकमिति। लौकिकं अर्थशास्त्रादिज्ञानं वैदिकं वेदार्थज्ञानम् आध्यात्मिकं ब्रह्मज्ञानं यस्मात् गृह्णाति बहुमान्यमध्ये स्थितं तं प्रथममभिवादयेत्। लौकिकादिज्ञानदातृणामेव यथायथं समवाये यथोत्तरं मान्यत्वम् ॥ ११७ ॥

GRAMMAR.—1. यतः आख्यातोपयोगे पञ्चमी। 2. ज्ञानम् कर्म्मणि द्वितीया Acc. of आददीत। It is qualified by लौकिकम् वैदिकं and आध्यात्मिकम्। 3. लौकिकम् लोक+ठञ्। 4. वैदिकम् वेद+ठञ्। 5. आध्यात्मिकम् आत्मानमधिकृत्य अध्यात्मम् अव्ययीभावः टिलोपः by न तद्धिते। आध्यात्म+ठञ् आध्यात्मिकम्। 6. आददीत आङ्–दा+ईत। आदित। 7. तम् Acc. of अभिवादयेत्। 8. पूर्व्वम् adverb. 9. अभिवादयेत् अभि–वद+णिच्+यात्। न पादम्याङ्यम् इति सूत्रेण णिचि वदधातोः परस्मैपदनिषेधेऽपि "अकर्त्रभिप्राये परस्मैपदं स्यादेव" इति भट्टोजीव्याख्यानात् परस्मैपदम्।

*Change of voice.*—ज्ञानं...आदीयेत सः...अभिवाद्येत ॥ ११७ ॥

BENGALI.—যাঁহা হইতে লৌকিকজ্ঞান অর্থাৎ অর্থশাস্ত্র প্রভৃতির জ্ঞান, বৈদিকজ্ঞান, কি আধ্যাত্মিকজ্ঞান লাভ করা যায়, বহুমান্য ব্যক্তি মধ্যে বর্ত্তমান থাকিলেও তাঁহাদিগকেই অগ্রে অভিবাদন করিবে; (আর ঐরূপ তিনজনই উপস্থিত থাকিলে প্রথমতঃ আধ্যাত্মিক জ্ঞানদাতাকে, তৎপরে বৈদিক জ্ঞানদাতাকে, তৎপর লৌকিক জ্ঞানদাতাকে অভিবাদন করিবে)। ১১৭।

ENGLISH.—One should salute first him from whom he may acquire worldly, vedic, or spiritual knowledge. (117).

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्व्वाशी सर्व्वविक्रयी ॥ ११८ ॥

PROSE.—सुयन्त्रितः सावित्रीमात्रसारः अपि विप्रः वरं अयन्त्रितः सर्व्वाशी सर्व्वविक्रयी त्रिवेदः अपि न (वरम्) ॥ ११८ ॥

KULLUKA.—सावित्रीति। सावित्रीमात्रवेत्तापि वरं सुयन्त्रितः शास्त्रनियमितो विप्रादिर्मान्यः नायन्त्रितो वेदत्रयवेत्तापि निषिद्धभोजनादिशीलः प्रतिषिद्धविक्रेता च। एतच्च प्रदर्शनमात्रं सुयन्त्रितशब्देन विधिनिषेधनिष्ठत्वस्य विवक्षितत्वात् ॥ ११८ ॥

GRAMMAR.—1. सुयन्त्रितः सम्यक् यन्त्रितः सुयन्त्रितः। 2. सावित्रीमात्रसारः सावित्री एव सावित्रीमात्रम् तदेव सारो यस्य सः सावित्रीमात्रसारः बहुव्रीहि.। 3. वरम् क्लीवे मनाक्प्रिये इत्यमरः अल्पप्रियार्थः वरशब्दः क्लीबे वर्त्तते। qualifies विप्रः। 4. न यन्त्रितः अयन्त्रितः। 5. सर्व्वं अश्नातीति सर्व्वाशी। सर्व्व – अश + णिनि। 6. सर्व्वं कुत्सितं विक्रीणीते सर्व्वविक्रयी। सर्व्व – विक्री + इनिः। by कर्म्मण्येनिर्विक्रियः *i. e.* इनि is affixed to वि – क्री धातु preceded by accusative. कुत्सित ग्रहणं कर्त्तव्यं। 7. त्रिवेदः त्रयो वेदाः सन्ति यस्य स त्रिवेदः। बहुव्रीहिः। अजैषीत् अक्रेष्ट।

*Change of voice.*—विप्रेण वरेण भूयते त्रिवेदेन न वरेण भूयते ॥ ११८ ॥

BENGALI.—সুযন্ত্রিত অর্থাৎ শাস্ত্রোক্ত বিধিনিষেধের বশীভূত ব্রাহ্মণ গায়ত্রীমাত্র জানিলেও মান্য হইবেন, আর যিনি শাস্ত্রোক্ত বিধিনিষেধ মানেন না, নিষিদ্ধ বস্তু ভোজন করেন, নিষিদ্ধ বস্তু বিক্রয় করেন, তিনি ঋগ্‌ যজুঃ ও সাম এই তিনটি বেদ জানিলেও মান্য হইতে পারেন না। ১১৮ ॥

ENGLISH.—A Brahmin who knows but only the *Gayatri*, but who is thoroughly self-restrained is rather to be preferred ; but a Brahmin,—though he may know the three Vedas,—who is not self-restrained, who eats everything (i.e. prohibited food) and sells everything (i.e. prohibited things) is by no means to be preferred. (118).

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥ ११९ ॥

PROSE.—श्रेयसा अध्याचरिते शय्यासने न समाविशेत् शय्यासनस्थश्च (गुरौ आगते) प्रत्युत्थाय एनं अभिवादयेत् ॥ ११९ ॥

KULLUKA.—शय्येति। शय्या च आसनञ्च शय्यासनं जातिरप्राणिनामिति (द्वन्द्वैकवद्भाव:) तस्मिन् श्रेयसा विद्याद्यधिकेन गुरुणा चाध्याचरिते अस्वाधारत्वेन स्वीकृते तत्कालमपि नासीत। स्वयञ्च शय्यासनस्थो गुरावागते उत्थायाभिवादनं कुर्य्यात् ॥ ११९ ॥

GRAMMAR.—1. श्रेयसा कर्त्तरि तृतीया। प्रशस्य+ईयसु:। 2. अध्याचरिते अधि—आङ्—चर+क्त: कर्म्मणि। 3. शय्यासने शय्या च आसनञ्च शय्यासनम् जातिरप्राणिनामिति द्वन्द्वैकवद्भाव: तस्मिन् अधिकरणे सप्तमी। शी+क्यप्। आस+ल्युट् अधिकरणे। अप्रशिष्ट आविष्ट। 4. समाविशेत् सम्—आङ्—विश+यात्। 5. शय्यासनस्थ: शय्या च आसनञ्च: शय्यासनं द्वन्द्वैकवद्भाव: शय्यासने तिष्ठतीति शय्यासनस्थ:। शय्यासन—स्था+क:। 6. प्रत्युत्थाय—प्रति—उत्—स्था+ल्यप् सकारलोप:। 7. एनम् अन्वादेशे एनादेश:। Acc. of अभिवादयेत्।

*Change of voice.*—समाविश्येत शय्यासनस्थेन अधं अभिवाद्येत ॥ ११९ ॥

BENGALI.—বিদ্যা ও বয়সে শ্রেষ্ঠ গুরুজন যে শয্যা ও আসন নির্দ্দিষ্টভাবে অধিকার করেন, সেই শ্রেষ্ঠ ব্যক্তি তাহা পরিত্যাগ করিবার পরেও বিদ্যা ও বয়সে হীনতর ব্যক্তি তাহাতে শয়ন বা উপবেশন করিবে না; এবং স্বয়ং শয্যা বা আসনস্থ থাকা কালে তাদৃশ গুরুজন আগমন করিলে উত্থিত হইয়া তাঁহাকে অভিবাদন করিবে ॥ ১১৯ ॥

ENGLISH.—One should not sit on the very seat or bed occupied by his superiors, on the approach of superior, he if sitting on a seat or bed, should stand up by way of reception and salute him (by touching his feet). (119).

ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यून: स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यांपुनस्तान् प्रतिपद्यते ॥ १२० ॥

PROSE.—स्थविरे आयति (सति) यून: प्राणा: ऊर्द्ध्वं उत्क्रामन्ति (युवा) प्रत्युत्थानाभिवादाभ्याम् पुन: तान् प्रतिपद्यते ॥ १२० ॥

KULLUKA.—अस्यार्थवादमाह ऊर्द्ध्वमिति। यस्मात् यूनोऽल्पवयसो वयोविद्यादिना स्थविरे आयति आगच्छति सति प्राणा ऊर्द्ध्वमुत्क्रामन्ति देहाद्बहिर्निर्गन्तुमिच्छन्ति तान् स्वस्य प्रत्युत्थानाभिवादाभ्यां पुन: सुस्थान् करोति तस्मादस्वस्य प्रत्युत्थायाभिवादनं कुर्य्यात् ॥ १२० ॥

GRAMMAR.—1. स्थविरे यस्य च भावेन भावलक्षणमिति सप्तमी। स्था + किरच्। 2. आयति आ-इ+शतृ। सप्तमी पुर्व्वसूत्रेण उभयत्र। आयात्। 3. यूनः शेषे षष्ठी। युवन् युवा यूनः। 4. प्राणाः Verb उत्क्रामन्ति। 5. उत्-क्रम+अन्ति लट्। अक्रमीत्। 6. प्रत्युत्थानञ्च अभिवादञ्च प्रत्युत्थानाभिवादौ ताभ्याम् करणे तृतीया। 7. तान् Acc. of प्रतिपद्यते।

*Change of voice.*—प्राणैः उत्क्रम्यते (यूना) ते प्रतिपद्यन्ते॥ १२०॥

BENGALI.—বিদ্যা ও বয়সে স্থবির (জ্যেষ্ঠ) ব্যক্তি আগমন করিলে অল্পবয়স্ক ব্যক্তির প্রাণ দেহ হইতে বহির্গমন করিতে চাহে, আগত জ্যেষ্ঠ ব্যক্তিকে প্রত্যুত্থানপূর্ব্বক অভিবাদন করিলে কনিষ্ঠের প্রাণ পুনর্ব্বার সুস্থ হয়। অতএব জ্যেষ্ঠকে প্রত্যুত্থান ও অভিবাদন করিবে॥ ১২০॥

ENGLISH.—When an old man approaches, the vital breath of a youthful person moves upward (to pass out as it were). By rising up (for reception) and saluting (him) he gets it back (quieted down). (120).

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।**
**चत्वारि सम्प्रवर्द्धन्ते आयुर्व्विद्या यशो बलम्॥ १२१॥**

PROSE.—नित्यं अभिवादनशीलस्य वृद्धोपसेविनः आयुः विद्या यशः बलं चत्वारि संप्रवर्द्धन्ते॥ १२१॥

KULLUKA.—इदम्‌ फलवाह अभिवादनशीलस्येति। उत्थाय सर्व्वदा वृद्धाभिवादनशीलस्य वृद्धसेविनश्च आयुःप्रज्ञायशोबलानि चत्वारि सम्यक् प्रकर्षेण वर्द्धन्ते॥ १२१॥

GRAMMAR.—1. नित्यम् adv. connected with verbs in अभिवादनशीलस्य and वृद्धोपसेविनः। 2. अभिवादनशीलस्य अभिवादनं शीलं स्वभावो यस्य सः तस्य बहुव्रीहिः। 3. वृद्धोपसेविनः वृद्धान् उपसेवते इति वृद्धोपसेवी तस्य वृद्ध-उप-सेव+णिनिः। 4. आयुः। 5. विद्या। 6. यशः। 7. बलम् same case with चत्वारि used as noun. 8. चत्वारि its verb संप्रवर्द्धन्ते।

*Change of voice.*—आयुषा विद्यया यशसा बलेन चतुर्भिः संप्रवर्द्धयते॥ १२१॥

BENGALI.—সতত বৃদ্ধগণের অভিবাদক ও সেবাকারী ব্যক্তির আয়ু, বিদ্যা, যশ ও বল এই চারিটিই বৃদ্ধি পায়। ১২১।

ENGLISH.—The duration of life, knowledge, fame and strength. these four,—go on increasing of him who is ever in the habit of saluting and respectfully serving the old. (121).

**अभिवादात् परं विप्रो ज्यायांसमभिवादयन्।**
**असौनामाहमस्मीति स्वं नाम परिकीर्त्तयेत्॥ १२२॥**

PROSE.—ज्यायांसं अभिवादयन् विप्रः अभिवादात् परं असौनामा अहं अस्मीति स्वं नाम परिकीर्त्तयेत् or............असौ नाम अहं अस्मीति······॥ १२२॥

KULLUKA.—सम्प्रत्यभिवादनविधिमाह अभिवादात्परमिति। वृद्धमभिवादयन् विप्रादिरभिवादात् परम् अभिवादये इति शब्दोच्चारणानन्तरम् अमुकनामाहमस्मीति स्वं नाम परिकीर्त्तयेत् स्वकीयनामविशेषमुच्चारयेत्। अतो नामशब्दस्य विशेषपरत्वात् स्वनामविशेषोच्चारणानन्तरमभिवादनवाक्ये नामशब्दोऽपि प्रयोज्य इति मेधातिथिगोविन्दराजयोरभिधानप्रमाणम्। अतएव गौतमः स्वनाम प्रोच्याहमभिवादय इत्यभिवदेत्। सांख्यायनोऽप्यसावहम्भो इत्यात्मनो नामादिशेदित्युक्तवान्। यदि च नामशब्दश्रवणात्तत्प्रयोगस्तदा अकारश्चास्य नाम्नोऽन्ते इत्यभिधानात् प्रत्यभिवादनवाक्ये नामशब्दोच्चारणं स्यात् नच तत् कस्यचित् सम्मतम्॥ १२२॥

KULLUKA EXPLAINED.—अभिवादात्परम् = "अभिवादये इति शब्दोच्चारणानन्तरम्" After uttering the words I salute. "असौ-नामा has been taken by Kulluka as an irregular compound word, and he explains it as "अमुकनामा" नाम may however be taken separately, but then the desired meaning cannot be deduced.

GRAMMAR.—1. ज्यायांसम् Acc. of अभिवादयन् वृद्ध + ईयसु। 2. विप्रः Nom. to the verb कीर्त्तयेत्। 3. अभिवादात् अन्यारादिति पञ्चमी in connection with परम्। 4. असौ-नामा अदः नाम यस्य सः असौ-नामा (Irregular) बहुव्रीहिः। Or असौ अहम् and take नाम as separate, अव्ययम् which means अमुकेन नाम्ना प्रसिद्धः अहम्। 5. स्वम् qualifies नाम Acc. of परिकीर्त्तयेत्। 6. परिकीर्त्तयेत्—परि – कृत – णिच् स्वार्थे + यात्। कीर्त्तयति अचीकृतत् अचिकीर्त्तत्। कीर्त्यते।

*Change of voice.*—अभिवादयता विप्रेण असौ-नाम्ना मया भूयते इति नाम कीर्त्त्यत॥ १२२॥

BENGALI.—ব্রাহ্মণাদি বর্ণত্রয় বৃদ্ধকে অভিবাদন করিবার কালে "অভিবাদন করিতেছি" এই শব্দ উচ্চারণ করিবার অব্যবহিত পরেই "আমি অমুকনামা ( ব্যক্তি ) হই" ইহা বলিয়া নিজের নাম উচ্চারণ করিবে। ( অর্থাৎ "অভিবাদন করি, আমি যজ্ঞদত্ত শর্ম্মা" এরূপ বলিবেন ॥ ১২১ ॥

ENGLISH.—A Brahmin saluting an old man should after salutation utter his own name thus, "I am so and so, i.e., my name is so and so." (122).

**नामधेयस्य ये केचिदभिवादं न जानते ।**
**तान्प्राज्ञोऽहमितिब्रूयात्स्त्रियःसर्व्वास्तथैवच ॥ १२३ ॥**

PROSE.—ये केचित् नामधेयस्य अभिवादं न जानते ; प्राज्ञः तान् ( अभिवादये ) अहमितिब्रूयात् सर्व्वाः स्त्रियः तथैव ब्रूयात् ॥ १२३ ॥

EXPL.—ये केचित् अभिवाद्याः जनाः नामधेयस्य उच्चारितस्य अभिवादं अभिवादये यज्ञशर्म्माहं इत्यस्य अर्थं संस्कृतानभिज्ञत्वात् न जानते बोद्धुं न शक्नुवन्ति तान् अभिवादनीयान् जनान् प्राज्ञः विद्वान् अहमिति अर्थात् अभिवादये अहं इतिमात्रं न तु स्वकीयनामोच्चारणपूर्व्वकम् ब्रूयात् तथा अभिवादनीयाः सर्व्वाः स्त्रियः ब्रूयात् अभिवादनकाले इत्यर्थः ॥ १२३ ॥

KULLUKA.—नामधेयस्येति । नामधेयस्य उच्चारितस्य सतो ये केचिदभिवाद्याः संस्कृतानभिज्ञतया अभिवादार्थं न जानन्ति तान् प्रत्यभिवादनेऽप्यसमर्थत्वात् प्राज्ञ प्रत्यभिवाद्यथा भविज्ञोऽभिवादयिता अभिवादयेऽहमित्येवं ब्रूयात् स्त्रियः सर्व्वास्तथैव ब्रूयात् ॥ १२३ ॥

GRAMMAR.—1. केचित् Nom. to the verb जानते । 2. नामधेयस्य शेषे षष्ठी । नाम+धेय स्वार्थे । 3. अभिवादम् Acc. of जानते । अभि+वद+घञ् । 4. प्राज्ञः जानातीति ज्ञः विशेषेणज्ञः प्रज्ञः स्वार्थे अण् । 5. तान् गौणकर्म्म of ब्रूयात् ब्रूधातोर्द्विकर्म्मकत्वात् अहमिति वाक्यार्थः मुख्यं कर्म्म । 6. सर्व्वाः qualifies स्त्रियः । 7. स्त्रियः गौणं कर्म्म of ब्रूयात् । In the accusative case plural we have स्त्रीः as well as स्त्रियः by वाम्शसोः i. e. अमि शसि च विभक्तौ स्त्रीशब्दस्य इयङ् वा स्यात् । स्त्रीं स्त्रियम्—स्त्रियौ, स्त्रियः स्त्रीः । 8. ब्रूयात् । ब्रूञ्+यात् । आशीर्षत् ।

*Change of voice.*—यैः केचित् अभिवादः न ज्ञायते तै प्राज्ञेन अहमिति उच्येरन् सर्व्वाः स्त्रियः तथा उच्येरन् ॥ १२२ ॥

BENGALI.—যদি অভিবাদনীয় ব্যক্তি উচ্চারিত নামসহযোগে অভিবাদনের অর্থ বুঝিতে না পারেন, তবে তাঁহাকে "আমি অভিবাদন করি" এইমাত্র বলিবে; অভিবাদন যোগ্য স্ত্রীলোকদিগকেও ঐরূপ বলিবে ॥ ১২৩ ॥

ENGLISH.—A wise man should address those who do not understand the meaning of the same so uttered, in the following form :—"I bow to you". And he should address all women (deserving of respect) in the same way. (123).

भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥ १२४ ॥

PROSE.—अभिवादने स्वस्य नाम्नः अन्ते भोःशब्दं कीर्त्तयेत्, भोभावः हि ऋषिभिः नाम्नां स्वरूपभावः स्मृतः॥ १२४ ॥

KULLUKA.—भोः शब्दमिति अभिवादने यन्नाम प्रयुक्तं तस्यान्ते भोः शब्दं कीर्त्तयेत् अभिवाद्यसम्बोधनार्थम् अतएवाह नाम्नामिति भो इत्यस्य यो भावः सत्ता सोऽभिवाद्यनाम्नां स्वरूपभाव ऋषिभिः स्मृतः। तस्मादेवमभिवादनवाक्यम् अभिवादये शुभशर्म्माहमस्मि भोः॥ १२४ ॥

KULLUKA EXPLAINED.—नाम्नां = "अभिवाद्यनाम्नाम्" अभिवादनीयस्य "नाम्नां स्वरूपभावः" स्वरूपस्य अवस्थानिर्देशः अर्थात् भोः शब्दः अभिवादनीयजनस्य नाम्नः प्रतिनिधिरेव। भोःशब्दप्रयोगेन अभिवादनं अभिवाद्यस्य जनस्य नाम्ना एव आह्वानं भवेत्।

GRAMMAR.—1. अभिवादने विषयाधारे सप्तमी। 2. स्वस्य शेषे षष्ठी। 3. नाम्नः शेषे षष्ठी। 4. अन्ते अधिकरणे सप्तमी। 5. भोः शब्दम् Acc. of कीर्त्तयेत् भोः इति शब्दः। भोःशब्दः कर्म्मधारयः। तम्। 6. भोभाव भोः इत्यस्य भावः भोभावः षष्ठीसमासः। Same case with स्वरूपभावः। भोस् is the word. It becomes भोः। भोः+भावः=भोभावः by हलि सर्व्वेषाम् अर्थात् सर्व्वेषां मतेन हलि परे स स्थानीय रुकारजात यकारस्य लोपः स्यात्। किन्तु भोः अच्युत becomes भोय् अच्युत and then भोयच्युत। भोः देवाः यकार drops we get भो देवाः। 7. भोःशब्दम् भोः इति शब्दः भोःशब्दः कर्म्मधारयः। तम्। भोस्+शब्दः=भोः शब्दः भोः remains as it was, because श is not अश् vide भो भगो अघो अपूर्व्वस्य योऽशि। 8. ऋषिभिः कर्त्तरि तृतीया। 9. नाम्नाम् शेषे षष्ठी। 10. स्वरूपभावः स्वं रूपं स्वरूपं तस्य भावः।

*Change of voice.*—भोःशब्दः कीर्त्त्यते। भोभावेन...स्वरूपभावेन ऋषिभिः स्मर्यते ॥ १२४ ॥

BENGALI.—অভিবাদনকালে অভিবাদনকারী ব্যক্তি নিজ নামের পরে ভোঃ শব্দ উচ্চারণ করিবে, কেননা ঋষিগণ বলিয়াছেন, অভিবাদনে ভোঃ শব্দের সত্তা অভি-বাদনীয় ব্যক্তির নামের রূপ বিশেষ বলিয়া গণ্য। অতএব অভিবাদনকালে "অভি-বাদয়ে অমুক শর্ম্মাঽহমস্মি ভোঃ" এইরূপ বলিবে ॥ ১২৪ ॥

ENGLISH.—In (the time of) saluting, one should mention the word "Bhoh," (oh), after having uttered his own name. The existence or mention of the word "Bhoh" is looked upon by sages as a representative of the name (of the person addressed). (124).

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः ॥ १२५ ॥

PROSE.—अभिवादने (कृते सति) विप्रः आयुष्मान् भव सौम्येति वाच्यः, अस्य नाम्नः अन्ते अकारश्च पूर्व्वाक्षरः प्लुतः कार्य्यः ॥ १२५ ॥

EXPL.—अभिवादने अभिवादकेन अभिवादने कृते सति, विप्रः अभिवादकः विप्रादिः, आयुष्मान् चिरायुः, भव सौम्य शोभन इति वाच्यः वक्तव्यः अभिवादनीयेन जनेन, अस्य अभिवादकस्य नाम्नः अन्ते वर्त्तमानः अकारः अकारादिस्वरः, अन्ते व्यञ्जने सति पूर्व्वाक्षरः व्यञ्जनात् पूर्व्ववर्त्ती स्वरः प्लुतः त्रिमात्राविशिष्टः कार्य्यः करणीयः। अकारग्रहणेन स्वरमात्रं उपलक्षितम् ॥ १२५ ॥

KULLUKA.—आयुष्मानिति। अभिवादने कृते प्रत्यभिवादयिता अभिवादको विप्रादिः आयुष्मान् भव सौम्येति वाच्यः। अस्य चाभिवादकस्य यन्नाम तस्यान्ते योऽकारादिः स्वरो नाम्नामकारान्तत्वनियमाभावात् स प्लुतः कार्य्यः स्वरापेक्षये-दकाराद्यन्तत्वं व्यञ्जनान्तेऽपि नाम्नि सम्भवति पूर्व्वं नामगतमक्षरं संश्लिष्टं यस्य स पूर्व्वाक्षरः तेन नामान्त्यव्यञ्जनस्य चाकारादिः स्वरः प्लुतः कार्य्यः। एतच्च वाक्यस्य टेः प्लुतः उदात्त इत्यस्यानुवृत्तौ प्रत्यभिवादे अशूद्रे इति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्। व्याख्यातञ्च वृत्तिकृता वामनेन टेरिति किं व्यञ्जनान्तस्यैव टेः प्लुतो यथा स्यादिति तस्मादीदृशं प्रत्यभिवादनवाक्यम् आयुष्मान् भव सौम्य शुभशर्म्मन् एवं क्षत्रियस्य बलवर्म्मन् एवं वैश्यस्य वसुभूते। प्लुतो राजन्यविशां वेति कात्यायनवचनात् क्षत्रिय-वैश्ययोः पक्षे प्लुतो न भवति। शूद्रस्य प्लुतो न कार्य्यः, अशूद्र इति पाणिनिवचनात्। स्त्रियामपि निषेध इति कात्यायनवचनात् स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः गोविन्दराजस्तु आयुष्मान् नाम्नि सर्व्वोपपदं नित्यं प्रागभिधाय प्रत्यभिवादनवाक्ये आयु-

आन् भव सौम्य भद्र इति निहपदोदाहरणसोपपदोदाहरणानभिहतनैव नि॰ आपयति । धरणीधरोऽपि आयुष्मान् भव सौम्येति सम्बुद्धिविभक्त्यन्तं मनुवच॰ पद्यमपि असम्बुद्धिप्रथमैकवचनान्तम् अमुकशर्म्मा इत्युदाहरन् विषयपैरप्युपेक्षणीय एव ॥ १२५ ॥

KULLUKA EXPLAINED.—Panini's Grammar is held as a स्मृति:, Sankaracharya on more than one occasion cites Panini's Sutras as "इति पाणिनि स्मृते: ।" Hence Kulluka Bhatta cites Panini and Katyayana as supplementing Manu's code here. Manu lays down "नाम्नां अन्ते अकार: पूर्व्वाक्षरो वा यथाप्रागं प्लुत: कार्य्य: ।" Panini lays down वाक्यस्य टे: प्लुत उदात्त: प्रत्यभिवादेऽशूद्रे । *i. e.* when a Sudra is not the saluter, the टि: of the सम्बोधनवाक्य should be प्लुत: and उदात्त: । Brittikar explains टि: as व्यञ्जनान्तस्यैव टे: स्वरान्तस्य तु स्वर एव टि: । Panini prohibits प्लुतता as to the Sudra, Katyayana prohibits प्लुतता in the case of females also. प्लुतता of a Khatriya and Vaishya saluter's name is optional. Thus Manu and Panini together make the injunctions complete.

आयुष्मान् भव देवदत्त३ । आयुष्मान् भव इन्द्रवर्म्मन्३ । आयुष्मान् भव इन्द्रपालित३ । The figure 3 indicates प्लुतता, underlining indicates उदात्त स्वरता । It will be प्लुत and उदात्त both. अकार: here indicates vowels generally.

GRAMMAR.—1. आयुष्मान् आयुस्+मतुप् । स–उसि षित् । विशेष-विशेषण of त्वम् understood. 2. सौम्य सम्बोधनेच इति प्रथमा । 3. वाच्य: वच्+ण्यत् । शब्दसंज्ञायां वाक्यम् । कर्म्मणि ; गौण कर्म्म being विप्र: which is उक्त or expressed by ण्यत् here. मुख्यं कर्म्म वाक्यार्थ इतिशब्दगम्य: । 4. अभिवादने भावे सप्तमी । 5. अस्य शेषे षष्ठी refers to अभिवादकस्य understood. 6. नाम्न: शेषे षष्ठी । 7. अन्ते अधिकरणम् of विद्यमान: क्रिया understood which is connected with अकार: । 8. अकार:. Acc. of वाच्य: अ+कार: । 9. पूर्व्वाक्षर: पूर्व्वं अक्षरं संश्लिष्टं यस्य स पूर्व्वाक्षर: qualifies अकार: which means स्वरमात्रम् । 10. प्लुत: प्लु+क्त: कर्त्तरि । प्लुत: is defined उकालोऽज्झ्रस्वदीर्घप्लुत: *i. e.* vowels which may be

measured short, long and prolated just like উ as uttered by a cock when crowing "উ–ঊ–ঊ" are called respectively হ্রস্ব, দীর্ঘ and প্লুত। Hence we have অ–আ–অ, ই–ঈ–ই. We may note here that according to Panini the vowels are classified as হ্রস্ব, দীর্ঘ প্লুত, উদাত্ত অনুদাত্ত স্বরিত, and সানুনাসিক, নিরনুনাসিক। They are altogether 132 in number. We have ১৮ অ, ১৮ ই, ১৮ উ, ১৮ ঋ, ১২ ৯ as it has no দীর্ঘ, ১২ এ, ১২ ঐ, ১২ ও, ১২ ঔ as they have no হ্রস্ব। Thus there are 132 vowels, of these only প্লুত is referred to in the text. Therefore it is inaccurate to say that there are only 14 vowels as stated in Kaláp "তত্রাদৌ চতুর্দ্দশ স্বরাঃ"। This was done to meet ordinary cases.

*Change of voice.*—বাচ্যেন বিপ্রেণ ভূয়নী...অকারেণ পূর্ব্বাক্ষরেণ প্লুতেন বাচ্যেন ভূয়নী ॥ ১২৫ ॥

BENGALI.—অভিবাদন করা হইলে, অভিবাদ্য ব্যক্তি অভিবাদনকারীকে হে সৌম্য দীর্ঘায়ুঃ হও এই কথা বলিবেন, এবং অভিবাদনকারীর নাম স্বরান্ত হইলে নামের অন্ত্য স্বর, এবং নাম ব্যঞ্জনান্ত হইলে অন্ত্য ব্যঞ্জনবর্ণের পূর্ব্ববর্ত্তী স্বর প্লুত উচ্চারণ করিবেন। (অভিবাদনকারী ব্রাহ্মণ হইলে বলিবে "আয়ুষ্মান্ ভব শুভশর্ম্ম3ন্," ক্ষত্রিয় হইলে "আয়ুষ্মান্ ভব বলবর্ম্ম3ন্," বৈশ্য হইলে বলিবে "আয়ুষ্মান্ ভব বসুভূ3তে। ক্ষত্রিয় ও বৈশ্যের নামে বিকল্পে প্লুত হইবে না। অভিবাদনকারী শূদ্র ও স্ত্রীলোকের নামান্তস্বর কোমল ও প্লুত উচ্চারণ করিয়া প্রত্যভিবাদন করিবে না। প্রত্যভিবাদন বাক্যে অভিবাদকের নাম ও গোত্র উল্লিখিত না হইলে প্লুত হইবে না। আয়ুষ্মান্ এধি। দ্বিজাতি অভিবাদকের নামের পরিবর্ত্তে ভোঃ শব্দ ব্যবহার করিলে ভোঃ প্লুত হইবে। আয়ুষ্মান্ এধি ভোঃ)। ১২৫ ॥

ENGLISH.—When salutation is made, a Brahmin should be addressed in return thus :—"May you have a long life, good one" and the final vowel such as *a* &c., of his name, and (in the case of the name ending in a consonant) the vowel preceding last consonant should be pronounced as a prolated vowel. (125).

**यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।**
**नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥ १२६ ॥**

PROSE.—यः विप्रः अभिवादस्य प्रत्यभिवादनं न वेत्ति स विदुषा न अभिवाद्यः यथा शूद्रः स तथा एव॥ १२६ ॥

KULLUKA.—यो न वेत्तीति। यो विप्रोऽभिवादनस्यानुरूपं प्रत्यभिवादनं न जानाति असावभिवादनविदुषापि स्वनामोच्चारणाद्युक्तविधिना शूद्र इव नाभिवाद्यः। अभिवादयेऽहमिति शब्दोच्चारणमात्रन्तु चरणग्रहणादिकृत्यमनिषिद्धं प्रागुक्तत्वात् ॥ १२६॥

GRAMMAR.—1. अभिवादस्य शेषे षष्ठी। 2. प्रत्यभिवादनम् Acc. of वेत्ति।

*Change of voice.*—येन विप्रेण...प्रत्यभिवादनं न विद्यते तेन अभिवाद्येन न यथा शूद्रेण तेन तथा भूयते ॥ १२६ ॥

BENGALI.—যে ব্যক্তি অভিবাদনের অনুরূপ প্রত্যভিবাদন জানেনা বিদ্বান্ ব্যক্তি তাহাকে উক্ত নিয়মে অভিবাদন করিবেন না, শূদ্র যেরূপ তাহাকে সেইরূপ জানে চরণস্পর্শ না করিয়া আমি অভিবাদন করি এই কথা মুখে উচ্চারণ করিয়া একটু অবনত হইবে মাত্র ॥ ১২৬ ॥

ENGLISH.—A Brahmin who does not know how to return the salutation should not be greeted by a learned man. He is as good as a *Sudra*. (126).

**ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।**
**वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ १२७ ॥**

PROSE.—समागम्य (समानवयस्कं अनभिवादकं अपि) (अवरवयस्कं अभिवादकं ब्राह्मणं च) कुशलं, क्षत्रबन्धुं अनामयं वैश्यं क्षेमं, शूद्रं आरोग्यं पृच्छेत् ॥ १२७ ॥

KULLUKA.—ब्राह्मणमिति। समागम्य समागमे कृते अभिवादकमवरवयस्कं समानवयस्कम् अनभिवादकमपि ब्राह्मणं कुशलं क्षत्रियमनामयं वैश्यं क्षेमं शूद्रमारोग्यं पृच्छेत्। अतएव आपस्तम्बः कुशलमवरवयसं समानवयसं वा विप्रं पृच्छेत्, अनामयं क्षत्रियं क्षेमं वैश्यम् आरोग्यं शूद्रम्, अवरवयसमभिवादकं वयस्यमनभिवादकमपीति, मन्वर्थमेवापस्तम्बः स्फुटयति स्म। गोविन्दराजस्तु प्रकरणात् प्रत्यभिवादकस्यैव कुशलादिप्रश्नमाह, तन्न अभिवादकेन सह समागमस्यार्थप्राप्तत्वात् समागम्येति निष्प्रयोजनानुवादप्रसङ्गात्। अत्र कुशलक्षेमशब्दयोरनामयारोग्यपदयोश्च समानार्थत्वाच्छब्दविशेषोच्चारणमेव विवक्षितम् ॥ १२७ ॥

GRAMMAR.—1. समागम्य सम्–आ–गम+ल्यप्। 2. ब्राह्मणम्। 3. अनु-

बन्धुम्। 4. वैश्यम्। 5. शूद्रम् All गौणकर्म्म of पृच्छेत्। यथा बन्धवो यस्य स-बन्धुः निङ्ख्यवस् इति, मुख्यार्थः अत्र चनियमाम्। 6. कुशलम्। 7. अना-मयम्। 8. क्षेमम्। 9. आरोग्यम् All मुख्यकर्म्म of पृच्छेत् आमयस्य अभावः अनामयः अभिवाद इतिवत् अव्ययीभावेन सह तत्पुरुषस्य विकल्पः अव्ययीभावे अनामयम्। न विद्यते रोगो यस्य स अरोगः बहुव्रीहिः। तस्य भावः आरोग्यम्। अरोग+ष्यञ्। 10. पृच्छेत् प्रच्छ+यात्। अप्राक्षीत्।

*Change of voice.*—ब्राह्मणः कुशलम् चत्रबन्धुः अनामयम् वैश्यः क्षेमम् शूद्रः आरोग्यम् पृच्छ्यात्॥ १२७॥

BENGALI.—সমাগম হইবার পরে অভিবাদন না করিলেও সমানবয়স্ক এবং অভিবাদক অবরবয়স্ক ব্রাহ্মণকে কুশল, ক্ষত্রিয়কে অনাময়, বৈশ্যকে ক্ষেম এবং শূদ্রকে আরোগ্য জিজ্ঞাসা করিবে। (অর্থাৎ কুশল, অনাময়, ক্ষেম ও আরোগ্য শব্দ একার্থ-বাচক হইলেও ভিন্ন ভিন্ন বর্ণকে শাস্ত্রোক্ত ভিন্ন ভিন্ন শব্দে মঙ্গল জিজ্ঞাসা করিবে)॥ ১২৭॥

ENGLISH.—After meeting, a Brahmin should be inquired about his health with the word *Kusala* (welfare); a Kshatriya with the word *anamaya* (want of disease); a *Vaisya* with the word, *Kshema* and a *Sudra* with the word *Arogya* (the state of being free from diseases). (127).

## अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्।
## भोभवत्पूर्व्वकन्त्वेनमभिभाषेत धर्म्मवित्॥ १२८॥

PROSE.—यवीयान् अपि यः दीक्षितः भवेत् (सः) नाम्ना अवाच्यः, धर्म्मवित् एनं भोभवत्पूर्व्वकं अभिभाषेत॥ १२८॥

KULLUKA.—अवाच्य इति। प्रत्यभिवादनकाले अन्यदा च दीक्षणीयात: प्रभृत्यावभृथस्नानात् कनिष्ठोऽपि दीक्षितो नाम्ना न वाच्यः। किन्तु भोभवच्छब्दपूर्व्वकं दीक्षितादिशब्दैरन्तत्कर्षाभिधायिभिरेव धार्म्मिकोऽभिभाषेत। भो दीक्षित इदं कुरु भवता यजमानेन इदं क्रियतामिति॥ १२८॥

GRAMMAR.—1. यवीयान् युवन्+ईयसु। 2. दीक्ष्+क्तः or दीक्षा+इतच्। 3. नाम्ना प्रकृत्यादिभ्यस्तृतीया। 4 अवाच्यः न वाच्यः प्रसज्यप्रतिषेधस्य समासः। 5. धर्म्मवित् धर्म्मं वेत्तीति धर्म्मवित् उपपद समासः धर्म्म+विद+क्विप्। 6. एनम् अन्वादेशे एनादेशः Acc. of अभिभाषेत। 7. भो भवत् पूर्व्वकम् Adv. added to अभिभाषेत। भोश्च भवत् च पूर्व्वे यस्मिन् तद् यथा स्यात् तथा

बहुव्रीहिः। भोस् शब्दस्य सकारस्य लोपः हलि परे इति विसर्गाभावः।
8. अभिभाषेत अभि — भाष + ईत।

*Change of voice.*—यवीयसा...येन दीक्षितेन भूयते तेन नाम्ना अवाच्येन भूयते धर्म्मविदा अयं अभिभाष्येत ॥ १२८ ॥

BENGALI.—বয়সে কনিষ্ঠ ব্যক্তি দীক্ষিত হইলে ( অর্থাৎ কোন যজ্ঞ শেষ করিয়া অবভৃথ স্নান করিলে ) প্রত্যভিবাদন কালেই হউক, কি অন্য সময়েই হউক, তাহার নাম উচ্চারণ করিয়া কথা বলিবে না, কিন্তু ধার্ম্মিক ব্যক্তি এইরূপ ব্যক্তিকে ভো ও ভবৎ শব্দ উচ্চারণে সম্ভাষণ করিবেন; যথা "ভো দীক্ষিত, যজমান মহাশয়, এরূপ করুন," এইরূপ বলিবে ॥ ১২৮ ॥

ENGLISH.—A person who has got initiated into a sacrifice should not be called by his name, though he may be junior in age. A pious man conversant with rules should address him with the words "Bhoh" (oh), and "Bhavat" (your Honour). (128).

## परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः।
## तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १२९ ॥

PROSE.—या स्त्री परपत्नी योनितः च असम्बन्धा तां भवति इत्येवं सुभगे भगिनी इति च ब्रूयात् ॥ १२९ ॥

KULLUKA.—परपत्नी त्विति। या स्त्री परपत्नी भवति असम्बन्धा च योनित इति स्वस्रादिर्न भवति तामनुपयुक्तसम्भाषणकाले भवति सुभगे भगिनीति वा वदेत्। परपत्नीग्रहणात् कन्यायां नैव विधिः। स्वसुः कन्यादित्वायुष्मत्यादिपदैरभिभाषणम् ॥ १२९ ॥

GRAMMAR.—1. परपत्नी परस्य पत्नी परपत्नी। पत्युर्नो यज्ञसंयोगे इति नुक् ङीप्। रूपं नदीशब्दवत्। शूद्रस्य तु पत्नीव पत्नी यज्ञसंयोगाभावात्। रूपं पत्नी पत्न्यौ पत्न्यः इत्यादि। नव — पति + नी निपातनात् ( Bhattoji ).
2. असम्बन्धा न विद्यते सम्बन्धः यस्याः सा बहुव्रीहिः। 3. योनितः करणे तृतीया। 4. ताम् गौणं कर्म्म of ब्रूयात्। 5. मुख्यं कर्म्म भवतीत्येवम् सुभगे भगिनीति च इति वाक्यार्थः। 6. भवति सम्बोधने प्रथमा। भा + डवतु भवती। भू + शतृ = भवन्ती। 7. सुभगे सु शोभनो भगः ऐश्वर्य्यं यस्याः सा सुभगा। सम्बोधने। 8. भगिनि भग + इनि + ङीप्। सम्बोधने प्रथमा। भगिन्यादि शा-र्ङ्गरवादिगणमिति शौण्डादिसूत्रे प्राप्तम्। वस्तुतस्तु भगशब्दः मुख्यार्थे तथापि शाङ्गरवादिगण इति शौण्डादि सूत्रेणावगम्यते। एवं भगवदादिशब्दाश्च।

*Change of voice.*—परपत्न्या यया असम्बन्धया सुभैन वा......... इत्येत ॥ १२९ ॥

BENGALI.—যে স্ত্রী পরের পত্নী অথচ যিনি ভগিনী প্রভৃতি সম্বন্ধান্বিত নহেন, সম্ভাষণকালে তাহাকে "ভবতি" "সুভগে" অথবা "ভগিনি" বলিয়া সম্বোধন করিবে। যাহার পরিণয় হয় নাই সেই কন্যার প্রতি এরূপ সম্বোধন করিবে না। ভগিনীর কন্যা প্রভৃতিকে আয়ুষ্মতি প্রভৃতি শব্দে সম্বোধন করিবে। ১২৯।

ENGLISH.—A woman, who is another man's wife, and is not related by birth, should be addressed as "respected madam," "good lady" or "sister" (129).

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ १३० ॥

PROSE.—यवीयसः मातुलान् पितृव्यान् च श्वशुरान् ऋत्विजः गुरून् प्रत्युत्थाय असौ अहम् इति ब्रूयात् ॥ १३० ॥

KULLUKA.—मातुलांश्चेति। मातुलादीन् आगतान् कनिष्ठान् आसनादुत्थाय असावहमिति वदेत् नाभिवादयेत् असाविति स्वनामनिर्देशः। भूयिष्ठाः खलु गुरव इत्युपक्रम्य मानवकृतपारम्पर्योरपि हारीतेन गुरुत्वकीर्तनात् तयोश्च कनिष्ठयोरपि सम्भवात् तद्विषयोऽयं गुरुशब्दः॥ १३० ॥

GRAMMAR.—1 यवीयसः युवन्+ईयसुः। Qualifies मातुलान् &c. &c. 2 मातुलान् Acc. of ब्रूयात्। मातृ+डुलच्। मातुर्भ्राता। 3. पितृव्यान् पितुर्भ्राता पितृव्यः। पितृ+व्यत्। By पितृव्य मातुल मातामह पितामहाः। 4. श्वशुरान् शु (आशु)-अशूङ् धातु+उरन् by शावशेराप्तौ। श्वशुरः। 5. ऋत्विजः ऋतु+यज+क्विप् ऋतुमती वा यजन्तीति ऋत्विजः तान्। 6. गुरून् Acc. of ब्रूयात्। 7. प्रति-उत्-स्था+ल्यप्। 8. असौ qualifies अहम् Nom. to the verb भवामि undetstood। 9. इति मुख्यं कर्म of ब्रूयात्।

*Change of voice.*—यवीयांसः मातुलाः पितृव्याः श्वशुराः ऋत्विजः गुरवः......इति उच्येरन् ॥ १३० ॥

BENGALI.—বয়ঃকনিষ্ঠ মাতুল, পিতৃব্য, শ্বশুর, পুরোহিত, ও জ্ঞানবৃদ্ধ তপোবৃদ্ধ গুরুর আগমনে গাত্রোত্থান করিয়া আমি অমুক এইরূপে নিজের নাম উচ্চারণ করিবে কিন্তু পাদ গ্রহণ পূর্ব্বক অভিবাদন করিবে না। ১৩০।

ENGLISH.—One should rise up for reception and say 'I am so and so" (but not touch the feet of) maternal uncles, father's

brothers, fathers-in-law, priests and preceptors who are junior in age. (130).

मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा।
सम्पूज्या गुरुपत्नीवत् समास्ता गुरुभार्य्यया॥ १३१॥

PROSE. – मातृष्वसा मातुलानी पितृष्वसा अथ श्वश्रूः गुरुपत्नीवत् पूज्या (यतः) ताः गुरुभार्य्यया समाः॥ १३१॥

KULLUKA. – मातृष्वसेति। मातृष्वसादयो गुरुपत्नीवत् प्रत्युत्थानाभिवादनासनदानादिभिः सम्पूज्याः। अभिवादनप्रकरणादभिवादनमेव सम्पूजनं विज्ञायते इति समास्ता इत्यवोचत् गुरुभार्य्यासमानत्वात् प्रत्युत्थानादिकमपि कार्य्यमित्यर्थः॥ १३१॥

GRAMMAR.—1. मातुःष्वसा मातृष्वसा पक्षे मातुःष्वसा। षष्ठ्या विकल्पे अलुक् by विभाषा स्वसृपत्योः। षष्ठी having स्वसृ and पति after it elides optionally in a compound. Thus मातृष्वसा and मातुःष्वसा are both compounds. मातृष्वसा here स् becomes ष by मातृपितृभ्यां स्वसा *i. e.* स becomes ष when स्वसृ is compound with मातृ and पितृ and षष्ठी is not retained. But when षष्ठी drops optionally and it is a compound still we have मातुःस्वसा and मातुःष्वसा by मातुःपितुर्भ्यामन्यतरस्याम्; in such अलुक् समास स becomes ष optionally when placed after माता and पिता। When there is no compound, we have मातुःस्वसा, पितुःस्वसा in which case no question of षत्व arises. 2. Similarly पितृष्वसा—we have (a) पितुःस्वसा पितृष्वसा पितुः—स्वसा, पितुः–ष्वसा। 3. मातुलानी मातुर्भ्राता मातुलः मातृ + डुलच्। मातुलस्य पत्नी मातुलानी आनुक by इन्द्र वरुणभव &c. &c. ङीष् by पुंयोगादाख्यायाम्। 4. श्वश्रूः श्वशुरस्य पत्नी श्वश्रूः। श्वशुर + ऊङ् then श्वशुरस्योकाराकार लोपश्च। 5. गुरुपत्नीवत् गुरोः पत्नी गुरुपत्नी षष्ठी समासः पत्युर्नो यज्ञसंयोगे इति स्त्रियां पत्नी ङीप्। गुरुःपतिर्यस्या इति विग्रहेतु बहुव्रीहौ गुरपत्नी or गुरुपतिः but that is not the meaning here. गुरुपत्नी + वति तेनतुल्यं क्रियाचेद्वतिरिति। 6. संपूज्याः सम् – पूज + य + कर्म्मणि। 7. ता Nom. to भवन्ति understood. 8. गुरुभार्य्यया-तृतीया by तुल्यार्थै रतुलोपमाभ्यां तृतीया अन्यतरस्याम्। पक्षे षष्ठी। Connected with तुल्यार्थक word समाः गुरोर्भार्य्या गुरुभार्य्या षष्ठी समासः। भृ + ण्यत् भार्य्यः भरणीय स्त्रियां भार्य्या।

*Change of voice.*—मातृष्वसा.........संपूज्याभिः पूज्यते। ताभिः... समाभिः पूज्यते ॥ १३१ ॥

BENGALI.—মাসী, মাতুলানী, পিসি ও শাশুড়ীকে জননীবৎ পাদগ্রহণপূর্ব্বক প্রণাম করিবে; কেননা ইহারা সকলেই মাতার তুল্য ইহারা আগমন করিলে প্রত্যুত্থান করিবে ॥ ১৩১ ॥

ENGLISH.—A mother's sister, a maternal uncle's wife, mother-in-law, and father's sister are to be respected like the wife of a *Guru* or a teacher of the Vedas...They are equal to the wife of a *Guru.* (131).

**भ्रातुर्भार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि।**
**विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ १३२ ॥**

PROSE.—सवर्णा भ्रातुःभार्य्या अहनि अहनि अपि उपसंग्राह्या ज्ञातिसम्बन्धियोषितः तु विप्रोष्य उपसंग्राह्याः ॥ १३२ ॥

KULLUKA.—भ्रातृभार्य्येति। भ्रातुः सजातीया भार्य्या ज्येष्ठा, पूजाप्रकरणात् उपसंग्राह्या पादयोरभिवाद्या अहन्यहनि प्रत्यहमेव अविप्रोष्यापि ज्ञातयः पितृपक्षाः पितृव्यादयः सम्बन्धिनो मातृपक्षाः श्वशुरादयः तेषां पत्न्यः पुनर्व्विप्रोष्य प्रवासात् प्रत्यागतैरेव अभिवाद्याः न तु प्रत्यहं नियमः ॥ १३२ ॥

GRAMMAR.—1. सवर्णा समानो वर्णो यस्याः सा सवर्णा। बहुव्रीहिः समानस्य सः by "ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु" एषु शब्देषु उत्तरपदेषु समानस्य सः स्यात्। The four original castes are called वर्ण। The mixed castes are जाति and not वर्ण। Here वर्ण is used in the secondary sense जाति। The injunction applying to all the twice-born castes whether original or mixed *i. e.* to ब्राह्मण, क्षत्रिय, वैश्य, मूर्द्धाभिषिक्त, माहिष्य and अम्बष्ठ primarily. Vide Manu X. 14. One's brother may have an असवर्णा wife *i. e.* wife taken from a lower वर्ण which was sanctioned by law. Vide सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः। शूद्रैव भार्य्या शूद्रस्य

सा च स्वा च विशः स्मृते। ते, स्वाचैव राज्ञश्च ताश्च स्वाचाग्रजन्मनः। Manu III. 12. 13. *i. e.* The three twice-born castes should first marry females of equal caste, after which the following are good wives in order. A Sudra will have a Sudra wife only. A Vaishya may have a Sudra and a Vaishya; a Khatriya may have a Sudra, a Vaishya and a Khatriya; a Brahmin may have a Sudra, a Vaishya, a Khatriya and a Brahmain wife. But it is recommended that a Brahmin should never marry a Sudra, though allowed (Manu X. 14.). A younger brother is to salute the wife of his elder brother every day in the morning provided she is a wife equal in caste. **2.** भार्य्या qualified by सवर्णा। Derived. **3.** भ्रातुः शेषे षष्ठी। भ्रात+तृच् सखादिः। **4.** उप-संग्राह्या उप-सम्-ग्रह+ण्यत् कर्म्मणि। **5.** विप्रोष्य—वि-प्र-वस्+ल्यप्। प्रवासमेत्। **6.** अहनि अहनि वीप्सायां द्विरुक्तिः अधिकरणे सप्तमी। **7.** ज्ञातिसम्बन्धियोषितः ज्ञातयश्च सम्बन्धिनश्च ज्ञातिसम्बन्धिनः तेषां योषितः (द्वन्द्व and षष्ठी समास)। Acc. of उपसंग्राह्याः whose nominative तृतीयान्त is understood. **8.** उप-सम्-ग्रह +ण्यत्।

*Change of voice.*—भार्य्या उपसंग्राह्या भूयते। ज्ञातिसम्बन्धियोषिद्भिः उपसंग्राह्याभिः भूयते ॥ १३२ ॥

BENGALI.—জ্যেষ্ঠ ভ্রাতার সজাতীয়া স্ত্রীকে প্রতিদিনই অভিবাদন করিবে, কিন্তু পিতৃপক্ষীয়, মাতৃপক্ষীয় ও শ্বশুরপক্ষীয় মান্যা নারীগণকে বিদেশ হইতে আসিয়াই অভিবাদন করিবে, প্রত্যহ অভিবাদনের নিয়ম নাই, কিন্তু প্রত্যহ অভিবাদন করিতে বাধা নাই ॥ ১৩২ ॥

ENGLISH.—An (elder) brother's wife who is of the same caste (as her husband) should be greeted every day. But the wives of kinsmen and other relations should be greeted after returning from a sojourn. (132).

पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्य्यपि।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ १३३ ॥

PROSE.—पितुः मातुः च भगिन्यां ज्यायस्याम् स्वसरि अपि मातृवत् वृत्तिं आतिष्ठेत्। माता (पुनः) ताभ्यः गरीयसी॥ १३३॥

KULLUKA.—पितृभगिन्यामिति। पितृर्मातुश्च भगिन्यां ज्येष्ठायाञ्चात्मनो भगिन्यां मातृवत्वृत्तिमातिष्ठेत् माता पुनस्ताभ्यो गुरुतमा। ननु मातृष्वसा मातुलानी-त्यनेनैव गुरुपत्नीवत् पूज्यत्वमुक्तं किमधिकमनेन बोध्यते। उच्यते इदमेव माता ताभ्यो गरीयसीत्यनेन पितृष्वसानुज्ञायां दत्तायां मात्रा च विरोधे मातृगाज्ञा अनु-ष्ठेयेति। अथवा पूर्वं पितृस्वसादेर्मातृवत् पूज्यत्वमुक्तम् अनेन तु स्नेहादिवृत्तिरप्य-तिदिश्यते इत्यपुनरुक्तिः॥ १३३॥

GRAMMAR.—1. पितुः। 2. मातुः शेषे षष्ठी। 3. भगिन्याम् अधि-करणे सप्तमी। 4. ज्यायस्याम् qualifies स्वस्मरि प्रशस्य+ईयसु। 5. स्वसरि स्वा स्वसा स्वसा पुंवत्। तस्याम् अधिकरणे सप्तमी। 6. मातृवद् वृत्तिम् मातरि इव मातृवत् अव्ययम् मातृवत् वृत्तिः मातृवद्वृत्तिः कर्मधारयः ताम् Acc. of आतिष्ठेत्। 7. आङ्-स्था+यात्। 8. ताभ्यः पञ्चमी विभक्ते इति विभागे पञ्चमी। 9. गरीयसी गुरु+ईयसु।

*Change of voice.*—वृत्तिः आस्थीयेत माता गरीयसी भूयते॥ १३३॥

BENGALI.—পিতার ও মাতার ভগিনী এবং নিজের জ্যেষ্ঠা সহোদরার প্রতি মাতার ন্যায় স্নেহাদি ব্যবহার করিবে; মাতা ইঁহাদের হইতেও বহুগুণ গুরুতর জানিবে। ইঁহাদের আজ্ঞা হইতে মাতৃ আজ্ঞা বলবতী॥ ১৩৩॥

ENGLISH.—One should behave towards a father's sister, a mother's sister, and his own elder sister in the same way as towards his mother, who is superior to them all. (133).

## दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम्।
## त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु॥ १३४॥

PROSE.—पौरसख्यं दशाब्दाख्यं, कलाभृतां (सख्यं) पञ्चाब्दाख्यं श्रोत्रि-याणां त्र्यब्दपूर्वं स्वयोनिषु स्वल्पेन अपि (भवति)॥ १३४॥

KULLUKA.—दशाब्दाख्यमिति। दश अब्दा आख्या यस्य तद्दशाब्दाख्यम् अयमर्थः एकपुरवासिनां वक्ष्यमाणविद्यादिगुणरहितानाम् एकस्य दशभिरब्दैर्ज्येष्ठत्वे सत्यपि सख्यमाख्यायते पुरग्रहणं प्रदर्शनार्थं तेनैकग्रामादिनिवासिनामपि स्यात्।

गीतादिकलाभिज्ञानां पञ्चवर्षपर्य्यन्तं सख्यं श्रोत्रियाणां त्र्यब्दपर्य्यन्तं सपिण्डेषु अल्पकालेनैव कालेन सह सख्यम् अविरोधार्थं सर्व्वत्रैककालादूर्द्ध्वं ज्येष्ठव्यवहारः ॥ १३४ ॥

GRAMMAR.—1. पुरस्य इदं पौरम्। पौरं सख्यम् पौरसख्यं कर्म्मधारयः। सख्युर्भावः सख्यम्। सखि + य। Or पौराणां पुरवासिनां सख्यं। Its विधेय विशेषणम् is दशाब्दाख्यम्। 2. दशाब्दाख्यम् अपो ददातीति अब्दः उपपद समासः। बत्सरः। अप – दा + कः। दशसंख्यायुक्ता अब्दाः दशाब्दाः समाहारे कृते तु दशाब्दी स्यात् दशाब्दा इत्याख्या यस्य तत् दशाब्दाख्यम् बहुव्रीहिः। Or दश अब्दाः यस्य तत् दशाब्दम् दशाब्दं इत्याख्या यस्य तत् दशाब्दाख्यम्। 3. कलाभृताम् शेषे षष्ठी connected with सख्यम् understood कला नृत्यगीताद्या तां बिभर्तीति कलाभृतः उपपद समासः। तेषाम्। 4. पञ्चाब्दाख्यम् पञ्च अब्दाः यस्य तत् पञ्चाब्दं पञ्चाब्दं आख्या यस्य तत् qualifies सख्यम्। 5. श्रोत्रियाणाम् शेषे षष्ठी। छन्दोऽधीते इति श्रोत्रियः छन्दस् + घ निपातनात्। पक्षे छान्दसः। by श्रोत्रियश्छन्दोऽधीते। 6. त्र्यब्दपूर्व्वम् त्रिसंख्या अब्दाः त्र्यब्दाः। मध्यपदलोपी कर्म्मधारयः। त्र्यब्दा पूर्व्वं यस्मा तत् त्र्यब्दपूर्व्वम्। बहुव्रीहिः qualifies सख्यम्। 7. स्वयोनिषु अधिकरणे सप्तमी। 8. स्वल्पेन सु अतिशयेन अल्पः स्वल्पः। प्रकृत्यादिभ्य तृतीया।

*Change of voice.*—दशाब्दाख्येन पौरसख्येन...पञ्चाब्दाख्येन – त्र्यब्दपूर्व्वेण श्रूयते ॥ १३४ ॥

BENGALI.—এক নগরবাসী লোকদিগের মধ্যে বিদ্যা ও ধনাদিগত প্রভেদ না থাকিলে বয়সে দশ বৎসর পর্য্যন্ত ন্যূনাধিক্য স্থলে পরস্পর সখ্য হইবে, গীতবাদিত্র আলোচনাশীলদিগের পাঁচ বৎসর পর্য্যন্ত বয়সের ন্যূনাধিক্যেও পরস্পর সখ্য জানিবে, বেদজ্ঞদিগের মধ্যে তিন বৎসর পর্য্যন্ত বয়সের ভেদ থাকিলেও তাহারা পরস্পর সখ্য, সপিণ্ডদিগের মধ্যে বয়সের সামান্য ন্যূনাধিক্যে সখ্য হয়। ঐ নিয়মিত সময়ের পরই জ্যেষ্ঠ কনিষ্ঠ ব্যবহার চলিবে॥ ১৩৪ ॥

ENGLISH.—Friendship among inhabitants of the same city or town or co-villagers may be said to subsist even at the disparity of age by ten years ; among members bearing the same art, such as music, dancing &c. it may be said to subsist even at the disparity of age by five years ; among students of the Vedas at the disparity of age by three years ; and among persons related by birth it may exist when the difference is (only) of a small time. (134).

**ब्राह्मणं दशवर्षन्तु शतवर्षन्तु भूमिपम्।**
**पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोःपिता॥ १३५॥**

PROSE.—दशवर्षं ब्राह्मणं शतवर्षं भूमिपं पितापुत्रौ विजानीयात् तयोस्तु ब्राह्मणः पिता ( भवति )॥ १३५॥

KULLUKA.—ब्राह्मणमिति। दशवर्षं ब्राह्मणं शतवर्षं पुनः क्षत्रियं पितापुत्रौ जानीयात्। तयोर्मध्ये दशवर्षोऽपि ब्राह्मण एव क्षत्रियस्य शतवर्षस्यापि पिता तस्मात् पितृवद्धर्मो तस्य मान्यः॥ १३५॥

GRAMMAR.—1. दशवर्षम् दश वर्षाणि वयांसि यस्य स दशवर्षः बहुव्रीहिः तम् qualifies ब्राह्मणम्। 2. शतवर्षम् पूर्ववत् qualifies भूमिपम्। 3. भूमिपम् Acc. of विजानीयात् भूमि – पा + कः। 4. तयोः निर्द्धारणे षष्ठी।

*Change of voice.*—दशवर्षः ब्राह्मणः शतवर्षः भूमिपः पितापुत्रौ ज्ञायेयाताम्। ब्राह्मणेन...पिता भूयते॥ १३५॥

BENGALI.—দশ বৎসর বয়স্ক ব্রাহ্মণ ও শতবৎসর বয়স্ক ক্ষত্রিয় এই উভয়কে পিতা পুত্র বলিয়া জানিবে; ঐ উভয়ের মধ্যে ব্রাহ্মণকে পিতা বলিয়া জানিবে॥ ১৩৫॥

ENGLISH.—Let a Brahmin of ten years of age, and a Kshatriya of hundred years, be looked upon as father and son; of the two the Brahmin is (as respectable as) the father. (135).

**वित्तं बन्धुर्व्वयः कर्म्म विद्या भवति पञ्चमी।**
**एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्॥ १३६॥**

PROSE.—वित्तं बन्धुः वयः कर्म्म (चतुष्टयम्) विद्या पञ्चमी भवति। एतानि मान्यस्थानानि ( भवन्ति ) यत् यदुत्तरं ( तत् ) गरीयः॥ १३६॥

KULLUKA.—वित्तमिति वित्तं न्यायार्ज्जितं धनं, बन्धुः पितृव्यादिः वयोऽधिकवयस्कता, कर्म्म श्रौतं स्मार्त्तञ्च, विद्या वेदार्थतत्त्वज्ञानम् एतानि पञ्च मान्यत्वकारणानि। एषां मध्ये यद्यदुत्तरं तत्तत्पूर्व्वस्मात् श्रेष्ठमिति बहुमान्यमिलकं बलाबलमुक्तम्॥ १३६॥

GRAMMAR.—1. वित्तम् विद् लभादि + क्तः भावे वित्तम्। पक्षे कर्म्मादौ विन्नम्। विद्यतेरपि विन्नः वेत्तेस्तु विदितः। 2. बन्धुः बन्ध् + उन्। 3. वयः अज + असुन्। 4. पञ्चमी पञ्चानां पूरणः पञ्चमः ङीप् पञ्चमी।

5. विद्या विद्+क्यप्। प्रातिपदिकार्थे प्रथमा। 6. मान्यस्थानानि मान्यानि स्थानानि मान्यस्थानानि। कर्मधारय:। 7. यदुत्तरम् यस्मात् उत्तरम् यदुत्तरम् पञ्चमी समास: or (a) यत् and (b) उत्तरम् two words. (a) is an अव्यय meaning यस्मात् अन्यारादिति पञ्चमी। (b) उत्तरम् परम्। 8. गरीय: अतिशयेन गुरु गरीय: गुरु+ईयसु।

*Change of voice.*—वित्तेन बन्धुना वयसा पञ्चम्या विद्यया भूयते एतै: मान्यस्थानै: भूयते। येन यदुत्तरेण (तेन) गरीयसा भूयते ॥ १३६ ॥

BENGALI.—न्यायार्জিত धन, পিতৃব্যাদি সম্বন্ধ, অধিকবয়স্কতা ও কর্ম এই চারি এবং বিদ্যা এই পাঁচটি মান্যত্বের কারণ বটে; এই পাঁচটির মধ্যে যেটি যাহার পরে উক্ত হইল সেটি তাহা হইতে অধিক মান্য, অর্থাৎ ধন হইতে সম্বন্ধ, সম্বন্ধ হইতে বয়স, বয়স হইতে কর্ম, কর্ম হইতে বিদ্যা অধিক মান্য। বহুমান্য মিলিত হইলে এইরূপে মান্যতার বলাবল জানিবে॥ ১৩৬॥

ENGLISH—Wealth, kinmanship, age, work or profession, and, the fifth, learning—these are the causes of respectability. What is stated next is superior (to what is stated before). (136).

पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।
यत्र स्यु: सोऽत्र मानार्ह: शूद्रोऽपि दशमींगत: ॥ १३७ ॥

PROSE.—त्रिषु वर्णेषु पञ्चानां यत्र भूयांसि (यत्र) गुणवन्ति च स्यु: स: अत्र मानार्ह:। दशमीं गतं शूद्र: अपि (द्विजानां मानार्ह:) १३७॥

KULLUKA.—पञ्चानामिति। त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानां वित्तादीनां मध्ये यत्र पुरुषे पूर्व्वमप्यनेकं भवति स एवोत्तरस्मादपि मान्य:। तेन वित्तबन्धुयुक्तो वयोऽधिकान्मान्य: एवं वित्तादित्रययुक्त: कर्म्मवतो मान्य: वित्तादिचतुष्टययुक्तो विदुषो मान्य:। गुणवन्ति चेति प्रकर्षवन्ति तेन द्वयोरेव वित्तादिमत्त्वे प्रकर्षो मानहेतु:। शूद्रोऽपि दशमीमवस्थां नवत्यधिकां गतो द्विजन्मनामपि मानार्ह: शतवर्षायां दशधा-विभागे दशमावस्था नवत्यधिका भवति ॥ १३७ ॥

KULLUKA EXPLAINED.—"तेन द्वयोरेव वित्तादिमत्त्वे प्रकर्षो मानहेतु:"। This is the explanation of "गुणवन्ति" *i.e.* when two are rich, old &c. &c. preference will be given in favour of him who exceeds the other in these qualifications. तेन (तस्मात्) द्वयो:

एव ( द्वयोरेव ब्राह्मणयोः क्षत्रिययोः वैश्ययोर्वा ) वित्तादित्रसत्त्वे ( धनादिसत्त्वे सति ) प्रकर्षः ( तत्तद्विषयकं आधिक्यं ) मानहेतुः ( मान्यत्वकारणम् )।

GRAMMAR.—**1.** वर्णेषु अधिकरणे सप्तमी। **2.** पञ्चानाम् निर्द्धारणे षष्ठी। **3.** भूयांसि qualifies मान्यस्थानानि understood बहु+ईयसु। **4.** गुणवन्ति (qualifies मान्यस्थानानि) means आधिक्ययुक्तानि। गुण+मतुप्। प्रथमाया बहुवचनम्। **5.** मानार्हः मानं अर्हतीति मानार्हः मान—अर्ह+अण् उपपद समासः। **6.** दशमीम् Acc. of गतः।

*Change of voice.*—यत्र भूयोभिः गुणवद्भिः भूयते तेन मानार्हेण भूयते दशमीं गतेन शूद्रेण अपि भूयते ॥ १३७ ॥

BENGALI.—ব্রাহ্মণ, ক্ষত্রিয় ও বৈশ্য এই তিন বর্ণের মধ্যে যে ব্যক্তিতে ধনাদি পাঁচটি গুণের পর্ক পর্ক গুণ একাধিক সংখ্যায় বর্ত্তমান থাকে সে ব্যক্তি পর পর একটিগুণযুক্ত ব্যক্তি হইতে মান্য হইবেন। (যাহার ধন ও বন্ধুতা গুণ আছে তিনি বয়োধিক ব্যক্তি হইতে মান্য; ধন, বন্ধুতা ও বয়স এই তিন গুণযুক্ত ব্যক্তি কর্ম্মবান্ ব্যক্তি হইতে মান্য; ধনাদি চারিটি গুণবিশিষ্ট ব্যক্তি বিদ্যাবান্ হইতে মান্য)। আর (দুইজন ধনী, দুইজন সম্বন্ধাধিত, দুইজন অধিক বয়স্ক, দুইজন বিদ্বান্ উপস্থিত থাকিলে) সেই সেই গুণ যাহার অধিক থাকে উভয়ের মধ্যে তিনিই অধিক মান্য। ৯০ বৎসরের অধিক বৃদ্ধ হইলে শূদ্রও দ্বিজগণের মান্য হয়॥ ১৩৭॥

ENGLISH.—Among the three (higher) castes he is deserving of respect in whom are found a good many superior virtues out of these five. A *Sudra* too reaching the tenth decade (of his age) is respectable. (137).

## चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः।
## स्नातकस्यच राज्ञश्च पन्था देयो वरस्य च ॥ १३८ ॥

PROSE.—चक्रिणः दशमीस्थस्य रोगिणः भारिणः स्त्रियाः स्नातकस्य राज्ञः च वरस्य च पन्थाः देयः ॥ १३८ ॥

KULLUKA.—अयमपि पूजाप्रकारः प्रसङ्गादुच्यते चक्रिण इति। चक्रयुक्तरथादियानारूढस्य नवत्यधिकवयसो रोगार्त्तस्य भारपीड़ितस्य स्त्रियाः अचिरनिवृत्तसमावर्त्तनस्य देशाधिपस्य विवाहाय प्रस्थितस्य पन्थाक्षकव्यः। त्यागार्थत्वाच्च ददातेर्न चतुर्थी॥ १३८ ॥

KULLUKA EXPLAINED.—"अचिरनिवृत्त समावर्त्तनस्य" अचिरं अनतिपूर्व्वं निवृत्तं सम्पन्नं समावर्त्तनं गुरुगृहात् आगमनकालीनं कर्म्म यस्य तस्य। This is the explanation of स्नातकः। स्नातकः means a गृहस्थाश्रमी। ज्येष्ठाश्रमी गृहमेधी गृहस्थः स्नातको गृहीति हेमचन्द्रः। Here स्नातकः means a new गृहस्थाश्रमी।

GRAMMAR—1. चक्रिणः शेषे षष्ठी। 2. दशमीस्थस्य दशम्यां तिष्ठतीति दशमी+स्था+क उपपद समासः। 3. रोगिणः रुज+घिणुन्। 4. भार+इनि तस्य भारिणः। 5. स्नातकस्य। 6. राज्ञः। 7. वरस्य सर्व्वत्र शेषे षष्ठी। 8. देयः दा+य।

*Change of voice*....पन्था देयेन भूयते ॥ १३८ ॥

BENGALI.—চক্রযুক্ত যানে আরোহণকারী, নব্বই বৎসরের অধিক বয়স্ক, রোগার্ত্ত, ভারবাহী, স্ত্রী, ব্রহ্মচর্য্য হইতে প্রত্যাগত গৃহস্থ, রাজা ও বরকে পথ ছাড়িয়া দিয়া একধারে সরিয়া যাইবে ॥ ১৩৮ ॥

ENGLISH.—Let one (stand aside and) give the path to a person driving in a wheeled carriage to a person who has reached the tenth decade of his age, who is diseased, who is carrying a burden, to a female, to a *Snataka* (a Brahmin who has just entered the 2nd stage of life the household stage), to a king; and to a bridegroom. (138).

तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥ १३९ ॥

PROSE.—समवेतानां तेषां स्नातकपार्थिवौ मान्यौ राजस्नातकयोश्च स्नातकः नृपमानभाक् (भवति) ॥ १३९ ॥

KULLUKA.—तेषामिति। तेषामेकत्र मिलितानां देशाधिपस्नातकौ मान्यौ राजस्नातकयोरपि स्नातक एव राजापेक्षया मान्यः अतो राजशब्दोऽत्र पूर्व्वश्लोके च न केवलक्षत्रियजातिवचनः क्षत्रियजात्यपेक्षया ब्राह्मणं दशवर्षन्त्वित्यनेन ब्राह्मणमात्रस्य मान्यत्वाभिधानात् स्नातकग्रहणवैयर्थ्याच्च ॥ १३९ ॥

GRAMMAR.—1. सम्-अव-इ+क्तः। 2. तेषां निर्द्धारणे षष्ठी। 3. स्नातकश्च पार्थिवश्च स्नातकपार्थिवौ द्वन्द्वः। स्ना+क्तः+कः। पृथिवी+अण्।

4. राजमानभाक् राज्ञ: मान: राजमान: राजमानं भजति राजमानभाक् उपपद समास:। राजमान – भज + ण्वि:।

*Change of voice.*—स्नातक पार्थिवाभ्यां मान्याभ्यां भूयते। स्नातकेन नृपमानभाजा भूयते ॥ १३९ ॥

BENGALI.—পূর্ব্বোক্ত সমস্ত ব্যক্তি মিলিত হইলে তন্মধ্যে রাজা ও স্নাতক এই দুইজন অবশিষ্টের মান্য হইবেন ; [এস্থলে রাজা শব্দে কেবল ক্ষত্রিয় জাতীয় নহে, রাজা মাত্রই বুঝিতে হইবে, কেননা ক্ষত্রিয় হইতে যে ব্রাহ্মণ মান্য তাহা পূর্ব্বে বলা হইয়াছে] ; রাজা ও স্নাতক এই উভয়ের মধ্যে স্নাতক রাজার মান্য ॥ ১৩৯ ॥

ENGLISH.—Among all these taken together the *Snataka* and the king are respectable. And of the *Snataka* and the king, the *Snataka* is deserving of respect from the king. (139).

## उपनीय तु य: शिष्यं वेदमध्यापयेद्द्विज:।
## सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥ १४० ॥

PROSE.—य: द्विज: तु शिष्यं उपनीय सकल्पं सरहस्यं वेदं अध्यापयेत् तं आचार्य्यं प्रचक्षते [ मनव: ] ॥ १४० ॥

KULLUKA.—आचार्य्यादिशब्दैरिह शास्त्रे प्रायोऽव्यवहारात् आचार्य्यादिशब्दार्थमाह उपनीयेति। यो ब्राह्मण: शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्व्वामध्यापयति तमाचार्य्यं पूर्व्वे मुनयो वदन्ति। कल्पो यज्ञविद्यारहस्य मुपनिषत्। वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्द्देश: ॥ १४० ॥

GRAMMAR.—1. य: qualifies द्विज:। 2. द्विज: द्वि – जन + ड:। 2. शिष्यम् Acc. of उपनीय and अध्यापयेत्। शास + क्यप्। 3. उपनीय उप – नी + ल्यप्। 4. सकल्पम् कल्पेन सह वर्त्तमान: सकल्प: बहुव्रीहि: तम्। कल्पसूत्रं सामवेदाङ्गं येन यज्ञकरणविषयक उपदेश: कथ्यते। 5. सरहस्यम् रहस्येन गूढ़ेन उपनिषदा इत्यर्थ: वर्त्तमान: सरहस्य तम् qualifying वेदम्। 6. वेदम् मुख्य' कर्म्म of अध्यापयेत् शिष्य' कर्म्म by गति बुद्धि प्रत्यवसाम etc. etc. शिष्यो वेदं अधीते शिष्यं वेदं अध्यापयति कर्म्मसंज्ञाप्रयोज्यस्य। 7. अध्यापयेत् अधि – इङ् – णिच् – यात्। णिचि चालम क्रीड्जीनां णौ इति। पुक्। लुङ् अध्यजीगपत् अध्यापिपत्। 8. आचार्य्यम् Acc. of प्रचक्षते। आङ् – चर + ण्यत् गुरौ । अन्यत्र तु यत्प्रत्यय: by चेर राङि चागुरौ अर्थाद् गुरुभिन्नार्थे आङ् – चर

+यत् आचार्य: ईश:। गुरौ तु आचार्यौ (ञ्यत्) गुरु:। Bhatto. 9. प्रच-क्षते प्र–चक्ष् लट् अन्ते।

*Change of voice.*–येन द्विजेन शिष्य: वेदं अध्याप्येत स आचार्य: ख्यायते ॥ १४० ॥

BENGALI.—যে ব্রাহ্মণ শিষ্যকে উপনয়ন প্রদান করত তাঁহাকে যজ্ঞ সম্পাদন বিষয়ক শাস্ত্র ও উপনিষৎ নামক গূঢ় বিদ্যার সহিত সমগ্র বেদশাখা পাঠ করান তাঁহাকে মুনিগণ আচার্য্য বলেন ॥ ১৪০ ॥

ENGLISH.—They call him an *acharya* or teacher who investing his pupil with the sacred thread teaches him the Vedas together with the injunctions about sacrifices, and the deeper or occult sense of the Veda (*i.e.* the Upanishadas). (140).

एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुन:।
योऽध्यापयति वृत्त्यर्थमुपाध्याय: स उच्यते ॥ १४१ ॥

PROSE.—य: तु वृत्त्यर्थं वेदस्य एकदेशं वेदाङ्गानि वा पुन: अध्यापयति स उपाध्याय: उच्यते ॥ १४१ ॥

KULLUKA.—एकदेशमिति। वेदस्यैकदेशं मन्त्रं ब्राह्मणञ्च, वेदरहितानि व्याकरणादीनि अङ्गानि, यो वृत्त्यर्थमध्यापयति स उपाध्याय उच्यते ॥ १४१ ॥

GRAMMAR.—**1.** वृत्त्यर्थम वृत्तये इदम वृत्त्यर्थम्। **2.** वेदस्य शेषे षष्ठी। **3.** वेदाङ्गानि वेदानां अङ्गानि वेदाङ्गानि। शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गण:। छन्दसां विचितिः श्चैव षड़ङ्गो वेद उच्यते। **4.** उपाध्याय: उप–अधि–इङ्+घञ्।

*Change of voice.*—येन एकदेशं वेदाङ्गानि वा (शिष्य:) अध्याप्यते ॥ १४१ ॥

BENGALI.—যিনি বেদের একাংশ অথবা বেদরহিত কেবল ব্যাকরণাদি অঙ্গ জীবিকানির্ব্বাহের জন্য পড়াইয়া থাকেন তাঁহাকে উপাধ্যায় বলে ॥ ১৪১ ॥

ENGLISH.—He who teaches for his livelihood a part of the Veda or the branches of learning subsidiary to the Veda is called an *Upadhyaya* or preceptor. (141).

निषेकादीनि कर्म्माणि य: करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ १४२ ॥

PROSE.—यः यथाविधि निषेकादीनि कर्म्माणि करोति अन्नेन च सम्भावयति सः विप्रः गुरुः उच्यते ॥ १४२ ॥

KULLUKA.—निषेकादीनीति। निषेको गर्भाधानं तेन पितुरयं गुरुत्वोपदेशः गर्भाधानादीनि संस्कारकर्म्माणि पितुरुपदिष्टानि यथाशास्त्रं यः करोति अन्नेन च संवर्द्धयति स विप्रो गुरुरुच्यते ॥ १४२ ॥

GRAMMAR.—1. विधिमनतिक्रम्य यथाविधि। 2. निषेकः आदिर्येषां तानि। 3. सम्भावयति सम्—भू+णिच्।

*Change of voice.*—कर्म्माणि क्रियन्ते सम्भाव्यते तं विप्रं गुरुं ब्रुवन्ति ॥ १४२ ॥

BENGALI.—যিনি যথানিয়মে নিষেকাদি কর্ম্ম সম্পাদন করেন, এবং অন্নদ্বারা প্রতিপালন করেন সেই পিতাকে গুরু বলে ॥ ১৪২ ॥

ENGLISH.—The Brahmin who does in due from the rites beginning with the ceremony of impregnation, and rears up with food is called *Guru* or father. (142).

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥ १४३ ॥

PROSE.—वृतः यः यस्य अग्न्याधेयं पाकयज्ञान् अग्निष्टोमादिकान् मखान् करोति इह स तस्य ऋत्विक् उच्यते ॥ १४३ ॥

KULLUKA.—अग्न्याधेयमिति। आहवनीयाद्यग्न्युत्पादकं कर्म्म अग्न्याधेयम्। अष्टकादीन् पाकयज्ञान्, अग्निष्टोमादीन् यज्ञान्, कृतवरणो यस्य यः करोति स तस्य ऋत्विगिहशास्त्रेऽभिधीयते ब्रह्मचारिधर्म्मेष्वनुपयुक्तमपि ऋत्विग्लक्षणमाचार्य्यादिवहत्वेनोऽपि मान्यत्वं दर्शयितुं प्रसङ्गादुक्तम् ॥ १४३ ॥

GRAMMAR.—1. वृतः वृञ्+क्तः। अवारीत् अवरिष्ट अवरीष्ट अवृत। वृञ् (दीर्घाः) वृणाति वृणीते अवारीत् अवारिष्ट अवरीष्ट अवूर्ष्ट। 2. अग्न्याधेयम् आङ्—धा+यः भावे आधानम् इत्यर्थः। अग्नेः राधेयम् षष्ठी समासः। 3. पाकस्य यज्ञान्। 4. अग्नेः सोमः अग्निष्टोमः यत्नम्। स आदिर्येषाम् तान्। 5. मखान् Acc. of करोति। 6. ऋतौ यजतीति ऋत्विक्। ऋतु—यजः+क्विप्।

*Change of voice.*—ব্রতেন যেন অস্যাগ্ন্যাধেয়ং পাকযজ্ঞাঃ অগ্নিষ্টোমাদয়ঃ মখাঃ ক্রিয়ন্তে সঃ ঋত্বিক্ উচ্যতে ॥ ১৪৩ ॥

BENGALI.—যথানিয়মে নিযুক্ত হইয়া যিনি যাহার আহবনীয়াদি অগ্নি-উৎপাদক কর্ম্ম, অষ্টকাদি পাকযজ্ঞ, ও অগ্নিষ্টোমাদি যজ্ঞ কার্য্য করিয়া থাকেন, তিনি তাহার ঋত্বিক্ (পুরোহিত) হন। (ব্রহ্মচারীর ধর্ম্মনির্দ্দেশ স্থলে পুরোহিতের সংজ্ঞা বলা নিষ্প্রয়োজন, তবে পুরোহিত ও আচার্য্যের ন্যায় মান্য ইহা দেখাইবার জন্য পুরোহিতের লক্ষণ বলা হইল)॥ ১৪৩ ॥

ENGLISH.—He who being requested (and engaged) does for another the rite of consecrating the fire, the *paka* sacrifices, and the sacrifices, *agnistoma* and others is called his priest. (143).

**য আবৃণোত্যবিতথং ব্রহ্মণা শ্রবণাবুভৌ।**
**স মাতা স পিতা জ্ঞেয়স্তং ন দ্রুহ্যেৎ কদাচন ॥ ১৪৪ ॥**

PROSE.—যঃ অবিতথং ব্রহ্মণা উভৌ শ্রবণৌ আবৃণোতি স মাতা স পিতা জ্ঞেয়ঃ তং কদাচন ন দ্রুহ্যেৎ ॥ ১৪৪ ॥

KULLUKA.—য আবৃণোতীতি। য উভৌ কর্ণৌ অবিতথমিতি বর্ণস্বর-বৈগুণ্যরহিতেন সত্যরূপেণ বেদেনাপূরয়তি স মাতাপিতা চ জ্ঞেয়ঃ মহোপকারকত্বগুণ-যোগাৎ অধ্যাপকো মাতাপিতৃশব্দবাচ্যঃ তন্নাপকুর্য্যাৎ কদাচনেতি গৃহীতেঽপি বেদে ॥ ১৪৪ ॥

GRAMMAR.—1. ন বিতথং যথা স্যাৎ তথা। 2. তম্ Acc. of দ্রুহ্যেৎ। It ought to have been তস্মৈ in connection with দ্রুহ্যেৎ (ক্রুধদ্রুহের্ষ্যা সূয়ার্থানাং যং প্রতি কোপঃ) here কোপ is not the meaning, but অপকার is the meaning. Hence মাধ্যমীর্থ্যাৎ ইতিবৎ দ্বিতীয়া।

*Change of voice.*—যেন......শ্রবণৌ আব্রিয়েতে তেন মাতা পিতা জ্ঞেয়েন ভূয়তে স...দ্রুহ্যেত ॥ ১৪৪ ॥

BENGALI.—যিনি প্রকৃত স্বর ও উচ্চারণযুক্ত বেদ দ্বারা দুইকর্ণ পূর্ণ করিয়া দেন, তিনি মহোপকারী বলিয়া পিতা ও মাতা হন; বেদগ্রহণের পরেও কখন তাঁহার অপকার করিবে না॥ ১৪৪ ॥

ENGLISH.—He who fills the two ears with the Veda (recited) properly and without defect is father and mother (both). Never should a man injure him. (144).

**उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।**
**सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते ॥ १४५ ॥**

PROSE.—आचार्य्यः दश उपाध्यायान् ( अपेक्ष्य ) पिता आचार्य्याणां शतं ( अपेक्ष्य) माता सहस्रं पितॄन् ( अपेक्ष्य ) गौरवेण अतिरिच्यते ॥ १४५ ॥

KULLUKA.—उपाध्यायानीति। दशोपाध्यानपेक्ष्य आचार्य्यः। आचार्य्यशतमपेक्ष्य पिता, सहस्रं पितॄनपेक्ष्य माता गौरवेणातिरिक्ता भवति। अत उपनयनपूर्व्वकसावित्रीमात्राध्यापयिता आचार्य्योऽभिप्रेतः तमपेक्ष्य पितुरुत्कर्षः। उत्पादकब्रह्मदात्रोरिति वक्ष्यमाणेन मुख्याचार्य्यस्य पितरमपेक्ष्य उत्कर्षं वक्ष्यतीत्यविरोधः ॥ १४५ ॥

GRAMMAR.—1. आङ् – चर + ण्यत् आचार्य्यः। 2. उप – अधि + इ + घञ्। 3. सहस्रम् qualifies पितॄन्। शतं सहस्रं are singular but qualify plural number as their singular indicates plurality ; Acc. of अपेक्ष्य क्रिया understood. 4. गौरवेण करणे तृतीया। 5. अतिरिच्यते अति – रिच् + लट् ते। कर्म्मकर्त्तरि।

*Change of voice.*—आचार्य्येण दश उपाध्यायान् अपेक्ष्य......पित्रा...मात्रा... अतिरिच्यते ॥ १४५ ॥

*Note.*—ओदनः पच्यते this कर्म्मकर्त्तरि प्रयोग may be changed into भाववाच्य। ओदनेन पच्यते। [ Bhatto ].

BENGALI.—আচার্য দশজন উপাধ্যায়কে, পিতা একশত আচার্য্যকে, মাতা এক সহস্র পিতাকে গৌরবে অতিক্রম করেন॥ ১৪৫ ॥

ENGLISH.—In point of honour and respect an *acharya* exceeds ten *Upadhyays* ; father excels a hundred *acharyas* ; and mother surpasses a thousand fathers. (145).

**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ १४६ ॥**

PROSE.—उत्पादकब्रह्मदात्रोः ( पित्रोः मध्ये ) ब्रह्मदः पिता गरीयान् विप्रस्य ब्रह्म-जन्म हि प्रेत्य च इह च शाश्वतम् भवति ॥ १४६ ॥

KULLUKA.—उत्पादकेति। जनकाचार्य्यौ द्वावपि पितरौ जन्मदातृत्वात्

तयोराचार्य्यपिता गुरुतरः। यस्माद्विप्रस्य ब्रह्मग्रहणार्थं जन्म उपनयनजन्यसंस्काररूपं परलोके इह लोके च शाश्वतं नित्यं ब्रह्मप्राप्तिफलकत्वात् ॥ १४६ ॥

GRAMMAR.—1. उत्पादकश्च ब्रह्मदाता च उत्पादकब्रह्मदातारौ तयोः। ब्रह्मणां दाता ब्रह्मदाता षष्ठीसमासः। तृजकाभ्यां कर्त्तरीति दातृशब्देन षष्ठीसमासनिषेधेऽपि शेषषष्ठ्या समासस्तु घटनिर्म्मातुरितिवत् कैयटमतमनुसृत्य समासः। 2. ब्रह्म – दा + क। उपपद समासः। 3. गरीयान् गुरु + ईयसु। 4. विप्रस्य शेषे षष्ठी। 5. ब्रह्मजन्म ब्रह्मणः ब्रह्मग्रहणार्थं जन्म ब्रह्मजन्म षष्ठी समासः। 6. प्रेत्य प्र – इ + ल्यप्। Finite verb स्थितम् understood. 7. शाश्वतम् शश्वत् + अण् qualifies ब्रह्मजन्म।

*Change of voice.*–ब्रह्मदेन पिता गरीयसा भूयते। ब्रह्मजन्मना शाश्वतेन भूयते ॥ १४६ ॥

BENGALI.—জনক ও আচার্য্য উভয়েই পিতা; কিন্তু জনক পিতা হইতে বেদপ্রদ পিতা অধিকতর মান্য; কেননা ব্রাহ্মণের পক্ষে বেদগ্রহণের জন্য উপনয়নরূপ জন্মই ইহকালে ও পরকালে ব্রহ্মপ্রাপ্তির কারণস্বরূপ বলিয়া নিত্য। ১৪৬।

ENGLISH.—Of the two, viz. the generator, and the initiator into the Veda, the latter, the teacher of the Veda, is a superior father. For, the birth (or sacrament appropriate) to the reception of the Veda is eternal for a Brahman, both here and hereafter. (146).

कामान्माता पिता चैनं यदुत्पादयतो मिथः।
सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते ॥ १४७ ॥

PROSE–माता पिता च मिथः कामात् एनं यत् उत्पादयतः, यत् (अयं) योनौ अभिजायते, तां तस्य सम्भूतिं (पशुसाधारणीं) विद्यात्॥ १४७ ॥

KULLUKA.—कामादिति। मातापितरौ यदेनं बालकं कामवशेनान्योऽन्यम् उत्पादयतः सम्भवमात्रं तत्तस्य पश्वादिसाधारणं यद्योनौ मातृकुक्षावभिजायते, अङ्गप्रत्यङ्गानि लभते॥ १४७॥

*Note.*—The text is very elliptical. The full sentence is माता पिता च मिथः कामात् यत् एनं उत्पादयतः, अतः अयं यत् मातृयोनौ जायते तत् अस्य सम्भूतिं पशुसाधारणं सम्भूतिमात्रं विद्यात् ॥ १४७ ॥

GRAMMAR.—1. कामात् हेतौ पञ्चमी। 2. मिथः अव्ययम् means परस्परं। 3. एनम् अन्वादेशे एनादेशः। 4. योनौ अधिकरणे सप्तमी। उत्पत्तिस्थाने जठरे इत्यर्थः। जायते जन लट् ते। अजनि; वर्द्धते इत्यर्थः। 5. सम्भूतिम् Acc. of विद्यात्। 6. ताम् विधेयप्राधान्यात् स्त्रीत्वम् it refers to the meaning of माता...उत्पादयतः and यत्......जायते which is expressed by यत् which again is reproduced by ताम्।

*Change of voice.*—मात्रा पिता च अयं यत् उत्पाद्यते, यत् अनेन योनौ जन्यते सा तस्य सम्भूतिः (पशुसाधारणी) विद्येत॥ १४७॥

BENGALI.—পিতা মাতা পরস্পর কামবশতঃ যে পুত্র উৎপাদন করেন, পুত্র যে মাতৃজঠরে থাকিয়া অঙ্গপ্রত্যঙ্গ লাভ করে সেইরূপ উৎপত্তি পশুপ্রভৃতিরও হইয়া থাকে, ঐ জন্মদ্বারা পশু প্রভৃতির সঙ্গে কোন প্রভেদ জন্মে না। ১৪৭।

ENGLISH.—That a man is given birth to by the parents out of mutual passion, that he grows in the womb (of the mother)—know this procreation to be common with the beasts. (147).

## आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
## उत्पादयति सावित्र्या सा सत्या साजरामरा॥ १४८॥

PROSE.—वेदपारगः आचार्य्यः विधिवत् सावित्र्या तस्य यां जातिं उत्पादयति सा सत्या सा अजरा अमरा (भवति)॥ १४८॥

KULLUKA.—आचार्य्य इति। आचार्य्यः पुनर्व्वेदज्ञोऽस्य माणवकस्य यां जातिं यज्जन्म विधिवत् सावित्रीति साङ्गोपनयनपूर्व्वकसावित्र्यनुवचनेनोत्पादयति सा जातिः सत्या अजरा अमरा ब्रह्मप्राप्तिफलकत्वात् उपनयनपूर्व्वकस्य वेदाध्ययनतदर्थ-ज्ञानानुष्ठानैर्निष्कामस्य मोक्षलाभात्॥ १४८॥

KULLUKA EXPLAINED.—"वेदाध्ययनतदर्थज्ञानानुष्ठानैः निष्कामस्य मोक्ष-लाभात्" वेदानां अर्थज्ञानं तदुक्तकर्म्मणां अनुष्ठानानिच तैः कामो नश्यति तेन च अपवर्गसिद्धौ मोक्ष इति उपनयनमेव मुख्यं जन्म नित्यञ्च तत्, मोक्षसाधनत्वात्। एवञ्चोपनयनार्थवादोऽयमिति।

GRAMMAR.—1. विधि+वति। 2. वेदपारगः वेदानां पारः वेदपारः तं गच्छतीति वेदपारगः or पारं गच्छतीति पारगः। वेदानां पारगः षष्ठी।

3. आचार्य्यः आङ् – चर + ण्यत। 4. सावित्र्या करणे तृतीया। 5. जातिम् Acc. of उत्पादयति। जन + क्तिन् जातिम्। उत्पत्तिम्। 6. उत्पादयति – उत् – पद + णिच् लट् ति। उत्पादयति = करोति उत्पत्तिं उत्पादयति would be meaningless. 7. सत्या qualifies सा। अस + शतृ = सत्। सत् + यत् सत्यं हितम्। 8. अजरा न विद्यते जरा वार्द्धक्यम् यस्याः सा अजरा बहुव्रीहिः। 9. अमरा म्रियते इति मरः स्त्रियां मरा पचाद्यच्। न मरा अमरा।

*Change of voice.*—वेदपारगेण आचार्य्येण...या जातिः उत्पाद्यते तया सत्यया अजरया अमरया भूयते ॥ १४८ ॥

BENGALI.—সমস্ত বেদজ্ঞ আচার্য্য যথানিয়মে উপনয়ন ও সাবিত্রীদান দ্বারা বালকের যে জন্ম দান করেন সেই জন্ম ব্রহ্মপ্রদ বলিয়া অজর ও অমর বলিয়া গণ্য ॥ ১৪৮ ॥

ENGLISH.—But the birth or regeneration which an *Acharya* who has reached the end of the Vedas brings about in due form by means of the *gayatri* is true, pure, undecaying and without death. (148)

**अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।**
**तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ १४९ ॥**

PROSE.—यस्य यः अल्पं बहु वा (कृत्वा) श्रुतस्य उपकरोति तया श्रुतोपक्रियया तं अपि इह (तस्य) गुरुं विद्यात् ॥ १४९ ॥

EXPL.—यस्य अधीयानस्य यः उपाध्यायः अल्पं बहु भूयः वा कृत्वा श्रुतस्य श्रुतेन इत्यर्थं उपकरोति हितं साधयति तया श्रुतोपक्रियया वेददानरूपोपकारेण हेतुना तम् अपि अंशेन शिक्षयितारमपि इह शास्त्रे गुरुनिर्व्वाचनविषयके तस्य गुरुं विद्यात् जानीयात् ॥ १४९ ॥

KULLUKA.—अल्पं वेति। श्रुतस्य श्रुतेनेत्यर्थः। उपाध्यायो यस्य शिष्यस्याल्पं वा बहु वा कृत्वा श्रुतेनोपकरोति तमपीह शास्त्रे तस्य गुरुं जानीयात्। श्रुतमेवोपक्रिया तया श्रुतोपक्रियया॥ १४९ ॥

KULLUKA EXPLAINED.—"उपाध्यायः" The word यः of this sloka refers to उपाध्यायः and not to आचार्य्यः because the words "अल्पं वा बहु वा" indicate a part of the Vedas only; and a teacher of a part has been named उपाध्यायः।

GRAMMAR—1. अल्पं। 2. बहु Acc. of कृत्वा understood। 3. श्रुतस्य श्रुतेन इत्यर्थः। तृतीयास्थाने षष्ठी विवक्षया। 4. यस्य शेषे षष्ठी in connection with उपकरोति। कर्म्मादीनामपि सम्बन्धमात्रविवक्षया षष्ठी एव एधोदकस्य उपस्कुरुते पक्षे द्वितीया समुपकुरुते। 5. श्रुतोपक्रियया श्रुतस्य उपक्रिया श्रुतोपक्रिया तया इति तृतीया। 6. उप–कृ+श। उपक्रिया।

*Change of voice*....येन......उपक्रियते सः गुरुः विद्येत ॥ १४९ ॥

BENGALI—যিনি বেদোপদেশ দ্বারা, যাহার অল্পই হউক অথবা অধিকই হউক উপকার সম্পাদন করেন, তিনি সেই বেদোপদেশরূপ উপকরণ দ্বারা তাহার গুরু ইহা জানিবে ॥ ১৪৯ ॥

ENGLISH.—Whoever does some benefit, great or small, by instruction in the Veda is to be known as a *Guru* on account of that benefit by means of the Veda. (149).

**ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता।**

**बालोऽपि विप्रो वृद्धस्य पिता भवति धर्म्मतः ॥ १५० ॥**

PROSE.—ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता विप्रः बालः अपि वृद्धस्य धर्म्मतः पिता भवति ॥ १५० ॥

KULLUKA.—ब्राह्मस्येति। ब्रह्मग्रहणार्थं जन्म ब्राह्ममुपनयनं स्वधर्म्मस्य शासिता वेदार्थव्याख्याता तादृशोऽपि बालो वृद्धस्य ज्येष्ठस्य पिता भवति धर्म्मत इति पितृधर्म्मास्मिन्ननुष्ठातव्याः ॥ १५० ॥

GRAMMAR.—1. ब्राह्मस्य qualifies जन्मनः ब्रह्मन्+अण्। अजातौ नकारलोपः। 2. स्वधर्म्मस्य षष्ठी in connection with तृजन्तः शासिता। No prohibition of षष्ठी by नलोकाव्यय इति।

*Change of voice*...कर्त्रा...शासित्रा......विप्रेण बालेन.........पित्रा भूयते ॥ १५० ॥

BENGALI.—যে ব্রাহ্মণ ব্রাহ্মজন্ম অর্থাৎ উপনয়ন দান করেন, এবং স্বধর্ম্মের অর্থাৎ বেদের ব্যাখ্যা করেন, তিনি বালক হইলেও ধর্ম্মানুসারে বয়োজ্যেষ্ঠের পিতা হন ॥ ১৫০ ॥

ENGLISH.—Even a young Brahmin who is the author of regeneration or Vedic birth, and who can direct and rule as to one's own duties is lawfully the father of an old man. (150).

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।
पुत्त्रका इतिहोवाच ज्ञानेन परिगृह्य तान् ॥ १५१ ॥

PROSE.—शिशुः कविः आङ्गिरसः पितॄन् अध्यापयामास, तान् ज्ञानेन परिगृह्य पुत्रका इतिह उवाच ॥ १५१ ॥

KULLUKA.—प्रकृतानुरूपार्थवादमाह अध्यापयामासेति । आङ्गिरसः पुत्रो बालः कविर्विद्वान् पितॄन् गौणान् पितृव्यतत्पुत्रादीनधिकवयसोऽध्यापितवान् तान् ज्ञानेन परिगृह्य शिष्यान् कृत्वा पुत्रका इति आजुहाव इतिहेत्यव्ययं पुरावृत्तसूचनार्थम् ॥ १५१ ॥

GRAMMAR.—1. आङ्गिरसः अङ्गिरसः पुत्रः आङ्गिरसः । गोत्रप्रत्ययस्य लुक् बहुवचने अङ्गिरसः तद्गोत्रापत्यानि । अङ्गिरस् + अण् । 2. कविः विद्वान् । कु + इन् । 3. ज्ञानेन करणे तृतीया । 4. इतिह it has been taken as a single अव्यय । However it may be split up as इति and ह । ह indicates traditional history.

*Change of voice*—शिशुना कविना आङ्गिरसेन पितरः अध्यापयामासिरे ते पुत्रका इतिह ऊचिरे ॥ १५१ ॥

BENGALI.—পূর্ব্বকালে অঙ্গিরার পুত্র বয়সে কনিষ্ঠ হইয়াও পিতৃতুল্য পিতৃব্য ও অধিকবয়স্ক তৎপুত্র প্রভৃতিকে বেদপাঠ করাইয়াছিলেন, এবং তাঁহাদিগকে জ্ঞান দ্বারা গ্রহণ করিয়া অর্থাৎ শিষ্য করিয়া পুত্রগণ বলিয়া আহ্বান করিয়াছিলেন ॥ ১৫১ ॥

ENGLISH.—The wise son of Angiras, while a child, taught his (father-like) uncles ; and taking them to be his disciples on account of his (superior) wisdom and knowledge addressed them, so the story goes, as "my boys." (151).

ते तमर्थमपृच्छन्त देवानागतमन्यवः ।
देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥ १५२ ॥

PROSE.—आगतमन्यवः ते देवान् तं अर्थं अपृच्छन्त देवाः च समेत्य एतान् ऊचुः शिशुः न्याय्यं वः उक्तवान् ॥ १५२ ॥

KULLUKA.—ते तमर्थमपृच्छन्तेति । ते पितृतुल्याः पुत्रका इत्युक्ता अनेन जातक्रोधाः पुत्रकशब्दार्थं देवान् पृष्टवन्तः देवाश्च पृष्टा मिलित्वा एतानवोचन् युष्मान् यत् शिशुः पुत्रशब्देनोक्तवान् तद्युक्तम् ॥ १५२ ॥

GRAMMAR.—1. आगतमन्यवः आगतः मन्युः क्रोधो येषां ते बहुव्रीहिः। 2. अर्थम् मुख्यं कर्म्म of अपृच्छन्त। 3. देवान् गौणकर्म्म of अपृच्छन्त। 4. देवाः Nom. to the verb ऊचुः। 5. एतान् गौणकर्म्म of ऊचुः। 6. न्याय्यम् न्यायात् अनपेतं न्याय्यम्। न्याय+यत्। 7. वः गौणकर्म्म of उक्तवान्। 8. अपृच्छन्त प्रच्छ लङ् अन्त। प्रायो निरङ्कुशत्वादात्मनेपदम्।

*Change of voice.*—आगतमन्युभिः तैः देवाः तं अर्थं अपृच्छ्यन्त देवैः एते ऊचिरे न्याय्यं यूयं शिशुनोक्ताः॥ १५२॥

BENGALI.—পুত্রক শব্দে সম্বোধিত হইয়া সেই পিতৃতুল্য পিতৃব্যাদি গুরুজন ক্রুদ্ধ হইয়া দেবতাদিগের নিকট পুত্রক শব্দের অর্থ জিজ্ঞাসা করেন; দেবতাগণ একত্র মিলিত হইয়া তাহাদিগকে বলিয়াছিলেন, শিশু ন্যায্যরূপেই তোমাদিগকে পুত্রক বলিয়া সম্বোধন করিয়াছে॥ ১৫২॥

ENGLISH.—They with anger rising (in their heart) asked the gods about the (just) application of the term (i.e. the form of address). And the gods meeting together told them that the child had justly called them so. (152).

**अज्ञो भवति वै बालः पिता भवति मन्त्रदः।**
**अज्ञं हि बाल मित्याहुः पितेत्येवतु मन्त्रदम्॥ १५३॥**

PROSE.—अज्ञः वै बालः भवति, मन्त्रदः पिता भवति हि अज्ञं बालं इति, मन्त्रदं पिता इत्येव आहुः॥ १५३॥

KULLUKA.—अज्ञ इति। वैशब्दोऽवधारणे अज्ञएव बालो भवति नत्वल्पवयाः मन्त्रदः पिता भवति मन्त्रग्रहणं वेदोपलक्षणार्थं यो वेदमध्यापयति व्याचष्टे स पिता॥ १५३॥

GRAMMAR.—1. बालः विधेय विशेषण of अज्ञः। 2. पिता विधेय विशेषण of मन्त्रदः। 3. बालम् same case with अज्ञं no connection with इति which means एवम् *i. e.* अन्वयेन न अभिधानम्। 4. पिता इति अत्र निपातेनाभिधानात् प्रथमा।

*Change of voice.*—अज्ञेन बालेन भूयते, मन्त्रदेन पित्रा भूयते, अज्ञः बालः इति मन्त्रदः पिता इत्युच्यते॥ १५३॥

BENGALI.—যে ব্যক্তি মূর্খ, বয়োজ্যেষ্ঠ হইলেও সে ব্যক্তিকে বালক বলে, যে ব্যক্তি বেদ অধ্যয়ন করান তিনি বয়ঃকনিষ্ঠ হইলেও পিতা হন; কেননা পণ্ডিতগণ অজ্ঞ ব্যক্তিকে বালক এবং বেদোপদেষ্টাকে পিতা বলেন॥ ১৫৩॥

ENGLISH.—One devoid of knowledge or experience is a child; and one who imparts instruction into the Vedas is a father. They call an inexperienced or ignorant man a child, and the initiatior into the Vedas a father. (153).

न हायनैर्न पलितैर्न वित्तेन न वन्धुभिः।

ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान्॥ १५४॥

PROSE.—ऋषयः धर्म्मं चक्रिरे न हायनैः न पलितैः न वित्तेन न वन्धुभिः (किन्तु) यःअनूचानः स (एव) नः महान् (भवति)॥ १५४॥

KULLUKA.—यस्मात् पूर्व्वेऽपि सुनयोऽस्य वालमित्यूचुः मन्त्रदश्च पितेत्येवाब्रवन् इत्यर्थहेतुमाह न हायनैरिति। न वहुभिर्व्वर्षैर्न केशश्मश्रुलोमभिः शुक्लैः न वहुना धनेन न पितृव्यलादिभिर्व्वन्धुभावैः समुदितैरप्येतैर्न महत्त्वं भवति किन्तु ऋषय इमं धर्म्मं क्रतवन्तः यः साङ्गवेदाध्येता सोऽस्माकं महान् सम्मतः॥ १५४॥

GRAMMAR.—1. हायनैः &c. हेतौ तृतीया। 2. अनूचानः अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे इत्यमरः। वेदस्य अनुवचनं क्रतवान् अनूचानः अनु-पूर्व्वात् वचेः कर्त्तरि कानच्। By उपेयिवाननाश्वाननूचानश्च। निपातनात्। 3. नः निर्द्धारणे षष्ठी।

*Change of voice.*—ऋषिभिः धर्म्मः चक्रे etc. ॥ १५४॥

BENGALI.—ঋষিগণ নিয়ম করিয়াছিলেন, বয়স দ্বারা, কি কেশাদির পকতা দ্বারা, কি ধনদ্বারা কি পিতৃব্যাদিসম্বন্ধ দ্বারা অথবা এই সকল মিলিত গুণ দ্বারা মহত্ব হইবে না, কিন্তু যিনি সাঙ্গ বেদে পণ্ডিত তিনিই আমাদের মধ্যে মহৎ শব্দ বাচ্য॥ ১৫৪॥

ENGLISH.—Greatness is due not to years, not to the whiteness of hair or beard, not to wealth, and not to relationship. The sages laid down it as a rule that he who could teach the Vedas together with their subsidiary branches of study was great among them. (154).

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः।

वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः॥ १५५॥

PROSE.—विप्राणां ज्ञानतः, क्षत्रियाणां तु वीर्य्यतः, वैश्यानां धनधान्यतः, शूद्राणां एव जन्मतः ज्यैष्ठं (भवति)॥ १५५॥

KULLUKA.—विप्राणामिति ब्राह्मणानां विद्यया क्षत्रियाणां पुनर्वीर्य्येण वैश्यानां धान्यवस्त्रादिधनेन शूद्राणामेव पूर्व्वजन्मना श्रेष्ठत्वम्। सर्व्वत्र तृतीयार्थे तसिः॥ १५५॥

GRAMMAR.—1. विप्राणाम् शेषे षष्ठी। 2. ज्ञानतः करणे तृतीया स्थाने तसिः। 3. वीर्य्यतः। 4. धान्यधनतः धान्यानि च धनानि च धान्यधनानि तैः पूर्व्ववत् तसिः। 5. जन्मतः जन्मना इत्यर्थः। 6. ज्यैष्ठम् ज्येष्ठस्य भावः। ज्येष्ठ + ष्यण्।

*Change of voice.*—ज्यैष्ठेन (भूयते)॥ १५५॥

BENGALI.—জ্ঞান দ্বারা ব্রাহ্মণদিগের মধ্যে, পরাক্রম দ্বারা ক্ষত্রিয়দিগের মধ্যে এবং বয়স দ্বারা শূদ্রদিগের মধ্যে শ্রেষ্ঠত্ব জন্মে॥ ১৫৫॥

ENGLISH.—Among Brahmans seniority is acquired by (or due to) knowledge; among Kshatriyas by strength, among Vaisyas by wealth and property, and among Sudras by birth. (155).

न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥ १५६॥

PROSE.—येन अस्य शिरः पलितं तेन वृद्धः न भवति, युवा अपि यः अधीयानः देवाः तं स्थविरं विदुः॥ १५६॥

KULLUKA.—न तेनेति। न तेन वृद्धो भवति येनास्य शुक्लकेशं शिरः किन्तु युवापि सन् विद्वान् तं देवाः स्थविरं जानन्ति॥ १५६॥

GRAMMAR.—1. येन इत्थं तृतीया। 2. वृद्धः वृध+क्तः कर्त्तरि। वर्द्धते अवर्द्धिष्ट वबृधे। 3. अधीयानः अधि—इङ्+शानच्। अधीते अध्यैष्ट अध्यगीष्ट। 4. देवाः Nom. to विदुः। 5. स्थविरं विधेयविशेषणम् of तम्। 6. विदुः विद्+उस् विदोलटो वा इति पक्षे लटि लिङ्कादेशः।

*Change of voice.*—न भूयते। युना येन अधीयानेन भूयते स देवैः स्थविरः विद्यते॥ १५६॥

BENGALI.—যে কারণে মস্তক পলিত হয়, সে কারণে লোককে বৃদ্ধ বলে না, কিন্তু বয়সে যুবা হইলেও যিনি বেদাদিশাস্ত্রজ্ঞ দেবতাগণ তাহাকেই বৃদ্ধ বলেন॥ ১৫৬॥

ENGLISH.—One does not become old by the fact that his head has turned grey. The gods know him to be old who, though young, is read in the Vedas (156).

**यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः।**
**यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥ १५७॥**

PROSE.—यथा काष्ठमयः हस्ती यथा चर्म्ममयः मृगः यश्च विप्रः अनधीयानः ते त्रयः नाम बिभ्रति॥ १५७॥

KULLUKA.—यथा काष्ठमय इति। यथा काष्ठघटितो हस्ती, यथा चर्म्मनिर्म्मितो मृगः यश्च विप्रो नाधीते त्रय एते नाममात्रं दधति नतु हस्त्यादिकार्य्यं शत्रुवधादिकं कर्त्तुं क्षमन्ते॥ १५७॥

GRAMMAR.—1. काष्ठमयः काष्ठ+मयट्। विकारार्थे मयट्। 2. चर्म्ममयः do. 3. बिभ्रति भृञ+अन्ति लट्। अभ्यासात् अभ्रत।

*Change of voice.*—तैः त्रिभिः नाम भ्रियते॥ १५७॥

BENGALI.—কাষ্ঠনির্ম্মিত হস্তী ও চর্ম্মনির্ম্মিত মৃগ যেরূপ শত্রুবধাদি কার্য্য সম্পাদন করিতে পারে না, যে ব্রাহ্মণ শাস্ত্রজ্ঞ না হন তিনিও সেইরূপ ব্রাহ্মণের কোন কার্য্য সম্পাদন করিতে পারেন না; এই তিনটিই কেবল সেই সেই নাম ধারণ করে মাত্র॥ ১৫৭॥

ENGLISH.—As a wooden elephant, and as a deer made of leather, so a Brahman not reading the Vedas—these three hold the name or title only. (157).

**यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफला।**
**यथाचाज्ञेऽफलंदानं तथाविप्रोऽनृचोऽफलः॥ १५८॥**

PROSE.—यथा षण्ढः स्त्रीषु अफलः यथा गौः गवि च अफला, यथा अज्ञे दानं अफलं तथा अनृचः विप्रः अफलः॥ १५८॥

KULLUKA.—यथा षण्ड इति। यथा नपुंसकं स्त्रीषु निष्फलं, यथा स्त्रीगवी गव्यामेव निष्फला, यथा च अज्ञे दानमफलं तथा ब्राह्मणोऽप्यनधीयानो निष्फलः श्रौतस्मार्त्तकर्म्मानर्हतया तत्फलरहितत्वात्॥ १५८॥

GRAMMAR.—1. षण्ढः नपुंसकम् nominative भवति understood. 2. गौः feminine. 3. अफला qualifies गौः। 4. अनृचः न विद्यन्ते ऋचः मन्त्राः यस्मिन् सः अनृचः ऋक् पूरब्धूःपथामानक्षे इति समासान्तः अ प्रत्ययः। Bhatto says अनृचबह्वृचावध्येतर्य्येव। नेह अनृक् साम।

*Change of voice.*—ষণ্ঢেন অফলেন ; গবা...অফলয়া, দানেন...অফলেন ভূয়তে তথা অনৃচেন বিপ্রেণ অফলেন ভূয়তে ॥ ১৫৮॥

BENGALI.—যেমন নপুংসক ব্যক্তি স্ত্রীতে কোন সন্তান উৎপাদন করিতে পারে না, যেমন স্ত্রীজাতীয় গো অন্য গাভীতে সন্তান উৎপাদন করিতে পারে না, যেমন অজ্ঞ ব্যক্তিকে দান করিলে কোন ফল উৎপন্ন হয় না, সেইরূপ বেদহীন ব্রাহ্মণ কোন ফল দান করে না ॥ ১৫৮ ॥

ENGLISH.—As a eunuch is useless with regard to women, as a cow is useless with regard to another cow; as a gift made to a foolish or ignorant person is useless; so a Brahman without the knowledge of the Vedas is useless. (158).

अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम्।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्ममिच्छता ॥ १५९ ॥

PROSE.—ধর্ম্মং ইচ্ছতা অহিংসয়া এব ভূতানাং শ্রেয়োঽনুশাসনং কার্য্যং মধুরা শ্লক্ষ্ণা বাক্ চ প্রয়োজ্যা ॥ ১৫৯ ॥

KULLUKA.—অহিংসয়ৈবেতি। ভূতানাং শিষ্যাণাং প্রকরণাৎ শ্রেয়োঽর্থমনুশাসনমনতিহিংসয়া কর্ত্তব্যং রজ্জ্বা বেণুদলেন বেত্যল্পহিংসায়া অভ্যনুজ্ঞানাৎ। বাণী চ মধুরা প্রীতিজননী শ্লক্ষ্ণা যা নোচ্চৈরুচ্যতে সা শিষ্যশিক্ষার্থে ধর্ম্মবৃদ্ধিমিচ্ছতা প্রয়োক্তব্যা ॥ ১৫৯ ॥

GRAMMAR.—1. ধর্ম্মম্ Acc. of ইচ্ছতা। 2. ইচ্ছতা qualifies অধ্যাপকেন understood. 3. ভূতানাম্ refers to শিষ্যাণাম্। 4. শ্রেয়োনুশাসনম্ শ্রেয়োঽর্থং অনুশাসনং শ্রেয়োঽনুশাসনম মধ্যপদলোপী কর্ম্মধারয়:। 5. ন হিংসা পীড়নং অহিংসা তয়া। 6. শ্লক্ষ্ণা শ্লিষ্+ক্স: ঔণাদি:। qualifies বাক্।

*Change of voice.*—শ্রেয়োঽনুশাসনেন কার্য্যম্ ভূয়তে মধুরয়া শ্লক্ষ্ণয়া বাচা প্রয়োজ্যয়া ভূয়তে ॥ ১৫৯ ॥

BENGALI.—যে অধ্যাপক ধর্ম্ম ইচ্ছা করেন তিনি শিষ্যগণকে রজ্জু বা বেণুদল দ্বারা অল্প হিংসাযুক্ত শাসন করিবেন, এবং মধুর মৃদু ও প্রীতিজনক বাক্য প্রয়োগ করিবেন ॥ ১৫৯ ॥

ENGLISH.—A preceptor wishing to abide by law and virtue should give instruction for the benefit of his students without doing

injury (by way of punishment) to them. And he should use sweet and mild words. (159).

यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्व्वदा।
स वै सर्व्वमवाप्नोति वेदान्तावगतं फलम्॥ १६०॥

PROSE—यस्य वाङ्मनसी शुद्धे सर्व्वदा सम्यक् गुप्ते च स वै सर्व्वं फलं वेदान्तावगतं अवाप्नोति॥ १६०॥

KULLUKA.—इदानीं पुरुषमात्रस्य फलं धर्म्मं वाङ्मनसंयममाह न अध्यापयितुरेव यस्येति। यस्य वाङ्मनश्चोभयं शुद्धं भवति वागनृतादिभिरदुष्टा मनश्च रागद्वेषादिभिरदूषितं भवति एते वाङ्मनसे निषिद्धविषयप्रकरणे सर्व्वदा यस्य पुनः सुरक्षिते भवतः स वेदान्तावगतं सर्व्वं फलं सर्व्वज्ञत्वसर्व्वेश्वरत्वादिरूपं मोक्षलाभादवाप्नोति॥ १६०॥

GRAMMAR.—1. वाङ्मनसी वाक् च मनश्च वाङ्मनसे द्वन्द्वः। अचतुरादिसूत्रेण निपातनात् सिद्धम्। 2. वेदान्तावगतम् वेदान्ते अवगतं वेदान्तावगतम्। If read वेदान्तोपगतम् meaning the same.

*Change of voice.*—वाङ्मनसाभ्यां शुद्धाभ्यां गुप्ताभ्यां च भूयते तेन सर्व्वं फलं अवाप्यते॥ १६०॥

BENGALI.—যাহার বাক্য মিথ্যাদি দ্বারা এবং মন রাগদ্বেষাদির দ্বারা অদুষ্ট এবং নিষিদ্ধ বিষয় হইতে সুরক্ষিত, তিনি মোক্ষলাভানন্তর বেদান্তশাস্ত্রে পরিগীত সর্ব্বজ্ঞত্ব ও সর্ব্বেশ্বরত্বাদি সমস্ত ফল লাভ করেন॥ ১৬০॥

ENGLISH.—He whose mind and speech are pure and are always carefully guarded reaps all the fruit known in the Vedanta or Upanishads. (160).

नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः।
ययास्योद्विजते वाचा नालोक्यांतामुदीरयेत्॥ १६१॥

PROSE.—आर्त्तः अपि अरुन्तुदः न स्यात् परद्रोहकर्म्मधीः न (स्यात्) यया वाचा अस्य (परः) उद्विजते तां अलोक्यां (वाचं) न उदीरयेत्॥ १६१॥

KULLUKA.—अयमपि पुरुषमात्रस्यैव धर्म्मो नाध्यापकस्यैत्याह नारुन्तुद इति। आर्त्तः पीड़ितोऽपि नारुन्तुदः स्यात् न मर्म्मपीड़ाकरं तत्त्वदूषणमुदाहरेत्। तथा परस्य द्रोहोऽपकारस्तदर्थं कर्म्मबुद्धिश्च न कर्त्तव्या। तथा यया वाचा आस्यपरो व्यथते तां मर्म्मस्पृशमयालोक्यां स्वर्गादिप्राप्तिविरोधिनीं न वदेत्॥ १६१॥

GRAMMAR.—1. आर्त्तः आ+ऋतः। 2. अरुन्तुदः अरुम् तुद+खश् मुम्। उपपद समासः। 3. परद्रोहकर्म्मधीः द्रोहमूलं कर्म्म धीश्च द्रोहकर्म्मधियौ परस्य द्रोहकर्म्मधियौ यस्य स परद्रोहकर्म्मधीः बहुव्रीहिः। 4. वाचा करणे तृतीया। 5. अलोक्याम् लोकाय स्वर्गादिलोकाय हिता लोक्या नलोक्या ताम्। qualifies ताम्। 6. उदीरयेत् उत्—ईर+णिच्+यात्।

*Change of voice.*—आर्त्तेन अपि अरुन्तुदेन न भूयेत, परद्रोहकर्म्मधिया च न भूयेत, सा अलोक्या न उदीर्य्येत॥ १६१॥

BENGALI.—একান্ত পীড়িত হইলেও অন্যের মর্ম্মপীড়াদায়ক কোন দোষের উল্লেখ করিবে না, অন্যের দ্রোহজনক চিন্তা ও কর্ম্ম করিবে না, যে বাক্য দ্বারা অন্য ব্যক্তি উদ্বেগ পায় তাহা স্বর্গপ্রাপ্তির বিরোধিনী তাহা উচ্চারণ করিবে না॥ ১৬১॥

ENGLISH.—Though distressed, one should not be caustic or acrimonious (in his remarks); and his thought and action should not be directed to the injury of others. And he should not utter words which do not secure heaven, and by which another is aggrieved or afflicted. (161).

सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्व्वदा॥ १६२॥

PROSE.—ब्राह्मणः विषादिव सम्मानात् नित्यं उद्विजेत सर्व्वदा अमृतस्येव अवमानस्य च आकाङ्क्षेत्॥ १६२॥

KULLUKA.—सम्मानादिति। ब्राह्मणः सम्मानात् विषादिव सर्व्वदोद्विजेत सम्माने प्रीतिं न कुर्य्यात्। अमृतस्येव सर्व्वस्माल्लोकादवमानस्याकाङ्क्षेत् अवमाने परैः कृतेऽपि अमर्षात्मकं खेदं न कुर्य्यात्। मानावमानयोर्द्वन्द्वसहिष्णुत्वमनेन विधीयते॥ १६२॥

GRAMMAR.—1. विषादिव इवेन समासः विभक्त्यलोपश्च। भयार्थक-धातोः प्रयोगे अपादानत्वात् पञ्चमी। 2. अमृतस्येव पूर्व्ववत् समासः शेषत्वविवक्षया षष्ठी। 3. अवमानस्य शेषत्वविवक्षया षष्ठी कर्म्मस्थाने। 4. आकाङ्क्षेत् आ—काङ्क्ष+यात्।

*Change of voice.*—ब्राह्मणेन उद्विज्येत। आकाङ्क्ष्येत॥ १६२॥

BENGALI.—ব্রাহ্মণ নিত্যই বিষবৎ সম্মান হইতে ভয় পাইবেন এবং অমৃতের ন্যায় অবমাননার আকাঙ্ক্ষা করিবেন। (অবমান প্রাপ্ত হইয়া খেদ প্রাপ্ত হইবেন না)॥ ১৬২॥

ENGLISH.—A Brahman should always be afraid of respect and honour as of poison; and he should always look forward to dishonour as to ambrosia. (162).

सुखं ह्यवमतः शेते सुखञ्च प्रतिबुध्यते।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ १६३ ॥

PROSE.—अवमतः हि सुखं शेते सुखं प्रतिबुध्यते सुखं अस्मिन् लोके चरति अवमन्ता विनश्यति ॥ १६३ ॥

KULLUKA.—अवमानसहिष्णुत्वे हेतुमाह सुखं ह्यवमतः शेते इति। यस्मादवमाने परेण तत खेदमकुर्व्वाणः सुखं निद्राति अन्यथा अवमानदुःखेन दह्यमानः कथं निद्रां लभते कथञ्च सुखम् प्रतिबुध्यते प्रतिबुद्धश्च कथं लोके सुखं कार्य्येषु चरति। अवमानकर्त्ता तेन पापेन विनश्यति ॥ १६३ ॥

GRAMMAR.—1. सुखं क्रियाविशेषणम्। 2. अवमतः अवमन+क्तः कर्म्मणि मन्यते सेते अनेन। 3. अव+मन्+तृन् अवमन्ता।

*Change of voice.*—अवमतेन शय्यते, प्रतिबुध्यते चर्य्यते, अवमन्त्रा विनश्यते।

BENGALI.—যাঁহাকে অবমানিত করা হয় তিনি সুখে শয়ন করেন, সুখে জাগ্রত হন, ভুবনে সুখে বিচরণ করেন, কিন্তু যে অবমান করে সে নাশ প্রাপ্ত হয় ॥ ১৬৩ ॥

ENGLISH.—Being dishonoured he lies down happily and quietly; awakes happily, and roams about in the world happily; but he who dishonours comes to ruin. (163).

अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः।
गुरौ वसन् सञ्चिनुयाद्ब्रह्माधिगमिकं तपः ॥ १६४ ॥

PROSE.—अनेन क्रमयोगेन संस्कृतात्मा द्विजः गुरौ वसन् शनैः ब्रह्माधिगमिकं तपः सञ्चिनुयात् ॥ १६४ ॥

KULLUKA.—अनेनेति। अनेन क्रमकथितोपायेन जातकर्म्मादिना उपनयनपर्य्यन्तेन संस्कृतो द्विजो गुरुकुले वसन् शनैरत्वरया वेदग्रहणार्थं तपोऽभिहितमभिधास्यमाननियमकलापरूपम् अनुतिष्ठेत् विध्यन्तरसिद्धस्यापि अयमनुवादोऽध्ययनाङ्गत्वबोधनाय ॥ १६४ ॥

GRAMMAR.—1. क्रमयोगेन करणे तृतीया। 2. संस्कृतात्मा संस्कृत आत्मा येन सः। 3. गुरौः गुरुगृहे अधिकरणे सप्तमी। 4. सञ्चिनुयात् सम्–चि+यात्।

5. ब्रह्माधिगमिकं अधिगमः प्राप्तिः प्रयोजनमस्य इति आधिगमिकं। तदस्य प्रयोजनमिति ठक्। ब्रह्मणः आधिगमिकं इति ब्रह्माधिगमिकं qualifies तपः। 6. तपः Acc. of सञ्चिनुयात्।

*Change of voice.*—संस्कृतात्मना द्विजेन...वसता...तपः सञ्चीयेत ॥१६४॥

BENGALI.—দ্বিজাতিগণ পূর্ব্বোক্ত প্রণালী অনুসারে জাতকর্ম্মাদি সংস্কার দ্বারা সংস্কৃত হইয়া গুরুকুলে বাসকরতঃ ধীরে ধীরে বেদগ্রহণজন্য উক্ত ও বক্ষ্যমাণ ব্রতাদিরূপ তপস্যা সঞ্চয় করিবেন ॥ ১৬৪ ॥

ENGLISH.—A twice-born having purified and reformed his ownself in the order said above, and living with or in the house of his preceptor, should slowly lay up austerities whereby the knowledge of the Scriptures can be attained. (164).

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥१६५॥

PROSE.—द्विजन्मना तपोविशेषैः विधिचोदितैः विविधैः व्रतैश्च कृत्स्नः सरहस्यः वेदः अधिगन्तव्यः ॥ १६५ ॥

KULLUKA.—अध्ययनाङ्गत्वमेव स्पष्टयति तपोविशेषैरिति। तपोविशेषैर्नियम-कलापैर्विविधैर्बहुप्रकारैश्च अभिधीयमानत्वाचान्तः इत्यादिभिरोक्तैः सैवैतेनान्त नियमा-नित्यादिभिर्व्वक्ष्यमाणैरपि व्रतैश्चोपनिषन्महानाम्निकादिभिर्व्विधिदर्शितैः स्मृत्युक्तविहितैः समग्रो वेदो मन्त्रब्राह्मणात्मकः सोपनिषत्कोऽध्येतव्यः रहस्यमुपनिषत् प्राधान्य-ख्यापनाय पृथङ्निर्द्देशः ॥ १६५ ॥

GRAMMAR.—1. तपोविशेषैः। 2. व्रतैः करणे तृतीया। 3. द्विजन्मना कर्त्तरि तृतीया। 4. सरहस्यः रहस्येन सह वर्त्तमानः सरहस्यः qualifies वेदः। 5. कृत्स्नः सकलः qualifies वेदः। कृत् + क्स्नः by कृत्यधृष्यां क्स्नः।

*Change of voice.*—वेदेन अधिगन्तव्येन भूयते ॥ १६५ ॥

BENGALI.—ব্রাহ্মণাদি দ্বিজাতিত্রয় নিয়মপালনরূপ তপস্যা দ্বারা, এবং বিধিবিহিত ব্রতানুষ্ঠানদ্বারা উপনিষৎ সহ মন্ত্রব্রাহ্মণাত্মক সমস্ত বেদ অধ্যয়ন করিবেন ॥ ১৬৫ ॥

ENGLISH.—The entire Veda together with its esoteric teachings (the Upanishadas) should be mastered by a twice-born by means of special forms of penance and various vows directed by formal injunctions. (165).

वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपःपरमिहोच्यते ॥ १६६ ॥

PROSE.—द्विजोत्तमः तपः तप्स्यन् वेदं एव सदा अभ्यस्येत् हि इह वेदाभ्यासः विप्रस्य परं तपः उच्यते ॥ १६६ ॥

KULLUKA.—एव नियमानामङ्गत्वमुक्तं तत् कृतस्वाध्यायाध्ययनमनेन विधत्ते वेदमेवेति। तपस्तप्स्यन् चरिष्यन् द्विजो वेदमेव यत्नार्थमावर्त्तयेत् यस्माद्वेदाभ्यास एव विप्रादेरिह लोके प्रकृष्टं तपो मुनिभिरभिधीयते ॥ १६६ ॥

GRAMMAR.—1. अभ्यस्येत् अभि अस दिवादि+यात्। आस्यत् लुङ्। 2. तपस्यन् तप्+स्यत। 3. द्विजेषु उत्तमः। 4. वेदस्य अभ्यासः; 5. परम् qualifies तपः।

*Change of voice.*—वेदः अभ्यस्येत तप्स्यता द्विजोत्तमेन। वेदाभ्यासं परं तपः वक्ति ॥ १६६ ॥

BENGALI.—যে দ্বিজ তপস্যা করিতে ইচ্ছা করেন, তিনি বেদগ্রহণের উদ্দেশ্যে সর্ব্বদা বেদ অধ্যয়ন করিবেন, কেননা ইহলোকে ব্রাহ্মণাদি দ্বিজাতির পক্ষে বেদাভ্যাসকে পরম তপস্যা বলিয়া মুনিগণ নির্দ্দেশ করিয়াছেন ॥ ১৬৬ ॥

ENGLISH.—A Brahman who would practise austerities should always repeat (or recite) the Veda. For the recitation of the Vedas is said to be the best penance for a Brahman. (166).

आ हैव स नखाग्रेभ्यः परमं तप्यते तपः।
यःस्रग्व्यपिद्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥१६७॥

PROSE.—यः द्विजः स्रग्वी अपि अन्वहं शक्तितः स्वाध्यायं अधीते सः आ नखाग्रेभ्यः परमं तपः तप्यते ॥ १६७ ॥

KULLUKA.—स्वाध्यायाध्ययनस्तुतिरियं आ हैवेति। हशब्दः परमशब्दाभिहितस्यापि प्रकर्षस्यातिशयसूचकः स द्विज आ नखाग्रेभ्य एव चरणनखपर्य्यन्तं सर्व्वदेहव्यापकमेव प्रकृष्टतमं तपस्तप्यते यः स्रग्व्यपि कुसुममालाधार्य्यपि प्रत्यहं यथाशक्ति स्वाध्यायमधीते। स्रग्व्यपीत्यनेन वेदाध्ययनाय ब्रह्मचारिनियमत्यागमपि स्तुत्यर्थं दर्शयति। तप्यते तप इति तपस्तपःकर्म्मकस्यै वेति यगात्मनेपदे भवतः ॥ १६७ ॥

GRAMMAR.—1. नखाग्रेभ्यः नखानां अग्राणि तेभ्यः आङ् योगे पञ्चमी। 2. तप्यते यक् आत्मनेपदञ्च कर्त्ता कर्म्मवच्च by तपस्तपः कर्म्मकस्यैव। तापस; तपः

तप्यते अर्ज्जयतीत्यर्थः। अतम। 3. स्रग्वी स्रज+विनिः। 4. स्वाध्यायं Acc. of अधीते। 5. आनखेभ्यः नखेः तृतीया स्थाने। 6. अन्वहम् अहनि अहनि अन्वहम् अव्ययीभावः। समासान्त टच् by अनश्च अन्नन्तात् अव्ययीभावात् टच्स्यात्।

*Change of voice*—तेन परमं तपः तप्यते स्रग्विना येन द्विजेन......स्वाध्यायः अधीयते ॥ १६७ ॥

BENGALI.—ব্রহ্মচারীর নিয়মলঙ্ঘনপূর্ব্বক মালাধারণ করিয়াও যিনি প্রত্যহ যথা-শক্তি বেদ অধ্যয়ন করেন তিনি নখাগ্র হইতে সমস্ত শরীর দ্বারা প্রকৃষ্ট তপস্যা করিয়া থাকেন ॥ ১৬৭ ॥

ENGLISH.—That twice-born, who, though wearing garlands, reads the Veda every day according to his might, practises the best penance affecting his whole body up to the tip of the foot-nails. (167).

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ १६८ ॥**

PROSE.—यः द्विजः वेदं अनधीत्य अन्यत्र श्रमं कुरुते स जीवन् एव सान्वयः आशु शूद्रत्वं गच्छति ॥ १६८ ॥

KULLUKA.—योऽनधीत्येति। यो द्विजो वेदमनधीत्य अन्यत्रार्थशास्त्रादौ श्रमं यत्नातिशयं करोति स जीवन्नेव पुत्रपौत्रादिसहितः शीघ्रं शूद्रत्वं गच्छति। वेदमनधीत्यापि स्मृतिवेदाङ्गाध्ययने विरोधाभावः। अतएव शङ्खलिखितौ न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥ १६८ ॥

GRAMMAR.—1. अन्वयेन सह वर्त्तमानः सान्वयः।

*Change of voice.*—येन द्विजेन...श्रमः क्रियते...तेन जीवता सान्वयेन शूद्रत्वं गम्यते ॥ १६८ ॥

BENGALI.—যে দ্বিজ বেদ অধ্যয়ন না করিয়া অর্থশাস্ত্র প্রভৃতি পাঠে পরিশ্রম করে সে জীবিতাবস্থায়ই সবংশে অতি সত্বর শূদ্রত্ব প্রাপ্ত হয়। (বেদ অধ্যয়ন না করিয়া বেদাঙ্গ ও স্মৃতি অধ্যয়ন করিলে ঐরূপ দোষ হয় না)॥ ১৬৮ ॥

ENGLISH.—That twice-born, who without reading the Veda bestows his labours on other branches of study, does soon become in the very life reduced to the state or condition of a Sudra, together with his family. (168).

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात्॥ १६९॥

PROSE. – द्विजस्य अग्रे अधिजननम् मातुः, द्वितीयं अधिजननं मौञ्जिबन्धने, तृतीयं अधिजननं यज्ञदीक्षायां श्रुतिचोदनात्॥ १६९॥

KULLUKA. – द्विजानां तत्र तत्राधिकारश्रुतेर्द्विजत्वनिरूपणार्थमाह मातुरग्र इति। मातुः सकाशादादौ पुरुषस्य जन्म, द्वितीयं मौञ्जीबन्धने उपनयने आपो: संज्ञा छन्दसोर्बहुलमिति, ह्रस्वः। तृतीयं ज्योतिष्टोमादियज्ञदीक्षायां वेदश्रवणात्। तथाच श्रुतिः पुनर्वा एतमृत्विजः गर्भं कुर्व्वन्ति यद्दीक्षयन्तीति। प्रथम-द्वितीय-तृतीय-जन्मकथनञ्चेदं द्वितीयजन्मस्तुत्यर्थं द्विजस्यैव यज्ञदीक्षायामप्यधिकारात्॥ १६९॥

GRAMMAR. – 1. मातुः अपादाने पञ्चमी। 2. मौञ्जीबन्धने अधिकरणे सप्तमी। मौञ्जी has become मौञ्जि as accounted for by Kulluka. 3. श्रुतिचोदनात् श्रुतेः चोदनम् प्रेरणं श्रवणमित्यर्थः। हेतौ पञ्चमी। 4. अग्रे अधिकरणे सप्तमी or प्रथमार्थे सप्तमी अग्रे अधिजननम् = अग्रं (प्रथमम्) अधिजननम्।

*Change of voice.*—अधिजननेन भूयते......द्वितीयेन भूयते......तृतीयेन भूयते॥ १६९॥

BENGALI.—মাতা হইতে দ্বিজগণের প্রথম জন্ম হয়, উপনয়নকালে দ্বিতীয় জন্ম হয়, জ্যোতিষ্টোমাদি যজ্ঞকালে বেদশ্রবণ বশতঃ তৃতীয় জন্ম হয়। ১৬৯।

ENGLISH.—The first birth of a twice-born is from his mother; the second birth takes place at the time of fastening the girdle of the Munja grass; and the third birth takes place on account of listening to the Vedas at the time of initiation into a sacrifice (169).

तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते॥१७०॥

PROSE. – तत्र अस्य मौञ्जीबन्धनचिह्नितं यत् ब्रह्मजन्म तत्र अस्य सावित्री माता आचार्य्यस्तु पिता उच्यते॥ १७०॥

KULLUKA.—तत्रेति। तेषु त्रिषु जन्मसु मध्ये यदेतद्ब्रह्मग्रहणार्थं जन्म उपनयनसंस्काररूपं मेखलाबन्धनोपलक्षितं तत्रास्य माणवकस्य सावित्री माता आचार्य्यश्च पिता मातापितृसम्पाद्यत्वाज्जन्मनः॥ १७०॥

GRAMMAR.—1. मौञ्जीबन्धनेन चिह्नितम् । 2. ब्रह्मजन्म ब्रह्मग्रहणार्थं जन्म ब्रह्मजन्म मध्यपदलोपो कर्म्मधारयः । 3. तत्र सप्तमी ।

*Change of voice.*—येन मौञ्जीबन्धनचिह्नितेन ब्रह्मजन्मना भूयते...सावित्री मातरं आचार्य्यं पितरं वक्ति ॥ १७० ॥

BENGALI.—দ্বিজের উক্ত তিনটি জন্মের মধ্যে উপনয়নকালে মেখলাবন্ধনচিহ্নিত যে দ্বিতীয় জন্ম হয়, সেই জন্মের কালে সাবিত্রীই ইহার মাতা এবং আচার্য্যই ইহার পিতা বলিয়া গণ্য হন । ১৭০ ॥

ENGLISH.—In the second of these births which is marked by the fastening of the girdle of the Munja grass and which is due to initiation into the Veda, Gayatri is his mother, and the *acharya* is said to be his father. (170).

वेदप्रदानादाचार्य्यं पितरं परिचक्षते ।
न ह्यस्मिन् युज्यते कर्म्म किञ्चिदा मौञ्जिबन्धनात् ॥१७१॥

PROSE.—वेदप्रदानात् आचार्य्यं पितरम् परिचक्षते, अस्मिन् हि आमौञ्जिबन्धनात् किञ्चित् कर्म्म न युज्यते ॥ १७१ ॥

KULLUKA.—वेदप्रदानादिति । वेदाध्यापनादाचार्य्यं पितरं मन्वादयो वदन्ति पितृजन्महोपकारकत्वात् गौणं पितृत्वं महोपकारमेव दर्शयति न ह्यस्मिन्निति । यस्मादस्मिन्माणवके प्रागुपनयनात् किञ्चित् कर्म्म श्रौतं स्मार्त्तञ्च न सम्बध्यते न तत्राधिक्रियत इत्यर्थः ॥ १७१ ॥

GRAMMAR.—1. वेदप्रदानात् वेदस्य प्रदानम् तस्मात् हेतौ पञ्चमी । 2. मौञ्जीबन्धनात् आङ् योगे पञ्चमी । आपोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वम् ।

*Change of voice.*—आचार्य्यः पिता परिचक्ष्यते ॥ १७१ ॥

BENGALI.—উপনয়নের পূর্ব্বে কোন কর্ম্মে অধিকার জন্মে না; আচার্য্য বেদ প্রদান করিয়া (ঐ সকল কর্ম্মে অধিকার প্রদানরূপ) উপকার করিয়া থাকেন বলিয়া মন্বাদি মুনিগণ আচার্য্যকে গৌণ পিতা বলিয়া থাকেন । ১৭১ ॥

ENGLISH.—They call the *acharya* as father on account of his imparting instruction in the Veda. No work of any kind is enjoined or set down in reference to a twice-born until the fastening of the girdle of the Munja grass. (171).

**नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।**
**शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ १७२ ॥**

PROSE.—आ मौञ्जीबन्धनात् स्वधानिनयनात् ऋते ब्रह्म न अभिव्याहारयेत्, यावत् वेदे न जायते तावत् हि ( असौ ) शूद्रेण समः ॥ १७२ ॥

KULLUKA.—नाभिव्याहारयेदिति । आ मौञ्जीबन्धनादित्यनुवर्त्तते प्रागुपनयनाद्वेदं नोच्चारयेत् स्वधाशब्देन श्राद्धमुच्यते तन्निनीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्ज्जयित्वा मृतपितृको नवश्राद्धादौ मन्त्रानुच्चारयेत् तद्व्यतिरिक्तं वेदं नोदाहरेत् यस्माद् यावद्वेदं न जायते तावदसौ शूद्रेण तुल्यः ॥ १७२ ॥

GRAMMAR.—1. स्वधानिनयनात् स्वधा इत्यव्ययं स्वधा श्राद्धं तस्य निनयनम् सम्पादनं येन तत् स्वधानिनयनम् तस्मात् ऋते शब्दयोगे पञ्चमी । 2. शूद्रेण तुल्यार्थक शब्दयोगे तृतीया । 3. वेदे अधिकरणे सप्तमी 4. अभिव्याहारयेत् अभि – वि – आ – हृ + णिच् + यात् । स्वार्थे णिच् ।

*Change of voice.*—ब्रह्म न अभिव्याहार्य्येत । असौ न भूयते...न तेन जायते ॥ १७२ ॥

BENGALI.—উপনয়নের পূর্ব্বে শ্রাদ্ধ ভিন্ন অন্য কোন সময়ে বেদ উচ্চারণ করিবে না, যে পর্য্যন্ত উপনয়ন দ্বারা দ্বিতীয় জন্ম না হয়, তাবৎকাল শূদ্রের সমানই থাকে। ১৭২ ॥

ENGLISH.—Prior to the fastening of the girdle of the Munja grass one should not utter the Veda except the *mantras* by which the Sradha ceremony is done. For as long as he is not initiated into the Veda he is as good as a Sudra. (172).

**कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।**
**ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्व्वकम् ॥ १७३ ॥**

PROSE.—कृतोपनयनस्य अस्य क्रमेण विधिपूर्व्वकं व्रतादेशनं ब्रह्मणः ग्रहणञ्चैव इष्यते ॥ १७३ ॥

KULLUKA.—कृतोपनयनस्येति । यस्मादस्य माणवकस्य समिधमाधेहि माः दिवा स्वाप्सीरित्यादिव्रतादेशं वेदस्याध्ययनं मन्त्रब्राह्मणात्मकमेवाध्येष्यमाणस्याचान्त इत्यादि विधिपूर्व्वकमुपनीतस्योपदिश्यते तस्मादुपनयनात् पूर्व्वं न वेदमुदाहरेत् ॥ १७५ ॥

GRAMMAR.—1. कृतोपनयनस्य कृतं उपनयनं यस्य स तस्य। 2. व्रतादेशनम् व्रतस्य आदेशनम्। 3. ब्रह्मणः वेदस्य कर्तृकर्मणोः कृतीति षष्ठी।

*Change of voice.*—व्रतादेशनं ग्रहणं इष्यन्ति ॥ १७३ ॥

BENGALI.—উপনীত ব্যক্তির প্রতি ক্রমশঃ বিধিপূর্ব্বক ব্রত, দান ও বেদাধ্যয়ন বিহিত আছে। অতএব উপনয়নের পূর্ব্বে বেদ উচ্চারণ করিবে না॥ ১৭৩॥

ENGLISH.—The commands as to the observance of vows and the gradual initiation into the Veda according to due form are desired in respect of him when investing with the sacred thread has been done. (173).

यद्यस्य विहितं चर्म्म यत् सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४ ॥

PROSE.—यस्य यत् चर्म्म यत् सूत्रं विहितं या च मेखला विहिता यः दण्डः विहितः यच्च वसनं विहितं अस्य व्रतेषु अपि तत्तत् विहितम् ॥ १७४ ॥

KULLUKA.—यद्यस्येति। यस्य ब्रह्मचारिणो यानि चर्म्मसूत्रमेखलादण्डवस्त्राणि उपनयनकाले यद्यच्च विहितानि तानि गोदानादिकव्रतेष्वपि नवानि कर्त्तव्यानि ॥१७४॥

GRAMMAR.—1. तत् तत् सामान्ये नपुंसकम्।

*Change of voice.*—येन...चर्म्मणा येन सूत्रेण यया च मेखलया......... भूयते तेन तेन भूयते ॥ १७४ ॥

BENGALI.—উপনয়নকালে যে ব্রহ্মচারীর যেরূপ চর্ম্মসূত্র মেখলা দণ্ড ও বস্ত্র বিহিত আছে, সেই ব্রহ্মচারী গোদানাদি ব্রতকালেও সেই সেই রূপ চর্ম্মাদি ধারণ করিবে ॥১৭৪॥

ENGLISH.—In practising vows one should use the same thread, the same hide, the same girdle and the same staff as have been enjoined for him at the ceremony of investing with the sacred thread. (174).

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥ १७५ ॥

PROSE.—ब्रह्मचारी इन्द्रियग्रामं संनियम्य गुरौ वसन् आत्मनः तपोवृद्ध्यर्थम् इमान् नियमान् तु सेवेत ॥ १७५ ॥

KULLUKA.—सेवेतेति। ब्रह्मचारी गुरुसमीपे वसन् इन्द्रियसंयमं कृत्वात्मगताहृष्टवृद्ध्यर्थमिमान्नियमाननुतिष्ठेत् ॥ १७५ ॥

GRAMMAR.—1. ब्रह्मचारी ब्रह्म वेदं चरतीति ब्रह्मचारी उपपद समासः। 2. इन्द्रियग्रामम् Acc. of संनियम्य। 3. संनियम्य सम् + नि यम् ल्यप् अयंसीत्। 4. तपोवृद्ध्यर्थम् तपसो वृद्धिः तपोवृद्धिः तस्मै इदम् तपोवृद्ध्यर्थम् अर्थेन समासः विशेष्यलिङ्गताच Adv. 5. गुरौ आधारे सप्तमी। 6. सेवेत सेव + ईत। असेविष्ट।

*Change of voice.*—ब्रह्मचारिणा इमे नियमाः सेव्येरन् ॥ १७५ ॥

BENGALI.—ब्रह्मचारी इन्द्रियसंयमपूर्ब्बक गुरुगृहे वासकरतः निजेर तपस्या वृद्धिर जन्य वक्ष्यमाण नियमगुलि अनुष्ठान करिबेन। १७५ ॥

ENGLISH.—A student of the Veda, living with his preceptor, should, after having controlled the group of his senses observe the following rules for the sake of the welfare of his own penance. (175).

नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्च्चनञ्चैव समिदाधानमेव च ॥ १७६ ॥

PROSE.—(ब्रह्मचारी) नित्यं स्नात्वा शुचिः सन् देवर्षिपितृतर्पणं देवताभ्यर्चनं च समिदाधानं एव च कुर्य्यात् ॥ १७६ ॥

KULLUKA.—नित्यमिति प्रत्यहं स्नात्वा देवर्षिपितृभ्य उदकदानं प्रतिमादिषु हरिहरादिदेवपूजनं सायं प्रातश्च समिद्धोमं कुर्य्यात्। यत्तु गौतमीये स्नाननिषेधो ब्रह्मचारिणः सुखस्नानविषयः अतएव बौधायनः नाप्सु, श्लाघमानः स्नायात्। विष्णुनाच कालद्वयमभिषेकाग्निकार्य्यकारणमप्सु दण्डवन्मज्जनमिति ब्रुवाणेन वारद्वयं स्नानमुपदिष्टम् ॥ १७६ ॥

GRAMMAR.—1. स्नात्वा स्ना + क्त्वा अस्नासीत्। 2. देवर्षिपितृतर्पणम् देवाश्च ऋषयश्च पितरश्च देवर्षिपितरः तेषां तर्पणम्। तृप + ल्युट्। अतार्प्सीत् अत्राप्सीत् अतर्पीत् अतृपत्। 3. देवतानां देवप्रतिमानां अभ्यर्चनम्। 4. समिधां आधानम् समिदाधानम्। वर्षासु रथकार आदधीत इत्यादि जैमिनिसूत्रोक्ताधानशब्दप्रयोगात् अग्न्याधानमेव विवक्षितं तस्मादुक्तम् समिद्धोमं कुर्य्यादिति।

*Change of voice.*—(ब्रह्मचारिणा)...क्रियेत ॥ १७६ ॥

BENGALI.—ব্রহ্মচারী প্রত্যহ স্নানকরত শুচি হইয়া দেবতা, ঋষি ও পিতৃলোকের তর্পণ করিবে, হরিহরাদি দেবপ্রতিমার অর্চনা করিবে এবং সায়ং ও প্রাতে কাষ্ঠদ্বারা হোম করিবে ॥ ১৭৬ ॥

ENGLISH.—A student of the Veda should bathe every day, offer palmfuls of water to the gods, the rishis, and the manes, perform the worship of gods and offer fuel to the sacrificial fire. (176).

वर्ज्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनम् ॥१७७॥

PROSE.—(ब्रह्मचारी) मधु मांसं गन्धं माल्यं रसान् स्त्रियः यानि सर्व्वाणि शुक्तानि तानि प्राणिनां हिंसनं च वर्ज्जयेत ॥ १७७ ॥

KULLUKA.—वर्ज्जयेदिति। क्षौद्रं मांसञ्च न खादेत् गन्धञ्च कर्पूरचन्दनकस्तूरिकादिं वर्ज्जयेत् एषाञ्च गन्धानां यथासम्भवं भक्षणमनुलेपनञ्च निषिद्धं माल्यञ्च न धारयेत रसान् गुड़ादीन् न खादेत् स्त्रियश्च नोपेयात् यानि स्वभावतो मधुरादिरसानि कालवशेन उदकवासादिना चाम्लानि तानि शुक्तानि न खादेत्। प्राणिनां हिंसां न कुर्य्यात ॥ १७७ ॥

GRAMMAR.—1. शुक्तानि Acc. of वर्ज्जयेत्।

*Change of voice.*—मधु मांसं गन्धः माल्यं रसाः स्त्रियः...(तानि)...हिंसनं च वर्ज्जयेरन् ॥ १७७ ॥

BENGALI.—ব্রহ্মচারী মক্ষিকাকৃত মধু ও মাংস খাইবে না, কর্পূর ও চন্দনাদি যাহা যাহা ভক্ষ্য তাহা ভক্ষণ করিবে না, যাহা অনুলেপ্য তাহা অনুলেপন ও যাহা আঘ্রেয় তাহা আঘ্রাণ করিবে না, মালা পরিধান করিবে না, উগ্ররস গুড়াদি খাইবে না, স্ত্রীসংসর্গ করিবে না, যাহা স্বভাবতঃ মধুর কিন্তু জলে ভিজান থাকাবশতঃ অম্ল হইয়া গিয়াছে এমন দ্রব্য খাইবে না, এবং প্রাণিহিংসা করিবে না ॥ ১৭৭ ॥

ENGLISH.—He should forbear from (taking) honey, meat, sweet scents, garlands, sweet and pungent drinks, intercourse with women, all sour gruel or acid liquid; and the killing or injuring of animals. (177)

अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥१७८॥

(The slokas from 177 to 179 form one sentence, all the accusatives there being governed by the verb वर्ज्जयेत्। We however take them separately for the sake of convenience.)

PROSE.—अभ्यङ्गं अक्ष्णोः अञ्जनं उपानच्छत्रधारणं कामं क्रोधञ्च लोभं च नर्त्तनं गीतवादनं च (वर्ज्जयेत्) ॥ १७८ ॥

KULLUKA.—अभ्यङ्गमिति। तैलादिना शिरःसहितदेहमर्द्दनलक्षणं कज्जलादिभिश्च चक्षुषोरञ्जनं पादुकायाश्छत्रस्य च धारणं कामं मैथुनातिरिक्तविषयाभिलाषातिशयं मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात्। क्रोधलोभनृत्यगीतवीणापणवादि वर्ज्जयेत् ॥ १७८ ॥

GRAMMAR.—1. अभ्यङ्गम् अभि + अन्ज + घञ्। 2. अक्ष्णोः कर्त्तृकर्म्मणोः कृतीति षष्ठी। 3. उपान च्छत्रधारणम् उपानत् च छत्रं च उपानच्छत्रे तयो र्धारणम्। 4. गीतवादनम् गीतसहितं वादनम् मध्यपदलोपि कर्म्मधारयः।

*Change of voice.*—अभ्यङ्गः...कामः क्रोधः लोभः···वर्ज्ज्येत ॥ १७८ ॥

BENGALI.—(ব্রহ্মচারী) তৈলাদিদ্বারা মস্তক হইতে চরণ পর্য্যন্ত মর্দ্দন, কজ্জলাদি দ্বারা চক্ষুর অঞ্জন, পাদুকা ও ছত্রধারণ, বিষয়াভিলাষ, লোভ, নৃত্য, গীত ও বাদ্য পরিত্যাগ করিবে। ১৭৮।

ENGLISH.—He should forbear from smearing the body with oil, painting the eyes with collyrium, using shoes and umbrella, desire for enjoyment, anger, covetousness, dancing, singing and playing on musical instruments. (178).

द्यूतञ्च जनवादञ्च परीवादं तथानृतम्।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९ ॥

PROSE.—द्यूतं च जनवादं च परीवादं तथा अनृतम् स्त्रीणां प्रेक्षणालम्भं परस्य उपघातं च (वर्ज्जयेत्) ॥ १७९ ॥

KULLUKA.—द्यूतञ्चेति। अक्षादिक्रीडां जनैः सह निरर्थकवाक्कलहं परस्य दोषवादं मृषाभिधानं स्त्रीणाञ्च मैथुनेच्छया सानुरागेण प्रेक्षणालिङ्गने परस्य चापकारं वर्ज्जयेत् ॥ १७९ ॥

GRAMMAR.—1. द्यूतम् दिव + क्तः भावे। 2. जनवादः is a technical word meaning जनरवः; नित्यसमासः। 3. न ऋतम् अनृतम् तत्पुरु-

चौर्ति लुट्। 4. स्त्रीणाम् कर्म्मणि षष्ठी। 5. प्रेक्षणालम्भम् प्रेक्षणञ्च आलम्भश्च प्रेक्षणालम्भम् समाहार द्वन्द्व:। अद्रव्यवाचित्वेऽपि जाति रप्राणिनामिति समास:। 6. उपघातम् उप—हन+घञ्।

*Change of voice.*—द्यूतं जनवाद: परिवाद: अनृतं...प्रेक्षणालम्भम् उपघात: वर्ज्जित॥ १७९॥

BENGALI.—অক্ষাদি ক্রীড়া, লোকের সঙ্গে বৃথা বাক্‌কলহ, পরের দোষপ্রকাশ, মিথ্যা কথা, মৈথুনেচ্ছায় সানুরাগে স্ত্রীলোকদর্শন ও আলিঙ্গন ও পরের অপকার পরিত্যাগ করিবে। ১৭৯॥

ENGLISH.—He should forbear from gambling, petty quarrels with people, calumniating, speaking lies, wistfully looking at women and embracing them, and harm to others. (179).

## एक: शयीत सर्व्वत्र न रेत: स्कन्दयेत् क्वचित्।
## कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मन:॥ १८०॥

PROSE.--(ब्रह्मचारी) सर्व्वत्र एक: शयीत क्वचित् रेत: न स्कन्दयेत्, हि कामात् रेत: स्कन्दयन् आत्मन: व्रत: हिनस्ति॥ १८०॥

KULLUKA.—एक: इति। सर्व्वत्र नीचशय्यादावेकाकी शयनं कुर्यात् इच्छया न स्वशुक्रं पातयेत् यस्मादिच्छया स्वमेहनात् शुक्रपातनं स्वकीयव्रतं नाशयति व्रतलोप आवकीर्णिप्रायश्चित्तं कुर्यात्॥१८०॥

GRAMMAR.—1. शयीत शी+ईत। आशिषि। 2. क्वचित् किम् शब्दात् सप्तम्यर्थे क्वादेश:। 3. स्कन्दयेत् स्कन्द–णिच्–यात्। 4. हिनस्ति हिंस धातु अहिंसीत्। जिहिंस।

*Change of voice.*—एकेन शय्येत। रेत: न स्कन्द्येत। व्रतं हिंस्यते स्कन्दयता॥ १८०॥

BENGALI.—সর্ব্বত্র নীচ শয্যাতে একাকী শয়ন করিবে, ইচ্ছাপূর্ব্বক রেতঃস্খলন করিবে না, কেন না ইচ্ছাপূর্ব্বক শুক্রপাতন করিলে স্বকীয় ব্রত লুপ্ত হয় এবং তজ্জন্য প্রায়শ্চিত্ত করিতে হয়। ১৮০॥

ENGLISH.—In all places he should lie down alone, and should nowhere emit the seminal fluid. For, emitting wilfully the seminal fluid, he puts an end to his vow. (180).

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥ १८१॥

PROSE.—ब्रह्मचारी द्विजः स्वप्ने अकामतः शुक्रं सिक्त्वा स्नात्वा अर्कं अर्चयित्वा पुनः मामिति ऋचं त्रिः जपेत्॥ १८१॥

KULLUKA.—स्वप्न इति। ब्रह्मचारी स्वप्नादावनिच्छया रेतः सिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्यमभ्यर्च्य पुनर्मामैत्विन्द्रियम् इत्येतां ऋचं वारत्रयं पठेत्। इदमत्र प्रायश्चित्तम्॥ १८१॥

GRAMMAR.—1. सिक्त्वा - सिच्+क्त्वा। 2. अकामतः तृतीयायास्तसिः। 3. स्नात्वा स्ना+क्त्वा। 4. अर्चयित्वा अर्च क्त्वा। 5. त्रिः adv. 6. पुनर्मामिति या ऋक् सा पुनर्मामित्यृक् तां Acc. of जपेत्।

*Change of voice.*—पुनर्मामित्यृक् जप्येत ब्रह्मचारिणा द्विजेन॥ १८१॥

BENGALI.—ব্রহ্মচারী ব্রাহ্মণাদি দ্বিজ যদি স্বপ্নাবস্থায় অনিচ্ছাপূর্ব্বক রেতঃস্খলন করেন, তবে স্নান করিয়া গন্ধাদি দ্বারা সূর্য্য অর্চ্চনা করতঃ পুনর্মাং এতু ইন্দ্রিয়ং এই ঋক্ মন্ত্র তিন বার জপ করিবেন, এই মন্ত্রপাঠই এই পাপের প্রায়শ্চিত্ত॥ ১৮১॥

ENGLISH.—A twice-born student of the Veda, emitting unwittingly the seminal fluid in dream, should, after bathing, worship the sun and mutter thrice the hymn :—"Let the senses come back to me &c..." (181).

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्।
आहरेद्यावदर्थानि भैक्ष्यञ्चाहरहश्चरेत्॥ १८२॥

PROSE.—(ब्रह्मचारी द्विजः) उदकुम्भं सुमनसः गोशकृन्मृत्तिकाकुशान् यावदर्थानि आहरेत् भैक्ष्यं च अहरहः चरेत्॥ १८२॥

KULLUKA.—उदकुम्भमिति। जलकलसपुष्पगोमयमृत्तिकाकुशान् यावदर्थानि यावद्भिः प्रयोजनानि आचार्यस्य तावन्त्याचार्यार्थमाहरेत्। अतएव उदकुम्भमित्यत्र एकत्वमप्यविवक्षितं प्रदर्शनञ्चैतत् अन्यदप्याचार्योपयुक्तमुपहरेत् भैक्ष्यञ्च प्रत्यहमर्जयेत्॥ १८२॥

GRAMMAR.—1. उदकस्य कुम्भः तम् संज्ञायां उदादेशः। 2. सुमनसः स्त्रियः सुमनसः पुष्पमित्यमरः बहुवचनान्तशब्दः। 3. गोः शकृत् च मृत्तिका च कुशाश्च

इतरेतर द्वन्द्वः Acc. governed by आहरेत्। 4. यावदर्थानि यावान् अर्थः प्रयोजनं येषां तानि यावदर्थानि सामान्ये नपुंसकम्। 5. अहरहः वीप्सायां द्विरुक्तिः अत्यन्त संयोगे द्वितीया।

*Change of voice.*—उदकुम्भः सुमनसः गोशकृन्मृत्तिकाकुशाः यावदर्थानि आह्रियेरन् भैक्ष्यं चर्य्येत ॥ १८२ ॥

BENGALI.—জলকলস, পুষ্প, গোময়, মৃত্তিকা ও কুশ যতগুলি প্রয়োজন ততগুলি গুরুর জন্য আহরণ করিবে, (প্রয়োজন মত অন্যান্য দ্রব্যও সংগ্রহ করিবে) এবং প্রতিদিন ভিক্ষা সংগ্রহ করিবে ॥ ১৮২ ॥

ENGLISH.—He should draw (for his preceptor) water in pitchers, pluck flowers, bring cow-dung, earth, and kusagrass, as much as is necessary; and should go about everyday begging alms. (182)

**वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु।**
**ब्रह्मचार्य्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३ ॥**

PROSE.—ब्रह्मचारी वेदयज्ञैः अहीनानां स्वकर्म्मसु प्रशस्तानां गृहेभ्यः अन्वहं प्रयतः भैक्ष्यं आहरेत् ॥ १८३ ॥

KULLUKA—वेदयज्ञैरिति। वेदयज्ञैरत्यक्तानां स्वकर्म्मसु दक्षाणां गृहेभ्यः प्रत्यहं ब्रह्मचारी सिद्धान्न भिक्षासमूहमाहरेत् ॥ १८३ ॥

GRAMMAR.—1. वेदयज्ञैः वेदैः यज्ञैः पूर्व्वसदृशसमोनार्थकलहनिपुण-मिश्रश्लक्ष्णैः इत्यनेन ऊनार्थक शब्दयोगे तृतीयाज्ञापकात् ऊनार्थे तृतीया। 2. स्व-कर्म्मसु विषयाधिकरणे सप्तमी। 3. गृहेभ्यः अपादाने पञ्चमी। 4. अन्वहम् अहनि अहनि अन्वहम् वीप्सायां अव्ययीभावः समासान्तः अच्।

*Change of voice.*—ब्रह्मचारिणा भैक्ष्यं आह्रियेत ॥ १८३ ॥

BENGALI.—যাহারা বৈদিক যজ্ঞহীন নহেন, ও কর্ত্তব্যকর্ম্মে প্রশস্ত সেইরূপ ব্যক্তিদের গৃহ হইতে ব্রহ্মচারী প্রতিদিন সংযতচিত্তে সিদ্ধান্ন ভিক্ষাসমূহ আহরণ করিবে ॥ ১৮৩ ॥

ENGLISH.—A student of the Veda, pure and self-controlled, should everyday collect his food by begging from the houses of such persons as are skilled and praised in their own profession, and are not devoid of Vedic sacrifices. (183)

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत् ॥ १८४ ॥

PROSE.—गुरोः कुले न ज्ञातिकुलबन्धुषु न भिक्षेत, अन्यगेहानां तु अलाभे पूर्व्वं पूर्व्वं विवर्ज्जयेत् ॥ १८४ ॥

KULLUKA.—गुरोः कुल इति । आचार्य्यस्य ज्ञातिसपिण्डेषु बन्धुषु च मातुलादिषु न भिक्षेत तद्गृहव्यतिरिक्तभिक्षायोग्यगृहाभावे चोक्तेभ्यः पूर्व्वं पूर्व्वं वर्ज्जयेत । ततश्च प्रथमं बन्धुं भिक्षेत तदलाभे ज्ञातीन् तदलाभे गुरोरपि ज्ञातीन् भिक्षेत ॥१८४॥

GRAMMAR.—1. ज्ञातिकुलबन्धुषु ज्ञातिकुले बन्धुषु च । 2. अन्येषां गेहानाम् अन्यगेहानाम् कर्म्मणि षष्ठी । 3. पूर्व्वं पूर्व्वं Acc. of विवर्ज्जयेत् वीप्सायां द्विः ।

*Change of voice.*—भिक्ष्येत ; पूर्व्वं पूर्व्वं विवर्ज्ज्येत ब्रह्मचारिणा ॥१८४॥

BENGALI.—গুরুর বংশে, সপিণ্ডদিগের বংশে অথবা গুরুর মাতুলাদিবন্ধুকুলে ভিক্ষা করিবে না, কিন্তু অন্য গৃহ না পাওয়া গেলে পূর্ব্ব পূর্ব্ব গৃহ পরিত্যাগ করিবে। অর্থাৎ অন্য বাড়ী না পাইলে প্রথম গুরুর মাতুলাদিগৃহে তৎপর সপিণ্ডগৃহে, তৎপর গুরুবংশে ভিক্ষা করিবে ॥ ১৮৪ ॥

ENGLISH.—He should not beg from the family of his preceptor, and from the family of his kinsmen, and relatives. If other houses are not available, then he should avoid (in succession) those that are mentioned first in order. (184).

सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत् ॥ १८५ ॥

PROSE.—पूर्व्वोक्तानां असम्भवे प्रयतः वाचं नियम्य सर्व्वं वाऽपि ग्रामं चरेत् अभिशस्तान् तु वर्ज्जयेत् ॥ १८५ ॥

KULLUKA.—सर्व्वं वेति । पूर्व्वं वेदयज्ञैरहीनानामित्यनेनोक्तानामसम्भवे सर्व्वं वा ग्राममुक्तगुणरहितमपि वाग्यतः भिक्षेत महापातकाद्यभिशस्तां त्यजेत् ॥१८५॥

GRAMMAR.—1. असम्भवे भावे सप्तमी । 2. वाचम् Acc. of नियम्य । 3. अभिशस्तान् अभि – शन्स् + क्तः कर्म्मणि ।

*Change of voice.*—अभिशस्ताः वर्ज्ज्यरन् ॥ १८५ ॥

BENGALI.—যদি পূর্ব্বোক্ত বিশেষণ বিশিষ্ট ব্যক্তি না থাকে, তাহা হইলে ব্রহ্মচারী সংযতভাবে মৌন অবলম্বন করিয়া সমুদয় গ্রাম ভিক্ষা করিবে, কিন্তু মহাপাতকগ্রস্ত ব্যক্তিগণকে পরিত্যাগ করিবে॥ ১৮৫॥

ENGLISH.—If the houses said above be not available then he should go about the whole village, self-controlled, and controlling his speech; but he should avoid those who are guilty of high crimes. (185).

**दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।**
**सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः ॥ १८६ ॥**

PROSE—दूरात् समिधः आहृत्य विहायसि संनिदध्यात् अतन्द्रितः सन् ताभिः सायं प्रातश्च अग्निं जुहुयात्॥ १८६॥

KULLUKA.—दूरादिति। दूरादेव अपरिग्रहीतवृक्षेभ्यः समिधमानीय आकाशे धारणायमं पटलादौ स्थापयेत्, ताभिश्च समिद्भिः सायम्प्रातरग्नौ होमं कुर्य्यात्॥१८६॥

GRAMMAR.—1. आहृत्य आङ् हृ+ल्यप्। अहार्षीत्। 2. समिधः Acc. of आहृत्य and संनिदध्यात्। 3. नि-धा+यात् अधात् अधित। 4. जुहुयात् हु+यात्। अहौषीत्।

*Change of voice.*—समिधः संनिधीयेरन्। अतन्द्रितेन अग्निः हूयेत॥ १८६॥

BENGALI.—দূরস্থিত বৃক্ষাদি হইতে কাষ্ঠ আনয়ন পূর্ব্বক অনাবৃত স্থানে রাখিয়া দিবে, এবং সেই কাষ্ঠ দ্বারা অনলসভাবে সায়ং ও প্রাতঃকালে অগ্নিতে হোম করিবে॥ ১৮৬॥

ENGLISH.—He should collect fuel from far off places and place it in open air; and with it kindle the fire morning and evening, and offer burnt offerings without being idle. (186).

**अकृत्वा भैक्षचरणमसमिध्य च पावकम्।**
**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥ १८७॥**

PROSE.—अनातुरः सन् सप्तरात्रं भैक्ष्यचरणं अकृत्वा पावकं च असमिध्य अवकीर्णिव्रतं चरेत्॥ १८७॥

KULLUKA.—अकृत्वेति भिक्षाहारं सायम्प्रातः समिद्धोममरोगो नैरन्तर्येण सप्तरात्रमकृत्वा लुप्तव्रतो भवति ततश्चावकीर्णि प्रायश्चित्तं कुर्यात्॥ १८७॥

GRAMMAR.—1. भैक्षचरणम् भैक्षस्य चरणं करणम्। 2. पावकम् Acc. of असमिध्य। 3. असमिध्य न समिध्य असमिध्य। सम् – इन्ध + ल्यप्। इन्धे इ'धांचक्रे ए'धिष्ट। 4. न आतुरः अनातुरः। 5. सप्तरात्रम् सप्तानां रात्रीणां समाहारः (द्विगुः) सप्तरात्रम्। अहःसर्व्वैकदेशसंख्यातपुण्याच्च रात्रे रिति अः। संख्यापूर्व्वं रात्रं क्लीवमिति नपुंसकता, ननु समाहारनपुंसकता समाहारनपुंसकतां बाधते इति भट्टोजिवचनात्। तस्मात् संख्यापूर्व्वमिति वार्त्तिकं शरणम्। कालाध्वनोरिति द्वितीया। 6. अवकीर्णि व्रतम् Acc. of चरेत् अवकीर्णिनाम व्रतम्। 7. अव – कॄ + क्तः भावे। ततः इनिः।

*Change of voice.*—अवकीर्णिव्रतं चर्य्येत॥ १८७॥

BENGALI.—ব্রহ্মচারী রোগাক্রান্ত না হইয়াও যদি ক্রমাগত সাত দিন ভিক্ষান্ন আহার না করে ও অগ্নিতে আহুতি না দেয়, তবে তাহার ব্রত লোপ হয় এবং তাহাকে প্রায়শ্চিত্তস্বরূপ অবকীর্ণিব্রত করিতে হয়॥ ১৮৭॥

ENGLISH.—He should observe the expiatory vow known as *avakirnivrata*; if he, without being unwell does not beg alms and kindle the fire for full seven nights (187).

**भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती।**
**भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता॥ १८८॥**

PROSE.—व्रती एकान्नादी न भवेत् नित्यं भैक्ष्येण वर्त्तयेत् व्रतिनः भैक्ष्येण वृत्तिः उपवाससमा स्मृता॥ १८८॥

KULLUKA.—भैक्षेणेति। ब्रह्मचारी न एकान्नमद्यात् किन्तु बहुगृहाहृत-भिक्षासमूहेन प्रत्यहं जीवेत्। यस्माद्भिक्षासमूहेन ब्रह्मचारिणो वृत्तिरुपवासतुल्या मुनिभिः स्मृता॥ १८८॥

GRAMMAR.—1. एकान्नादी एकस्य गृहस्थस्य अन्नं अत्तुं शीलं यस्य सः। एकान्न – अद + णिनिः। 2. भैक्षेण करणे तृतीया। 3. वर्त्तयेत् वृत णिच् यात्। 4. व्रतं विद्यते यस्य व्रती तस्य। इनिः। 5. उपवाससमा तृतीया समासः।

*Change of voice.*—व्रतिना एकान्नादिना न वर्त्त्येत। वृत्त्या उपवाससमया स्मृतया भूयते॥ १८८॥

BENGALI.— ব্রহ্মচারী একজনের অন্ন ভোজন করিবে না, কিন্তু প্রতিদিন বহুজনের গৃহাহৃত ভিক্ষান্ন দ্বারা জীবনধারণ করিবে; ভিক্ষান্ন দ্বারা জীবনধারণকে ব্রহ্মচারীর পক্ষে উপবাসতুল্য বলিয়া মুনিগণ নির্দ্দেশ করিয়াছেন ॥ ১৮৮ ॥

ENGLISH.—One taking the vow of a student should always subsist upon alms, and he should not eat the food collected from one person. It is held that subsistence on alms is equal to fasting. (188).

व्रतवद्देवदैवत्ये पित्र्ये कर्म्मण्यथर्षिवत्।
काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥ १८९ ॥

PROSE.—व्रती दैवदैवत्ये कर्म्मणि अभ्यर्थितः व्रतवत्, अथ पित्र्ये कर्म्मणि अभ्यर्थितः ऋषिवत् कामं अश्नीयात् (तत्र एकान्नभोजनेन) अस्य व्रतं न लुप्यते ॥ १८९ ॥

KULLUKA.—व्रतवदिति। पूर्व्वनिषिद्धैकान्नभोजनस्यायं प्रतिप्रसवः दैवदैवत्ये कर्म्मणि दैवतोद्देशेन श्राद्धेऽभ्यर्थितो ब्रह्मचारी व्रतवदिति व्रतविरुद्धमधुमांसादिवर्ज्जितमेकस्याप्यन्नं यथेप्सितं भुञ्जीत। अथ पित्रुद्देशेन श्राद्धेऽभ्यर्थितो भवति तदा ऋषिर्यतिः सम्यग्दर्शनसम्पन्नत्वात् स इव मधुमांसवर्जितमेकस्याप्यन्नं यथेप्सितं भुञ्जीत इति। स एवार्थो वेदव्याख्यातः तथापि भैक्षवृत्तिनियमरूपं व्रतमस्य लुप्तं न भवति। याज्ञवल्क्योपि श्राद्धेऽभ्यर्थितस्यैकान्नभोजनमाह। ब्रह्मचर्य्ये स्थितो नैकमन्नमद्यादनापदि। ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्निति। विश्वरूपेण तु व्रतमस्य न लुप्यत इति पश्यता ब्रह्मचारिणो मधुमांसभक्षणमनेन मनुवचनेन विधीयत इति व्याख्यातम् ॥ १८९ ॥

GRAMMAR.—1. दैवदैवत्ये दैव एव दैवतं यस्मिन् तत् दैवदैवतं तस्मै इदं दैवदैवत्यम् यत् प्रत्ययः। दैवे इत्यर्थः। 2. पित्र्ये पितृ+यत्। Both qualify कर्म्मणि। 3. व्रतवत् व्रते इव व्रतवत् वति or व्रत+मतुप् व्रतवन् यथास्यात् तथा। 4. ऋषिवत् ऋषि+वति Both adv. 5. कामं पर्य्याप्तं यथा स्यात् तथा। 6. अश्नीयात् अश+यात्। आशीत्। 7. व्रतम् कर्म्मकर्त्ता। 8. लुप्यते कर्म्मकर्त्तरि प्रयोगः।

*Change of voice.*—अभ्यर्थितेन......अश्यते व्रतेन...लुप्यते ॥ १८९ ॥

BENGALI.—ব্রহ্মচারী দেবতা উদ্দেশ্যে অনুষ্ঠিত শ্রাদ্ধে নিমন্ত্রিত হইলে ব্রতবৎ অর্থাৎ ব্রতবিরুদ্ধ মধুমাংসাদি ত্যাগ করিয়া, ইচ্ছানুরূপ আতৃপ্তি ভোজন করিতে পারেন, এবং পিতৃলোক উদ্দেশ্যে অনুষ্ঠিত শ্রাদ্ধে নিমন্ত্রিত হইয়া ঋষিবৎ মধুমাংসাদি-

পূর্ব্ববৎ পরিত্যাগ করিয়া যথেচ্ছ ভোজন করিবেন; ঐ উভয় স্থলে এক জনের অন্ন ভোজনে বাধা নাই; কেন না ঐ স্থলে একান্নাদী হইলে ব্রত লোপ হয় না ॥ ১৮৯ ॥

ENGLISH.—Being invited or requested he may on the occasion of an offering towards the god partake of food consistently with his vow; and on the occasion of an offering towards ancestors or the manes he may partake of food to his satisfaction like a *Rishi*. Thereby (though taking the food given by one) his vow is not broken or defiled. (189).

**ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः।**
**राजन्यवैश्ययोस्त्वेवं नैतत् कर्म्म विधीयते ॥ १९० ॥**

PROSE.—मनीषिभिः ब्राह्मणस्यैव एतत् कर्म्म उपदिष्टम्। एवं तु राजन्यवैश्ययोः एतत् कर्म्म न विधीयते ॥ १९० ॥

KULLUKA.—ब्राह्मणस्यैवेति। ब्राह्मणक्षत्रियविशां त्रयाणामेव ब्रह्मचारित्वे भैक्षाचरणविधानात् व्रतवदित्यनेन तदपवादरूपमेकान्नभोजनम् उपदिष्टं क्षत्रियवैश्ययो-रपि प्रसक्तमनेन पर्य्युदस्यते यदेकान्नभोजनरूपं कर्म्म तद्ब्राह्मणस्यैव वेदार्थविद्भिर्विहितं क्षत्रियवैश्ययोः पुनर्नैतत् कर्म्मेति स्मृतेः ॥ १९० ॥

GRAMMAR.—1. मनसः ईषा मनीषा शकन्ध्वादित्वात्। मनीषा+इनिः। कर्त्तरि तृतीया। 2. ब्राह्मणस्य सम्बन्धमात्र विवक्षया षष्ठी।

*Change of voice.*—एकेन कर्म्मणा उपदिष्टेन भूयते। एतत् कर्म्म न विदधति मनीषिणः ॥ १९० ॥

BENGALI.—পণ্ডিতগণ কেবল ব্রাহ্মণজাতীয় ব্রহ্মচারীর পক্ষেই একজনের অন্ন ভোজন উক্তস্থলে উপদেশ করিয়াছেন, কিন্তু ক্ষত্রিয় ও বৈশ্যজাতীয় ব্রহ্মচারীর পক্ষে ঐরূপ একান্নভোজন উপদেশ করেন নাই ॥১৯০॥

ENGLISH—The sages have advised such a procedure of action with regard to a Brahman; but such an act is not allowed in respect of a Kshatriya or a Vaisya. (190).

**चोदितो गुरुणा नित्यमप्रचोदित एव वा।**
**कुर्य्यादध्ययने यत्नमाचार्य्यस्य हितेषु च ॥ १९१ ॥**

PROSE.—गुरुणा चोदितः अप्रचोदितः एव वा नित्यं अध्ययने आचार्य्यस्य हितेषु च यत्नं कुर्य्यात् ॥ १९१ ॥

KULLUKA.—चोदित इति। आचार्य्येण प्रेरितोवा न प्रेरितः प्रत्यहमध्ययने गुरुहितेषु च उद्योगं कुर्य्यात् ॥ १९१ ॥

GRAMMAR—1. गुरुणा कर्त्तरि तृतीया। 2. प्रचोदितः अप्रचोदितः कर्म्मणि क्तः। 3. यत्नम् Acc. of कुर्य्यात्।

*Change of voice.*—चोदितेन अप्रचोदितेन वा यत्नः क्रियेत ॥ १९१ ॥

BENGALI.—গুরু বলিয়া দিন বা নাই দিন প্রত্যহ অধ্যয়নেও গুরুর হিতানুষ্ঠানে যত্ন করিবে ॥ ১৯১ ॥

ENGLISH.—Whether commanded or not commanded by his preceptor he should always make efforts for his study and for the good of his preceptor. (191).

**शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च।**
**नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ १९२ ॥**

PROSE.—शरीरं च एव वाचं च बुद्धीन्द्रियमनांसि च नियम्य गुरोः मुखं वीक्षमाणः प्राञ्जलिः तिष्ठेत् ॥ १९२ ॥

KULLUKA.—शरीरञ्चेति। देहवाग्बुद्धीन्द्रियमनांसि नियम्य कृताञ्जलिः गुरुमुखं पश्यं स्तिष्ठेत् नोपविशेत् ॥ १९२ ॥

GRAMMAR.—1. बुद्धीन्द्रियमनांसि बुद्धिश्च इन्द्रियाणि च मनश्च द्वन्द्वः। Acc. of नियम्य। 2. प्राञ्जलिः प्रबद्धः अञ्जलिः येन प्राञ्जलिः। 3. मुखं Acc. of वीक्षमाणः। 4. वीक्षमाणः वि–ईक्ष कर्त्तरि शानच्। ईक्षते ऐक्षिष्ट।

*Change of voice*....वीक्षमाणेन प्राञ्जलिना स्थीयेत ॥ १९२ ॥

BENGALI.—শরীর, বাক্য, বুদ্ধি, মন ও ইন্দ্রিয় সংযত করত গুরুর মুখের দিকে দৃষ্টি করিয়া অঞ্জলিবন্ধন পূর্ব্বক অবস্থান করিবে, বিনা অনুমতিতে উপবেশন করিবে না ॥ ১৯২ ॥

ENGLISH.—Having controlled his body, speech, the senses of knowledge, and mind, he with folded palms should remain standing looking towards the face of his preceptor. (192).

**नित्यमुद्धृतपाणिः स्यात् साध्वाचारः सुसंयतः।**
**आस्यतामिति चोक्तःसन्नासीताभिमुखं गुरोः ॥ १९३ ॥**

PROSE.—नित्यं उद्धृतपाणिः साध्वाचारः सुसंयतः स्यात् आस्यतामिति उक्तः सन् गुरोः अभिमुखं आसीत ॥ १९३ ॥

KULLUKA.—नित्यमिति। सततमुत्तरीयाद्दक्षिणमुद्धृतबाहुः शोभनाचार वस्त्रावृतदेहः आस्यतामिति गुरुणोक्तः सन् गुरोरभिमुखम् यथा भवति तथा आसीत ॥ १९३ ॥

GRAMMAR.—1. उद्धृतः पाणिः येन स उद्धृतपाणिः। 2. साधुः आचारो यस्य स साध्वाचारः। 3. मुखं लक्ष्यीकृत्य अभिमुखं अव्ययीभावः। 4. आस्+ ईत। आशिष्ट।

*Change of voice.*—उद्धृतपाणिना......भूयेत। आस्येत ॥ १९३ ॥

BENGALI.—ব্রহ্মচারী সতত উত্তরীয় হইতে দক্ষিণ হস্ত বাহির করিয়া রাখিবে, উত্তম আচরণবিশিষ্ট হইবে, দেহ বস্ত্রদ্বারা আবৃত রাখিবে এবং গুরু উপবেশন কর ইহা বলিলে গুরুর দিকে মুখ রাখিয়া উপবেশন করিবে ॥ ১৯৩ ॥

ENGLISH.—He should always have his right hand out of his upper garment, should be of good conduct, and well-controlled; and should sit in front of his preceptor when asked to sit down. (193).

**हीनान्नवस्त्रवेशः स्यात् सर्व्वदा गुरुसन्निधौ।**
**उत्तिष्ठेत् प्रथमञ्चास्य चरमञ्चैव संविशेत् ॥ १९४ ॥**

PROSE.—गुरुसन्निधौ सर्व्वदा हीनान्नवस्त्रवेशः स्यात्। अस्य प्रथमं च उत्तिष्ठेत् चरमञ्च एव संविशेत् ॥ १९४ ॥

KULLUKA.—हीनान्नवस्त्रेति। सर्व्वदा गुरुसमीपे गुर्व्वपेक्षया अपकृष्टान्न-वस्त्रप्रसाधनो भवेत् गुरोश्च प्रथमं रात्रिशेषे शयनादुत्तिष्ठेत् प्रदोषे च गुरौ सुप्ते पश्चाच्छयीत ॥ १९४ ॥

GRAMMAR.—1. हीनान्नवस्त्रवेशः अन्नञ्च वस्त्रं च वेशश्च अन्नवस्त्रवेशाः। हीना निकृष्टतराः अन्नवस्त्रवेशाः गुर्व्वपेक्षया यस्य सः। 2. प्रथमं अग्रे इत्यर्थः Adv. 3. चरमं पश्चात् इत्यर्थः Adv.

*Change of voice.*—हीनान्नवस्त्रवेषेन भूयते। उत्थीयेत...संविश्येत ॥१९४॥

BENGALI.—সর্ব্বদাই গুরু সমীপে গুরু অপেক্ষা নিকৃষ্ট অন্ন, বস্ত্র ও প্রসাধন গ্রহণ করিবে, গুরুর অগ্রেই শয্যা ত্যাগ করিবে, গুরুর পশ্চাৎ শয়ন করিবে। ১৯৪ ।

ENGLISH.—In the presence of his preceptor his food, cloth and dress should always be of an inferior kind. He should get up from his bed first and lie down after his preceptor (had done so). (194).

प्रतिश्रवणसम्भाषे शयानो न समाचरेत्।
नासीनो न च भुञ्जानो न तिष्ठन् न पराङ्मुखः ॥१९५॥

PROSE.—न शयानः न आसीनः न च भुञ्जानः न तिष्ठन् न पराङ्मुखः (गुरोः) प्रतिश्रवणसम्भाषे समाचरेत् ॥ १९५ ॥

KULLUKA.—प्रतिश्रवणेति गुरोः प्रतिश्रवणमाज्ञाङ्गीकरणं सम्भाषणञ्च शय्यायां शुनः आसनोपविष्टो भुञ्जानास्तिष्ठन् विमुखश्च न कुर्यात् ॥ १९५ ॥

GRAMMAR.—1. शयानः शी + शानच् कर्त्तरि। अशरिष्ट। 2. आस् + शानच् आसीनः। 3. भुज + शानच कर्त्तरि। 4. पराक् मुखं यस्य सः बहुव्रीहिः। 5. प्रतिश्रवण सम्भाषे प्रतिश्रवणं प्रतिश्रवः अङ्गीकार इत्यर्थः। सम्भाषाच द्वन्द्वः।

*Change of voice.*—शयानेन आसीनेन भुञ्जानेन तिष्ठता पराङ्मुखेन प्रतिश्रवणसम्भाषे न चर्य्येयाताम् ॥ १९५ ॥

BENGALI.—শয়ান অবস্থায় থাকিয়া, কি উপবিষ্ট হইয়া, কিংবা আহার করিতে করিতে, কি দণ্ডায়মান থাকিয়া, কি অন্যদিকে মুখ রাখিয়া গুরুর আজ্ঞা গ্রহণ বা গুরুর সঙ্গে সম্ভাষণ করিবে না। ১৯৫ ।

ENGLISH.—He should not receive orders from and talk to his preceptor, lying down, or sitting down, or at the time of taking food, or standing, or with his face turned away. (195).

आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥

PROSE.—आसीनस्य स्थितः, तिष्ठतः अभिगच्छन्, आव्रजतस्तु प्रत्युद्गम्य, धावतः पश्चात् धावन् प्रतिश्रवणसम्भाषे कुर्य्यात् ॥ ॥ १९६ ॥

KULLUKA.—कथमर्हि कुर्य्यात्तदाह आसीनस्येति। आसनोपविष्टस्य गुरोराज्ञां ददतः स्वयमासनादुत्थितः तिष्ठतो गुरोरादिशतः तदभिमुखं कतिचित् पदानि गत्वा, यदा गुरुरागच्छति तदाप्यभिमुखं गत्वा, यदा गुरुर्धावन्नादिशति तदा तस्य पश्चाद्धावन् प्रतिश्रवणसम्भाषे कुर्य्यात् ॥ १९६ ॥

GRAMMAR.—1. धावन् सृ धातोः शीघ्रगतौ धौ इत्यादेशः। शत्।

*Change of voice.*—स्थितेन अभिगच्छता धावता प्रतिश्रवणसम्भाषे क्रियेताम् ॥ १९६ ॥

BENGALI.—গুরু উপবিষ্ট হইয়া আজ্ঞা করিলে শিষ্য আসন হইতে উঠিয়া, গুরু দণ্ডায়মান হইয়া আদেশ করিলে শিষ্য গুরুর অভিমুখে অগ্রসর হইয়া, গুরু আসিতে আসিতে আদেশ করিলে শিষ্য তাঁহার অভিমুখে প্রত্যুদ্গমন করিয়া, গুরু ধাবিত হইয়া আজ্ঞা করিলে শিষ্য তাঁহার পশ্চাৎ পশ্চাৎ ধাবিত হইয়া আজ্ঞা গ্রহণ ও সম্ভাষণ করিবে ॥ ১৯৬ ॥

ENGLISH.—He should stand up and receive orders from and talk to his preceptor seated on a seat; move towards him and receive orders from him when the preceptor is standing; when the preceptor is coming he should go up to him by way of reception and receive orders, while the preceptor is walking fast, he should run after him and receive orders or talk to him. (196).

पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम्।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥

PROSE,—पराङ्मुखस्य (गुरोः) अभिमुखः (स्थितः) दूरस्थस्य च अन्तिकं एत्य शयानस्य प्रणम्य निदेशे तिष्ठतः प्रणम्य एव (प्रतिश्रवणसम्भाषे कुर्य्यात्) ॥ १९७ ॥

*Note.*—196 and 197th slokas form one sentence. We have taken them separately.

KULLUKA.—पराङ्मुखस्येति। पराङ्मुखस्य गुरोरादिशतः सम्मुखस्थो दूरस्थस्य गुरोः समीपमागत्य शयानस्य गुरोः प्रणम्य प्रह्वो भूत्वा निदेशे निकटे एवतिष्ठतो गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसम्भाषे कुर्य्यात् ॥ १९७ ॥

GRAMMAR.—1. निदेशे निकटे इत्यर्थः। 2. अन्तिकम् Acc. of एत्य। 3. एत्य आङ्+इण्+ल्यप्।

BENGALI.—গুরু অন্যদিকে ফিরিয়া আদেশ করিলে তাহার সম্মুখে যাইয়া, গুরু দূরস্থ হইয়া অনুমতি করিলে তাঁহার নিকটে যাইয়া, গুরু শয়ন করিয়া ও নিকটে আসিয়া আদেশ করিলে প্রণতিপূর্ব্বক গুরুর বাক্য অঙ্গীকার ও প্রতিসম্ভাষণ করিবে। ১৯৭।

ENGLISH.—He should go in front of his preceptor while he is issuing orders with his face turned away, he should approach his preceptor to receive orders while he is at a distance. He should bow down and receive orders from and talk to his preceptor while lying down; and while his preceptor is standing near, he should bend down in salutation and receive orders and talk to him. (197).

नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्॥ १९८॥

PROSE.—गुरुसन्निधौ अस्य शय्यासनं सर्व्वदा नीचं स्यात्, गुरो: चक्षुर्विषये न यथेष्टासन: भवेत्॥ १९८॥

KULLUKA.—नीचमिति। गुरुसमीपे चास्य गुरुशय्यासनापेक्षया नीचे एव शय्यासने नित्यं स्यातां यत्र च देशे समासीन: गुरु: पश्यति न तत्र यथेष्टचेष्टां चरणप्रसारादिकां कुर्य्यात्॥ १९८॥

GRAMMAR.—1. गुरो: सन्निधि: गुरुसन्निधि: तस्मिन्। सम्—नि—धा+कि। 2. शय्यासनम् जातिरप्राणिनामिति समाहार: शय्या च आसनञ्च शय्यासनम्। 3. यथेष्टासन: इष्टं अनतिक्रम्य यथेष्टं तत: अर्शआदिभ्य: अच्। यथेष्टं आसनं यस्य स:। बहुव्रीहि:। 4. चक्षुर्व्विषये चक्षुष: विषय: तस्मिन् चक्षुर्व्विषये।

*Change of voice.*—नीचेन शय्यासनेन भूयेत। यथेष्टासनेन भूयेत॥ १९८॥

BENGALI.—গুরুর নিকটে শিষ্যের শয্যা ও আসন সর্ব্বদা নীচ রাখিতে হইবে; এবং গুরু দেখিতে পাইতেছেন এরূপ স্থলে উপবেশন করিলে শিষ্য ইচ্ছামত হস্ত ও পাদ প্রসারণাদি করিবে না। ১৯৮।

ENGLISH.—His bed and seat should always be low in the vicinity of his preceptor. And within the range of the sight of his preceptor he should not assume any posture at will. (198).

नोदाहरेदस्य नाम परोक्षमपि केवलम्।
नचैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥

PROSE.—परोक्षम् अपि अस्य केवलं नाम न उदाहरेत् न च एव अस्य गतिभाषितचेष्टितं अनुकुर्व्वीत ॥ १९९ ॥

KULLUKA.—नोदाहरेदिति। अस्य गुरोः परोक्षमपि उपाध्यायाचार्य्यादिपूजावचनोपपदशून्यं नाम नोच्चारयेत् तथा गुरोर्गमनादिसदृशान्यात्मनो गमनादीनि उपहासबुद्ध्या न कुर्व्वीत ॥ १९९ ॥

GRAMMAR.—1. उदाहरेत् उत्—आङ्—हृ+यात्। 2. नाम Acc. of (1)। 3. केवलम् qualifies नाम। 4. परोक्षम् अक्ष्णोः परं परोक्षम् समासान्तः टच्। 5. गतिश्च भाषितञ्च चेष्टितञ्च जातिरप्राणिनामिति समाहारः। Acc. of अनुकुर्व्वीत।

*Change of voice.*—नाम न उदाह्रियेत। गतिभाषितचेष्टितं न अनुक्रियेत।

BENGALI.—গুরুর পরোক্ষেও উপাধ্যায় কি আচার্য্য ইত্যাদি পূজাসূচক বাক্য যোগ না করিয়া গুরুর নাম গ্রহণ করিবে না; এবং উপহাস করিবার উদ্দেশে কখনও গুরুর গমন, বাক্য ও ক্রিয়ার অনুকরণ করিবে না ॥ ১৯৯ ॥

ENGLISH.—Even in the absence of the preceptor he should not utter his name merely (without any epithet of honour); and he should not imitate (with a view to ridicule) his preceptor's gait, speech and movements. (199).

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ २०० ॥

PROSE.—यत्र गुरोः परीवादः निन्दा वा अपि प्रवर्त्तते तत्र (शिष्येण) कर्णौ पिधातव्यौ ततः अन्यतः वा गन्तव्यम् ॥ २०० ॥

KULLUKA.—गुरोर्यत्रेति। विद्यमानदोषस्याभिधानं परीवादः अविद्यमानदोषाभिधानं निन्दा यत्र देशे गुरोः परीवादो निन्दा वा वर्त्तते तत्र स्थितेन शिष्येण कर्णौ हस्तादिना तिरोधातव्यौ तस्माद्वा देशाद्देशान्तरं गन्तव्यम् ॥ २०० ॥

GRAMMAR.—1. परीवादः परि—वद+घञ्। उपसर्गस्य घञि अमनुष्ये बहुलमिति दीर्घः। 2. पिधातव्यौ अपि—धा+तव्य। अकार of अपि

drops optionally by वष्टिभागुरिरल्लोपं अवाप्योरुपसर्गयोः। आपञ्चापि हलन्तानां यथा वाचा निशा दिशा। 3. ततः अन्यारादिति पञ्चमी। 4. अन्यतः अन्यस्यानमपि:।

*Change of voice.*—परीवादेन निन्दया प्रवृत्यते कर्णाभ्यां पिधातव्याभ्यां भूयत...गन्तव्येन भूयते ॥ २०० ॥

BENGALI.—যে স্থানে গুরুর প্রকৃত দোষের উল্লেখ হয়, অথবা অবিদ্যমান দোষের আরোপ হয়, সেস্থানে শিষ্য হয় দুই কর্ণ হস্ত দ্বারা আচ্ছাদন করিবে অথবা সেস্থান ছাড়িয়া অন্যত্র চলিয়া যাইবে ॥ ২০০ ॥

ENGLISH.—A disciple should either stop his ears or depart elsewhere from the place where the detraction or calumny of his spiritual preceptor takes place. (200).

## परीवादात् खरो भवति श्वा वै भवति निन्दकः।
## परिभोक्ता क्रिमिर्भवति कीटो भवति मत्सरी ॥ २०१ ॥

PROSE.—(शिष्यः) परीवादात् खरो भवति निन्दकः श्वा भवति परिभोक्ता क्रिमिर्भवति मत्सरी कीटो भवति ॥ २०१ ॥

KULLUKA.—इदानीं शिष्यकर्तृकपरीवादादिफलमाह परीवादादिति। गुरोः परीवादात् शिष्यो मृतः खरो भवति गुरोर्निन्दकः कुक्कुरो भवति परिभोक्ता अनुचितेन गुरुधनेनोपजीवकः क्रिमिर्भवति मत्सरी गुरोरुत्कर्षासहनः कीटो भवति। कीटः क्रिमेः किञ्चित् स्थूलो भवति ॥ २०१ ॥

GRAMMAR.—1. परीवादात् हेतौ पञ्चमी। 2. निन्दकः—निन्द हिंसायां इत्यादिना निन्द+वुञ्। 3. परि—भुज्+तृच्। 4. मत्सरी—मत्सरः+इनिः। मत्सरोऽन्यशुभद्वेषइत्यमरः। Here मत्सरः is used as a noun. (1) खरः। (2) श्वा। (3) क्रिमिः। (4) कीटः are विधेयविशेषणम् of शिष्यः understood.

*Change of voice.*—शिष्येण खरेण निन्दकेन शुना परिभोक्त्रा क्रिमिणा कीटेन मत्सरिणा भूयते ॥ २०१ ॥

BENGALI.—শিষ্য গুরুর বিদ্যমানদোষকীর্ত্তন করিলে মরিয়া পরজন্মে গর্দ্দভ হয়, নিন্দা করিলে পরজন্মে কুকুর হয়, অন্যায়রূপে গুরুর ধন দ্বারা জীবিকানির্ব্বাহ করিলে পরজন্মে কৃমি হয়, গুরুর প্রশংসা সহিতে না পারিলে পরজন্মে কৃমি হইতে কিছু অধিক স্থূলকায় কীট হয় ॥ ২০১ ॥

ENGLISH.—By reason of the detraction of his spiritual preceptor a disciple becomes a mule (after death) a calumniator (of his spiritual preceptor) becomes a dog (after death). One unduly depending on his spiritual preceptor for subsistence becomes a worm, and one jealous of the superiority of his preceptor becomes an insect (after death). (201).

**दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः।**
**यानासनस्थश्चैवैनमवरुह्याभिवादयेत्॥ २०२॥**

PROSE.—(शिष्यः) दूरस्थः (सन्) एनं न अर्चयेत्, क्रुद्धः स्त्रियाः अन्तिके च न (अर्चयेत्), यानासनस्थः च अवरुह्य एनं अभिवादयेत्॥ २०२॥

KULLUKA.—दूरस्थ इति। दूरस्थः शिष्योऽन्यं नियुज्य माल्यवस्त्रादिना गुरुं नार्चयेत् स्वयं गमनाशक्तौ क्रुद्धः कामिनीसमीपे च स्थितं स्वयमपि नार्चयेत्। यानासनस्थश्चैवैनं प्रत्युत्थायेत्यनेन यानासनादुत्थानं विहितम् अनेन तु यानासनत्याग इत्यपुनरुक्तिः॥ २०२॥

GRAMMAR.—1. दूर–स्था+क। 2. अर्चयेत् अर्च णिच् यात्। 3. क्रुध+क्तः कर्त्तरि। 4. यानं च आसनञ्च यानासनं जातिरप्राणिनामिति। यानासन–स्था+क। 5. अव–रुह+ल्यप्। 6. अभि–वद णिच् यात्।

*Change of voice.*—दूरस्थेन अयं...अर्च्यत...न क्रुद्धेन यानासनस्थेन अयं... अभिवाद्येत॥ २०२॥

BENGALI.—শিষ্য নিতান্ত অশক্ত না হইলে অন্যের হস্তে প্রেরিত মাল্যাদি দ্বারা গুরুর অর্চ্চনা করিবে না, ক্রোধের বশীভূত থাকা অবস্থায় গুরুর অর্চ্চনা করিবে না, স্ত্রীলোকের নিকট গুরু অবস্থিত থাকিলে স্বয়ং ও মাল্যাদি দ্বারা গুরুর অর্চ্চনা করিবে না; শিষ্য যান কি আসনে অবস্থিত থাকা অবস্থায় গুরু দর্শন করিলে যানাসন হইতে নামিয়া গুরুকে অভিবাদন করিবে॥ ২০২॥

ENGLISH.—Being at a distance, a disciple should not worship his preceptor (by sending presents through another); and while he is angry (whatever be the cause therefor) he should not worship his preceptor; neither should he worship his preceptor when he (the latter) is in the vicinity of (or in company of) a female. And if riding a conveyance or seated on a seat, he should come down and salute his preceptor. (202).

**प्रतिवातेऽनुवाते च नासीत गुरुणा सह।**
**असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत्॥ २०३॥**

PROSE.—(शिष्यः) प्रतिवाते अनुवाते च गुरुणा सह न आसीत; गुरोः असंश्रवे चैव किञ्चित् अपि न कीर्त्तयेत्॥ २०३॥

KULLUKA.—प्रतिवात इति। प्रतिगतोऽभिमुखीभूतः शिष्यस्य यो गुरुदेशाच्छिष्यदेशमागच्छति स प्रतिवातः यः शिष्यदेशात् गुरुदेशमागच्छति सोऽनुवातः, तत्र गुरुणा समं नासीत तथाविद्यमानः संश्रवो यत्र तस्मिन्नसंश्रवे गुरुर्यत्र न शृणोतीत्यर्थः तत्र गुरुगतमन्यगतं वा न किञ्चित् कथयेत्॥ २०३॥

GRAMMAR.—1. प्रतिवाते प्रतिगतः वातः प्रतिवातः। 2. अनुवाते अनुगतः वातः अनुवातः। उभयत्र प्रथमत्र प्रादि समासः। वातीति वातः। अधिकरणे सप्तमी। 3. गुरुणा सह युक्ते अप्रधाने इति तृतीया। 4. असंश्रवे संश्रवः श्रवणम्। न संश्रवः असंश्रवः। नञ् समासः। अधिकरणे सप्तमी।

*Change of voice.*—आस्येत। किञ्चित् न कीर्त्तीत। ॥२०३॥

BENGALI.—যে স্থানে গুরুর দিক্ হইতে শিষ্যের দিকে কিংবা শিষ্যের দিক্ হইতে গুরুর দিকে বাতাস যায় এরূপ স্থানে বসিবে না; গুরু শুনিতে পাননা এরূপ স্থানে বসিয়া গুরুগত কি অন্যগত কোন কথা বলিবে না। ২০৩।

ENGLISH.—A disciple should not sit with his preceptor in such a place where the wind blows from the direction of the preceptor to the disciple or where the wind blows from the direction of the pupil to the preceptor. And he should say nothing (regarding preceptor) behind his back, (literally not within hearing of the preceptor). (203).

**गोऽश्वोष्ट्रयानप्रासाद-स्रस्तरेषु कटेषु च।**
**आसीत गुरुणा सार्द्धं शिलाफलक-नौषु च॥ २०४॥**

PROSE.—गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च शिलाफलकनौषु च गुरुणा सार्द्धं आसीत॥ २०४॥

KULLUKA.—गो इति। यानशब्दः प्रत्येकमभिसम्बध्यते, बलीवर्द्दयाने

घोटकयुक्ते याने उष्ट्रयुक्तयाने रथशकटादौ प्रासादोपरि स्रस्तरे कटे च तृणादिनिर्म्मिते शिलायां फलके च दारुघटितदीर्घासने नौकायाञ्च गुरुणा सह आसीत ॥ २०४ ॥

GRAMMAR.—1. गावश्च अश्वाश्च उष्ट्राश्च ते। इतरेतरद्वन्द्वः। तेषां यानं प्रासादश्च स्रस्तरश्च ते। तेषु। 2. कटेषु। 3. शिलाफलकनौषु शिला च फलकञ्च नौश्च शिलाफलकनावः तासु। सर्व्वत्र अधिकरणे सप्तमी। 4. गुरुणा एवं साकं सार्द्धं समं योगेऽपीति अष्टौशिवचनात् सार्द्धं योगे तृतीया।

*Change of voice.*—आस्येत ॥ २०४ ॥

BENGALI.—কিন্তু গোযানে, অশ্বযানে, উষ্ট্রযানে, প্রাসাদের উপরি, তৃণনির্ম্মিত আসন ও মাদুর প্রভৃতিতে এবং শিলাতলে, কাষ্ঠনির্ম্মিত দীর্ঘাসনে ও নৌকায় গুরুর সঙ্গে শিষ্য উপবেশন করিতে পারে ॥ ২০৪

ENGLISH.—A disciple may sit along with his preceptor on carriages drawn by bullocks, horses or camels; on the top of a palace, on a coach or sofa, on straw mattresses, and also on a slab of stone, a large plank of wood or a boat. (204).

## गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
## न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २०५ ॥

PROSE.—(शिष्यः) गुरोः गुरौ सन्निहिते सति गुरुवत् वृत्तिं आचरेत्, गुरुणा च अनिसृष्टः (सन्) स्वान् गुरून् न अभिवादयेत् ॥ २०५ ॥

KULLUKA.—गुरोर्गुराविति। आचार्य्यस्याचार्य्ये सन्निहिते आचार्य्ये इव तस्मिन्नपि अभिवादनादिकां वृत्तिमनुतिष्ठेत्। तथा गुरुगृहे वसन् शिष्य आचार्य्येणा-नियुक्तो न स्वान् गुरून् मातृपितृव्यादीन् अभिवादयेत् ॥ २०५ ॥

GRAMMAR.—1. गुरोः शेषे षष्ठी। 2. गुरौ भावे सप्तमी। 3. गुरुवत् गुराविव गुरुवत् तत्र तस्येव इति वतिः। 4. वृत्तिम् Acc. of आचरेत्। 5. गुरुणा कर्त्तरि तृतीया। 6. न निसृष्टः आदिष्टः अनिसृष्टः। 7. स्वान् qualifies गुरून्। 8. गुरून् Acc. of अभिवादयेत्।

*Change of voice.*—वृत्तिः आचर्य्येत.........अनिसृष्टेन स्वे गुरवः अभि-वाद्येरन् ॥ २०५ ॥

BENGALI.—গুরুর গুরু উপস্থিত থাকিলে যেরূপ গুরুর প্রতি সেইরূপ তাঁহার

প্রতিও আচরণ করিবে; গুরুর সমীপে নিজের পিতা মাতা পিতৃব্যাদি গুরুজন উপস্থিত হইলে গুরু আদেশ না করিলে তাঁহাদিগকে অভিবাদন করিবে না। ২০৫।

ENGLISH.—When the preceptor of his preceptor comes near, a pupil should behave towards him as towards his own preceptor. And (while living with his preceptor) he should not salute his own parents and other superiors without being directed or ordered by his preceptor. (205).

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु।
प्रतिषेधत्सु चाधर्म्मान् हितञ्चोपदिशत्स्वपि ॥ २०६ ॥

PROSE.—विद्यागुरुषु स्वयोनिषु अधर्म्मान् प्रतिषेधत्सु च हितं उपदिशत्सु च एतत् एव, नित्या वृत्तिः ( विधेया ) ॥ २०६ ॥

KULLUKA.—विद्येति। आचार्य्यव्यतिरिक्ता उपाध्यायादयो विद्यागुरवः। तेष्वेतदेवेति सामान्योपक्रमः, किन्तदाचार्य्य इव नित्या सार्व्वकालिकी वृत्तिर्व्विधेया तथा स्वयोनिष्वपि पितृव्यादिषु तद्वृत्तिः तथा अधर्म्मान्निषेधत्सु धर्म्मतत्त्वञ्चोपदिशत्सु गुरुवद्वर्त्तितव्यम् ॥ २०६ ॥

GRAMMAR.—1. विद्यायां गुरवः विद्यागुरवः तेषु। विद्+क्यप्। 2. स्वयोनिषु स्वा योनिरिव योनिर्येषां तेषु। 3. अधर्म्मान् Acc. of प्रतिषेधत्सु ( अधर्म्म is defined in Kulluka's commentary 1st sloka chapter II.) न धर्म्माः अधर्म्माः तान्। 4. हितम् Acc. of उपदिशत्सु। 5. एतत् सामान्ये नपुंसकम्, its विधेयविशेषणम् is वृत्तिः।

*Change of voice.*—एतेन एव भूयते, नित्यया वृत्त्या विधेयया भूयते ॥२०६॥

BENGALI.—আচার্য্য ব্যতিরিক্ত উপাধ্যায় প্রভৃতিকে বিদ্যাগুরু বলে; বিদ্যাগুরু, পিতৃব্যাদি স্ববংশীয় লোক, অধর্ম্ম হইতে নিবারণকারী ব্যক্তি ও ধর্ম্মের উপদেশকারী ব্যক্তি, ইহাদের প্রতিও এইরূপই বৃত্তি জানিবে; কিরূপ? অর্থাৎ ইহাদের প্রতি সর্ব্বদা গুরুবৎ ব্যবহার করিবে। ২০৬।

ENGLISH.—Such a course of behaviour should be shown towards those who are preceptors by reason of imparting knowledge, towards one's respectable kith and kin, towards those who forbid to do evil and wrong, and towards those who advise what is good and beneficial. (206).

श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्।
गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७ ॥

PROSE.—श्रेयःसु आर्य्येषु गुरुपुत्रेषु गुरोः च स्वबन्धुषु नित्यं गुरुवद्वृत्तिं समाचरेत् ॥ २०७ ॥

KULLUKA.—श्रेयःस्विति। श्रेयःसु विद्यातपःसमृद्धेषु आर्य्येष्विति गुरुपुत्रविशेषणं समानजातिषु गुरुपुत्रेषु गुरोश्च ज्ञातिष्वपि पितृव्यादिषु सर्व्वदा गुरुवद्वृत्तिमनुतिष्ठेत्। गुरुपुत्रस्याचार्य्यशिष्योऽधिकवयाश्च बोद्धव्यः। शिष्यबालसमानवयसामनन्तरं विशेषस्य वक्ष्यमाणत्वात् ॥ २०७ ॥

GRAMMAR.—1. श्रेयःसु प्रशस्य+ईयसु=श्रेयस्। अधिकरणे सप्तमी। 2. आर्य्येषु qualifies गुरुपुत्रेषु। 3. गुरुवत् गुरौ इव गुरुवत्। or गुरुवत् या वृत्तिः सा गुरुवद्वृत्तिः ताम्। 4. वृत्तिम् Acc. of आचरेत्।

*Change of voice.*—गुरुवद्वृत्तिः आचर्य्येत ॥ २०७ ॥

BENGALI.—বিদ্যা ও তপস্যা দ্বারা সমৃদ্ধিশালী ব্যক্তি, আর্য্য অর্থাৎ অধিকবয়স্ক শিষ্য ব্যতিরিক্ত সজাতীয় গুরুপুত্র ও গুরুর পিতৃব্যাদি জ্ঞাতির প্রতি নিত্য গুরুবৎ ব্যবহার করিবে ॥২০৭॥

ENGLISH.—Towards one's superiors, respectable sons of the preceptor and preceptor's own relations, one should ever adopt the same course of conduct as towards his preceptor. (207).

बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मणि।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २०८ ॥

PROSE.—बालः समानजन्मा वा शिष्यः वा गुरुसुतः अध्यापयन् (सन्) यज्ञकर्म्मणि (समागतः) गुरुवन्मानं अर्हति ॥ २०८ ॥

KULLUKA.—बाल इति। कनिष्ठः समवया ज्येष्ठोऽपि वा शिष्योऽध्यापयन् अध्यापनसमर्थो गृहीतवेद इत्यर्थः। स यज्ञकर्म्मणि ऋत्विगवृत्विग्वा यज्ञदर्शनार्थमागतो गुरुवत् पूजामर्हति ॥ २०८ ॥

GRAMMAR.—1. गुरौ यथा गुरुवत् यः मानः तम्।

*Change of voice.*—बालेन समानजन्मना शिष्येण गुरुसुतेन अध्यापयता... गुरुवन्मान: अर्ह्यते ॥ २०८ ॥

BENGALI.—গুরুপুত্র কনিষ্ঠ হউন, কি সমানবয়স্ক কি অধিকবয়স্ক হউন, যদি তিনি শিষ্য হন, এবং অধ্যাপনকার্য্যে সমর্থ হন, যজ্ঞে নিমন্ত্রিত হইয়া নিজগৃহে আসিলে ও যজ্ঞে পৌরহিত্যে নিযুক্ত হউন কি না হউন, গুরুর ন্যায় সম্মান পাইবেন ।২০৮॥

ENGLISH.—The son of a preceptor, if capable of teaching (the Veda), deserves respect like the preceptor in the matter of burnt offering, be he junior in age, equal in age or a pupil. (208).

उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्य्याद्गुरुपुत्त्रस्य पादयोश्चावनेजनम् ॥ २०९ ॥

PROSE.—गुरुपुत्रस्य गात्राणां उत्सादनं स्नापनोच्छिष्टभोजने पादयोश्च अवनेजनं न कुर्य्यात् ॥२०९॥

KULLUKA.—आचार्य्यवदित्यविशेषणपूजायामाप्तायां विशेषमाह उत्सादनमिति। गात्राणामुत्सादनमुद्वर्त्तनं स्नापनम् उच्छिष्टस्य भक्षणं पादयोश्च प्रक्षालनं गुरुपुत्रस्य न कुर्य्यात् ॥ २०९ ॥

GRAMMAR.—1. स्नापनं च उच्छिष्टस्य भोजनञ्च ते। स्ना – णिच् + ल्युट्। 2. अवनेजनम् – अव निज + ल्युट्।

*Change of voice.*—उत्सादनं......अवनेजनं न क्रियेत,.........भोजने न क्रियेताम् ॥२०९॥

BENGALI.—গুরুপুত্রকে গুরুবৎ পূজা করিতে হইলেও গুরুর ন্যায় কখনও গুরুপুত্রের শরীরে বিলেপন দান, স্নাপন, উচ্ছিষ্টভোজন ও পাদপ্রক্ষালন করিবে না ।২০৯।

ENGLISH.—One should not anoint or rub the body of his preceptor's son, should not help him in bathing, or partake of the remains of his food, and should not wash his feet. (209).

गुरुवत् प्रतिपूज्या: स्यु: सवर्णा गुरुयोषित:।
असवर्णास्तु सम्पूज्या: प्रत्युत्थानाभिवादनै: ॥ २१० ॥

PROSE. – सवर्णा: गुरुयोषित: गुरुवत् प्रतिपूज्या: स्यु:, असवर्णा: तु प्रत्युत्थानाभिवादनै: संपूज्या: ॥२१०॥

KULLUKA.—गुरुवदिति । सवर्णा गुरुपत्न्य: गुरुवदाज्ञाकरणादिना पूज्या भवेयु: । असवर्णा: पुन: केवलै: प्रत्युत्थानाभिवादनै: ॥२१०॥

GRAMMAR.–1. समान: वर्ण: यासां ता: सवर्णा बहुव्रीहि: । 2. प्रत्युत्थानाभिवादनै: प्रत्युत्थानानिच अभिवादनानिच तानि । तै: करणे तृतीया ।

*Change of voice.* – सवर्णाभि: गुरुयोषिद्भि:......प्रतिपूज्याभि: भूयेत । असवर्णाभि: संपूज्याभि: भूयेत ॥२१०॥

BENGALI.—গুরুর সজাতীয়া ভার্য্যাকে গুরুবৎ পূজা করিবে, কিন্তু গুরুর অসবর্ণা ভার্য্যাকে প্রত্যুত্থান ও পাদগ্রহণশূন্য অভিবাদন দ্বারা পূজা করিবে ॥ ২১০ ॥

ENGLISH.—The wives of a preceptor belonging to the same caste are to be respected and worshipped like the preceptor ; but those who do not belong to the same caste are to be respected by rising up in reception and salutation. (210).

**अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।**
**गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ २११ ॥**

PROSE.—गुरुपत्न्या: अभ्यञ्जनं स्नापनं च गात्रोत्सादनं एव च केशानां प्रसाधनं च ( शिष्येण ) न कार्य्याणि ॥ २११ ॥

KULLUKA.—अभ्यञ्जनमिति । तैलादिना देहाभ्यङ्गं स्नापनं गात्राणां चोद्वर्त्तनं केशानाञ्च माल्यादिना प्रसाधनम् एतानि गुरुपत्न्या न कर्त्तव्यानि केशानामिति प्रदर्शनमात्रार्थं देहस्यापि चन्दनादिना प्रसाधनं न कुर्य्यात् ॥ २११ ॥

GRAMMAR.—1. गुरो: पत्नी गुरुपत्नी तस्या: शेषे षष्ठी । 2. अभि - अञ्ज + ल्युट् । 3. स्ना + णिच् + ल्युट् । 4. गात्रोत्सादनम् गात्रस्य उत्सादनम् । 5. केशानाम् कर्म्मणि षष्ठी । 6. प्र + सिध् णिच् ल्युट् ।

*Change of voice.* – अभ्यञ्जनेन, स्नापनेन गात्रोत्सादनेन, प्रसाधनेन......न कार्य्यं भूयते ॥२११॥

BENGALI.—( শিষ্য গুরুপত্নীকে গুরুবৎ পরিচর্য্যা করিবার জন্য উপদিষ্ট হইলেও ) শিষ্য কখনও গুরুপত্নীর শরীরে তৈলমর্দ্দন করিবে না, গুরুপত্নীকে স্নান করাইবে না, গুরুপত্নীর শরীরে বিলেপন দিবে না, গুরুপত্নীর কেশ প্রসাধন করিয়া দিবে না ॥ ২১১ ॥

ENGLISH.—The anointing or rubbing, and besmearing (with oil or butter) of the body of a preceptor's wife the adorning of her hair, and helping her to bathe should not be done (by a pupil). (211).

## गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः।
## पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥

PROSE.—गुणदोषौ विजानता पूर्णविंशतिवर्षेण (शिष्येण) युवतिः गुरुपत्नी इह पादयोः न अभिवाद्या ॥ २१२ ॥

KULLUKA.—गुरुपत्नी त्विति। युवतिः गुरुपत्नी पादयोरुपसंग्रह्य अभिवादनदोषगुणज्ञेन अनेन नाभिवाद्या, पूर्णविंशतिवर्षत्वं यौवनप्रदर्शनार्थं बालस्य पादयोरभिवादनमनिषिद्धं युवस्तु भूमावभिवादनं वक्ष्यति ॥ २१२ ॥

GRAMMAR—1. गुणश्च दोषश्च गुणदोषौ तौ Acc. of विजानता। 2. विजानता qualifies शिष्येण understood. 3. विंशतिः वर्षाणि यस्य सः विंशतिवर्षः बहुव्रीहिः पूर्णः विंशतिवर्षः पूर्णविंशतिवर्षः सुप्सुपेति समासः। तेन qualifies शिष्येण। 4. युवतिः qualifies गुरुपत्नी युनक्ति युवती च। 5. पादयोः अधिकरणे सप्तमी। 6. अभि – वद – णिच् ण्यत।

*Change of voice.* – युवत्या गुरुपत्न्या न अभिवाद्यया भूयेत ॥ २१२ ॥

BENGALI.—পূর্ণ বিংশতিবর্ষবয়স্ক অর্থাৎ যুবা শিষ্যমাত্রই অভিবাদনের দোষগুণ স্মরণ করতঃ কখনও যুবতি গুরুপত্নীর পাদস্পর্শপূর্ব্বক অভিবাদন করিবে না, কিন্তু ভূমিতেই অভিবাদন করিবে; কিন্তু বালক শিষ্য যুবতি গুরুপত্নীর পাদস্পর্শ পূর্ব্বক অভিবাদন করিতে পারে॥ ২১২ ॥

ENGLISH.—A disciple of full twenty years who knows the merits or demerits of an action should not touch the youthful wife of his preceptor in the feet in the act of saluting. (212).

## स्वभाव एष नारीणां नराणामिह दूषणम्।
## अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥

PROSE.—इह नारीणां एषः स्वभावः (यत्) नराणां दूषणम्, अतः अर्थात् विपश्चितः प्रमदासु न प्रमाद्यन्ति ॥२१३॥

KULLUKA.—स्वभाव इति। स्त्रीणामयं स्वभावः यदिह शृङ्गारचेष्टया व्यामोह्य पुरुषाणां दूषणम्। अतोऽर्थात् अस्माद्धेतोः पण्डिताः स्त्रीषु न प्रमत्ता भवन्ति ॥ २१३ ॥

GRAMMAR.—1. नारीणाम् शेषे षष्ठी नरः स्त्रियां नारी। 2. नराणाम् कर्म्मणि षष्ठी कृद् योगे। 3. दूषणम् दुष+णिच्+ल्युट्। दुष्यति दूषयति। 4. अर्थात् हेतौ पञ्चमी अर्थः means प्रयोजनम् or हेतुः। 5. प्र–मद्+अन्ति। 6. प्रमदासु अधिकरणे सप्तमी। 7. विपश्चितः Nom. to प्रमाद्यन्ति।

*Change of voice.*—स्वभावेन एतेन दूषणेन भूयते……विपश्चिद्भिः न प्रमद्यते ॥ २१३ ॥

BENGALI.—স্ত্রীদিগের স্বভাবই এই যে তাহারা হাবভাবাদি দ্বারা পুরুষকে মোহিত করিয়া দূষিত করিবে; অতএব বিদ্বান্ ব্যক্তিগণ স্ত্রীলোকসম্বন্ধে কখনই অনবহিত হন না। ২১৩ ॥

ENGLISH.—This is the nature of women that men are here caused to fall off (from the right path). Hence for this reason learned men do not become careless in reference to women. (213).

## अविद्वांसमलं लोके विद्वांसमपि वा पुनः।
## प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥२१४॥

PROSE.—प्रमदाः लोके कामक्रोधवशानुगं अविद्वांसं विद्वांसं वा पुनः उत्पथं नेतुं अलम् ॥२१४॥

KULLUKA.—अविद्वांसमिति। विद्वानहं जितेन्द्रिय इति बुद्ध्या न स्त्रीसन्निधिर्विधेयः। यस्मादविद्वांसं विद्वांसमपि वा पुनः पुरुषं देहधर्म्मात् कामक्रोधवशानुयायिनं स्त्रियः उत्पथं नेतुं समर्थाः ॥२१४॥

GRAMMAR.—1. विद्वांसम् विद्–शतृ ज्ञाने वसु Acc. of नेतुम्। 2. न विद्वान् अविद्वान् तम्। 3. कामक्रोधवशानुगम् कामश्च क्रोधश्च तौ। तयोर्वशः कामक्रोधवशः तम् अनुगच्छतीति कामक्रोधवशानुगः उपपद समासः। कामक्रोधवश अनु गम+डः। 4. उत्पथम् उत्क्रान्तः पन्थाः उत्पथः समासान्त अः। तम् Acc. of नेतुम् नी being द्विकर्म्मक। 5. अलम् समर्थाः अव्ययम्।

*Change of voice.*—प्रमदाभिः......विद्वान् अविद्वान्...अलम् भूयते ॥२१४॥

BENGALI.—আমি জিতেন্দ্রিয় বিদ্বান্ এরূপ দর্প করিয়া স্ত্রী সন্নিধানে থাকিবে না ; কারণ পুরুষমাত্রই দেহধর্ম্মবশতঃ কাম ও ক্রোধের বশীভূত ; অতএব বিদ্বান্ই হউন ; আর অবিদ্বান্ই হউন, তাহাদিগকে কামিনীগণ অনায়াসে উন্মার্গগামী করিতে পারে ।২১৪।

ENGLISH.—Surely in this world a woman is quite competent to lead to evil ways an illiterate man and also even a learned man, obedient to the control of desires and anger. (214).

**मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५ ॥**

PROSE.—मात्रा स्वस्रा दुहित्रा वा विविक्तासनः न भवेत् बलवान् इन्द्रियग्रामः विद्वांसं अपि कर्षति ॥२१५॥

KULLUKA.—अत आह मात्रेति। मात्रा भगिन्या दुहित्रा वा निर्ज्जनगृहादौ नासीत यतोऽतिबल इन्द्रियगणः शास्त्रनियमितात्मानमपि पुरुषं परवशं करोति ॥२१५॥

*Note.*—There is a well-known story about this celebrated text of Manu. The story runs that on one occasion when reading this text Vyasa the author of Mahabharat could not agree with Manu, and changed "विद्वांसमपि कर्षति" into विद्वांसं नापकर्षति।" intending to convey that passion cannot sway the wise. After doing this the sage went to take his bath in a river. When on his way he found himself in the midst of a furious storm accompanied by rain. He saw near him a lonely temple and at once entered into it for shelter. The storm was raging in fury, rain was falling in torrents, it was almost dark. After entering the temple the sage while looking all around the lonely temple, suddenly perceived a beautiful lady lurking in a corner behind the phallic *lingam* occupying the centre of the temple. She no doubt entered the temple for the very reason which compelled the sage to enter it. But she was a paragon of beauty. Her

charms captivated the sage who entreated her but to no purpose. He then rose and tried to seize her, but she began to run around the lingam pursued by the sage. Then the sage conceived an idea of jumping over the eternal lingam to catch hold of her. When he was about to jump over to catch the lady the text of Manu "विद्वांसमपि कर्षति" reverberated through the temple! The storm, the rain, the temple, every thing vanished immediately.

GRAMMAR.—1. माता स्वसा दुहिता सहार्थे तृतीया। 2. विविक्तं आसनं यस्य सः। 3. इन्द्रियाणां ग्रामः समूहः। 4. कर्षति कृष लट् ति।

*Change of voice.*—विविक्तासनेन न भूयेत। बलवता, इन्द्रियग्रामेण विद्वान् .........कृष्यते॥ २१५॥

BENGALI.—(এমন কি) মাতা, ভগিনী এবং কন্যার সঙ্গেও নির্জ্জন গৃহাদিতে বাস করিবে না; কেননা ইন্দ্রিয়সমূহ অতীব বলবান্, উহারা বিদ্বান্ ব্যক্তিকেও আকর্ষণ করে॥ ২১৫॥

ENGLISH.—A man should not sit lonely with his mother, sister or daughter. (For) the powerful assemblage of organs of sense (and passions) drags away by force even a learned man. (215).

कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन्॥ २१६॥

PROSE.—युवा कामं भूमौ असौ अहं इति ब्रुवन् युवतीनां गुरुपत्नीनां विधिवत् वन्दनं कुर्य्यात्॥ २१६॥

KULLUKA.—कामन्त्विति। कामन्तु गुरुपत्नीनां स्वयमपि युवा यथोक्तविधिना भूमावभिवादयेत् असुकशर्म्माहं भवतीति ब्रुवन् पादग्रहणं विना यथेष्टमभिवादनं कुर्य्यात्॥ २१६॥

GRAMMAR.—1. गुरोः पत्नी षष्ठी समासः। 2. युवतीनां qualifies गुरुपत्नीनाम्। 3. विधिवत् Adv. अव्ययम्।

*Change of voice.*—युवता त्वया वन्दनं क्रियेत॥ २१६॥

BENGALI.—যুবা শিষ্য যুবতী গুরুপত্নীর পাদ স্পর্শ না করিয়া আমি অমুক শর্ম্মা অভিবাদন করিতেছি ইহা কহিয়া ভূমিতে বিধিমতে ইচ্ছানুসারে যুবতী গুরুপত্নীকে বন্দনা করিবে ॥ ২১৬ ॥

ENGLISH.—A youthful pupil should do salutation in due form to the youthful wife of his preceptor (by bowing down his head) on the ground, announcing himself that he is so and so. (216).

**विप्रोष्य पादग्रहणमन्वहं चाभिवादनम्।**
**गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन्॥ २१७ ॥**

PROSE.--( युवा ) सतां धर्म्मं अनुस्मरन् विप्रोष्य गुरुपत्नीषु पादग्रहणं अन्वहं अभिवादनं च कुर्व्वीत ॥ २१७॥

KULLUKA.—विप्रोष्येति। प्रवासादागत्य सव्येन सव्यः स्पृष्टव्यो दक्षिणेन च दक्षिण इत्युक्तविधिना पादग्रहणं प्रत्यहञ्च भूमावभिवादनं गुरुपत्नीषु युवा कुर्य्यात् शिष्टानामयमाचार इति जानन् ॥ २१७ ॥

GRAMMAR.—1. धर्म्मम् Acc. of अनुस्मरन्। 2. विप्रोष्य वि-प्र-वस् ल्यप्। 3. पादयोः ग्रहणम्। 4. अन्वहम् अहनि अहनि अन्वहम् अव्ययीभावः समासान्तः टच्। 5. गुरुदारेषु गुरोः दाराः तेषु विषयाधारे सप्तमी। दारशब्दस्य पुंलिङ्गता बहुवचनान्तत्वं च। 6. कुर्व्वीत कृ+ईत।

*Change of voice.*—अनुस्मरता पादग्रहणं अभिवादनं क्रियेत ॥ २१७ ॥

BENGALI.—যুবা শিষ্য বিদেশ হইতে আসিয়া সাধুগণের আচার অনুসারে প্রথম দিন গুরুপত্নীর পাদ স্পর্শ করিয়া অভিবাদন করিবে এবং তৎপর প্রতিদিন ভূমিতেই অভিবাদন করিবে ॥ ২১৭ ॥

ENGLISH.—On coming back from a sojourn a youthful pupil may indeed touch the feet of his preceptor's youthful wife, remembering it to be the duty of the virtuous; but daily he should bow down (on the ground). (217).

**यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति।**
**तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८ ॥**

PROSE.—यथा नरः खनित्रेण खनन् वारि अधिगच्छति तथा शुश्रूषुः गुरुगतां विद्यां अधिगच्छति ॥ २१८ ॥

KULLUKA.—उक्तस्य शुश्रूषाविधेः फलमाह यथेति। यथा कश्चिन्मनुष्यः खनित्रेण भूमिं खनन् जलं प्राप्नोति एवं गुरुस्थितां विद्यां गुरुसेवापरः शिष्यः प्राप्नोति ॥ २१८ ॥

GRAMMAR.—1. खनित्रेण करणे तृतीया खन + इत्र। 2. खनन् खन + शतृ। 3. वारि Acc. of अधिगच्छति। 4. शुश्रूषुः श्रु – सन् + उ। 5. गुरुगता गुरुगता ताम् qualifies विद्याम्। 6. विद्याम् Acc. of अधिगच्छति।

*Change of voice.*—नरेण खनता वारि अधिगम्यते शुश्रूषुणा गुरुगता विद्या अधिगम्यते ॥ २१८ ॥

BENGALI.—যেমন মনুষ্য খনিত্র দ্বারা মাটি খনন করিতে করিতে জল প্রাপ্ত হয়; সেইরূপ শিষ্য গুরুর শুশ্রূষা করিতে করিতে গুরুগত বিদ্যা প্রাপ্ত হয় ॥২১৮॥

ENGLISH.—Just as a man gets water by digging up (the earth) by means of a spade, so a pupil attending and serving (his preceptor) acquires the learning possessed by his preceptor. (218).

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः।
नैनंग्रामेऽभिनिम्लोचेत् सूर्य्योनाभ्युदियात्क्वचित् ॥२१९

PROSE.—(ब्रह्मचारी) मुण्डः वा जटिलः वा स्यात् अथवा शिखाजटः स्यात्, सूर्य्यः एनं ग्रामे क्वचित् न अभ्युदियात्, न अभिनिम्लोचेत् ॥ २१९ ॥

KULLUKA.—ब्रह्मचारिणः प्रकारत्रयमाह मुण्डो वेति। मुण्डितसमस्तशिरःकेशो वा जटावान् वा शिखैव वा जटा जाता यस्य अपरे शिरःकेशा मुण्डितास्तथा वा भवेत् एनं ब्रह्मचारिणं क्वचिद्ग्रामे निद्राणम् उत्तरत्र शयानमिति दर्शनात् सूर्य्यो नाभिनिम्लोचेत् नास्तमियात् ॥ २१९ ॥

GRAMMAR.—1. मुण्डः qualifies ब्रह्मचारी understood मुण्डते। मुण्ड् + घञ्। 2. जटा + इलच्। 3. शिखा एव जटा यस्य सः। 4. अभ्युदियात् अभि – उत् – इ + यात्। governs एनम्। 5. अभि – नि – म्लुच + यात्। म्लोचति। गच्छति। governs एनम्।

*Change of voice.*—ब्रह्मचारिणा मुण्डेन जटिलेन शिखाजटेन वा भूयेत, सूर्य्येण अयं न अभ्युदीयेत...A. अभिनिम्लोच्येत ॥ २१९ ॥

BENGALI.—মুণ্ডিতমস্তকই হউন, কিংবা জটাযুক্ত মস্তকই হউন, অথবা মুণ্ডিত-মস্তক কিন্তু জটাময় শিখামাত্র ধারীই হউন, ব্রহ্মচারী কোন গ্রামে নিদ্রিত থাকা অবস্থায় সূর্য্য যেন উদিত অথবা অস্তমিত না হইতে পারেন। ২১৯।

ENGLISH.—A religious student of the Veda should have his head either clean shaved, or thick with matted hair; or should have a tuft of hair interwoven like matted hair. And let not the sun rise up or go down upon him sleeping in any village (or town). (219).

तञ्चेदभ्युदियात् सूर्य्यः शयानं कामचारतः।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥

PROSE.—सूर्य्यः कामचारतः शयानं तं चेत् अभ्युदियात् अविज्ञानात् अपि वा निम्लोचेत् जपन् दिनं उपवसेत् ॥ २२० ॥

KULLUKA.—अत्र प्रायश्चित्तमाह तञ्चेदिति। तञ्चेत् कामतो निद्रार्थं निद्रापरवशत्वेनाज्ञानात् सूर्य्योऽभ्युदियात् अस्तमियात्तदा सावित्रीं जपन् उभयथापि दिनमुपवसन् रात्रौ भुञ्जीत। अभिनिर्म्मुक्तस्य उत्तरेऽहनि उपवासजपौ। अभिरभाग इति कर्म्मप्रवचनीयसंज्ञा ततः कर्म्मप्रवचनीययुक्ते द्वितीया। सावित्रीजपस्तु गौतमवचनात् तदाह गौतमः। सूर्य्याभ्युदितो ब्रह्मचारी तिष्ठेत् अहरभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन् सावित्रीम्। मनुगौतमवचनात् सूर्य्याभ्युदितस्यैव दिनाभोजनजपावुक्तौ अभ्यस्तमितस्य तु रात्र्यभोजनजपौ नैतत् अपेक्षायां व्याख्यामन्देहे वा मुख्यन्तरविहितमन्वर्थमभ्यामह्वे न तु स्फुटं मन्वर्थं बृत्यन्तरदर्शनादन्यथा कुर्य्यः। अतएव जपापेक्षायां गौतमवचनात् सावित्रीजपोऽभ्युपेय एव न तु भयत स्फुटं मनूक्तं दिनोपवासजपमपाकुर्य्यः। तस्मादभ्यस्तमितस्य मानवगौतमीयप्रायश्चित्तविकल्पः ॥ २२० ॥

GRAMMAR.—1. कामचारतः प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया। काम—चर+घञ्। 2. शयानम्—शी+शानच्। अशिष्ट। 3. जप+शतृ। 4. दिनम् अत्यन्तसंयोगे द्वितीया। 5. उपवसेत् उप—वस्—यात्।

*Change of voice.*—सूर्य्येण शयानः सः अभ्युदीयेत निम्लुच्येत तेन जपता दिनं उपोष्येत ॥२२०॥

BENGALI.—কামাচারবশতঃ ব্রহ্মচারী নিদ্রিত থাকা অবস্থায় সূর্য্য যদি উদিত হন, অথবা অজ্ঞানবশতঃ নিদ্রিত থাকা অবস্থায় যদি সূর্য্য অস্তমিত হন, তবে ব্রহ্মচারী উভয় অবস্থায়ই গায়ত্রী জপ করিয়া একদিন উপবাস করিবে। অর্থাৎ সূর্য্যোদয়কালে

নিদ্রিত থাকিলে সমস্ত দিন উপবাস করিয়া গায়ত্রীজপ করতঃ রাত্রিতে ভোজন করিবে, এবং সূর্য্য অস্ত যাইবার কালে অজ্ঞান বশতঃ নিদ্রিত থাকিলে অনশনে রাত্রি ও পর দিন গায়ত্রী জপ করিয়া পরদিনান্তে ভোজন করিবে। গৌতমমতে নিদ্রিত থাকা অবস্থায় সূর্য্য অস্তগমন করিলে রাত্রিতে উপবাস ও গায়ত্রী জপ বিহিত, পরদিনে নহে; কিন্তু ইহা শক্তির তারতম্য অনুসারে বিকল্প বিধি বলিয়া জানিবে ॥২২০॥

ENGLISH.—If the sun rises up while he is sleeping wilfully, or if the sun goes down without his knowledge, he should fast for the day, muttering the *Gayatri*. (220).

सूर्य्येण ह्यभिनिर्म्मुक्तः शयानोऽभ्युदितश्च यः ।
प्रायश्चित्तमकुर्व्वाणो युक्तः स्यान्महतैनसा ॥ २२१ ॥

PROSE.—यः शयानः सन् सूर्य्येण हि अभिनिर्म्मुक्तः अभ्युदितश्च प्रायश्चित्तं अकुर्व्वाणः सः महता एनसा युक्तः स्यात् ॥ २२१ ॥

KULLUKA.—अस्य तु प्रायश्चित्त विधिरर्थवादमाह सूर्य्येणेति। शयान् सूर्य्येणाभिनिर्मुक्तोऽभ्युदितश्च निद्रावशः प्रायश्चित्तमकुर्व्वन्महता पापेन युक्तो नरकं गच्छति तस्माद्यथोक्तप्रायश्चित्तं कुर्य्यात् ॥ २२१ ॥

GRAMMAR.—1. यः उक्तं कर्म्म of अभिनिर्मुक्तः and अभ्युदितः। 2. शयानः शी+शानच्। 3. सूर्य्येण कर्त्तरि तृतीया। 4. प्रायश्चित्तम् Acc. of अकुर्व्वाणः प्रायस्य चित्तिचित्तयोरितिसकारागमः। 5. अकुर्व्वाणः न कुर्व्वाणः अकुर्व्वाणः। कृञ शानच् कर्त्तरि कुर्व्वाणः। 6. महता qualifies एनसा। 7. एनसा कर्त्तरि तृतीया।

*Change of voice.*—येन शयानेन सूर्य्येण अभिनिर्मुक्तेन अभ्युदितेन भूयते... अकुर्व्वाणेन तेन युक्तेन भूयेत ॥ २२१ ॥

BENGALI.—যিনি শয়ান হইয়া সূর্য্য কর্ত্তৃক অভ্যুদিত কি অভিনির্ম্মুক্ত হন তিনি প্রায়শ্চিত্ত না করিলে মহাপাপ দ্বারা যুক্ত হইয়া নরকে গমন করেন। ২২১ ॥

ENGLISH.—He, who has become defiled by the sun going down or rising up while he is asleep and does not do the expiatory rite, should become yoked to or charged with a great sin. (221).

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि ॥ २२२ ॥

PROSE.—नित्यं आचम्य प्रयतः समाहितः शुचौ देशे जप्यं जपन् यथाविधि उभे सन्ध्ये उपासीत ॥ २२२ ॥

KULLUKA.—यस्मादुक्तप्रकारेण सन्ध्यातिक्रमे महत् पापमत आह आचम्येति। आचम्य पवित्रो नित्यमनन्यमनाः शुचिदेशे सावित्रीं जपन् उभे सन्ध्ये विधिवदुपासीत ॥ २२२ ॥

GRAMMAR.—1. आचम्य आङ् चम+ल्यप्। आचामति। अचमीत्। 2. प्र–यम+क्त। 3. सम् आ—धा+क्त। 4. देशे अधिकरणे सप्तमी। 5. जप्यम् Acc. of जपन्। 6. विधिमनतिक्रम्य यथाविधि अव्ययीभावः। 7. सन्ध्ये Acc. of उपासीत। सम्–ध्यै+अङ्। 8. उप–आस्+ईत।

*Change of voice.*—प्रयतेन समाहितेन.........जपता उभे सन्ध्ये उपासियाताम् ॥ २२२ ॥

BENGALI.—নিত্য আচমনপূর্ব্বক প্রযত ও সমাহিত হইয়া পবিত্রস্থানে গায়ত্রী জপ করিতে করিতে উভয় সন্ধ্যা উপাসনা করিবে ॥ ২২২ ॥

ENGLISH.—A religious student should (therefore) engage himself everyday in duly muttering in a pure place the *Gayatri* during both the twilights, with concentrated attention, after having rinsed his mouth and become pure. (222).

यदि स्त्री यद्यवरजः श्रेयः किञ्चित् समाचरेत्।
तत् सर्व्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः ॥ २२३ ॥

PROSE.—यदि स्त्री यदि अवरजः किञ्चित् श्रेयः समाचरेत्, यत्र वा अस्य मनः रमेत्, तत् सर्व्वं युक्तः सन् समाचरेत् ॥ २२३ ॥

KULLUKA.—यदीति। यदि स्त्री शूद्रो वा किञ्चित् श्रेयोऽनुतिष्ठति तत्सर्व्वम् तदयुक्तोऽनुतिष्ठेत् यत्र च शास्त्रानिषिद्धे मनोऽस्य तुष्यति तदपि कुर्य्यात् ॥ २२३ ॥

GRAMMAR.—1. श्रेयः Acc. of समाचरेत्। 2. यत्र qualifies कर्म्मणि understood. 3. रमेत् रम+यात्। अनिडो ङित् करणं अनुदात्तेत्त्वं चात्मनेपद मनित्यमिति ज्ञापनात्। अथ वानुदात्तेतो ह्यनन्तरं रह क्रीडायामिति तुदादित्वात् रम धातोरात्मनेपदं अनित्यम्। रमते रमतीत्यपि क्वचित्। अरंस्त। अरंसीत।

*Change of voice.*—स्त्रिया अवरजेन किञ्चित् श्रेयः समाचर्य्येत मनसा रम्येत, तत् सर्व्वं समाचर्य्येत ॥ २२३ ॥

BENGALI.—স্ত্রী অথবা শূদ্রও যদি কোন সৎকার্য্যের অনুষ্ঠান করে, অথবা শাস্ত্রে যাহা নিষিদ্ধ নহে এরূপ যে কোন সৎকার্য্যে ব্রহ্মচারীর মন সন্তোষলাভ করে তাহা ব্রহ্মচারী সংযত মনে সম্পাদন করিবে। ২২৩।

ENGLISH.—If a woman or a low-born person does something good; the religious student of the Veda should practise all that with care; or that which his mind takes delight in, (provided it is not against the Sastras). (223).

धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्म्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ २२४ ॥

PROSE.—इह धर्म्मार्थौ, कामार्थौ, धर्म्म एव, अर्थ एव वा श्रेयः उच्यते; त्रिवर्ग एव श्रेयः इति तु स्थितिः ॥२२४॥

KULLUKA.—श्रेय एव किं तद्दर्शयति धर्म्मार्थाविति। धर्म्मार्थौ श्रेयोऽभिधीयते कामहेतुत्वादिभिः केचिदाचार्य्या मन्यन्ते अन्ये अर्थकामौ सुखहेतुत्वात् धर्म्म एवेत्यपरे अर्थकामयोरप्युपायत्वात् अर्थ एवेह लोके श्रेयइत्यन्ये धर्म्मकामयोरपि साधनत्वात् सम्प्रति स्वमतमाह धर्म्मार्थकामात्मकः परस्पराविरुद्धः त्रिवर्गएव पुरुषार्थतया श्रेय इति विनिश्चयः। एवञ्च बुभुक्षून् प्रत्युपदेशो न मुमुक्षून् मुमुक्षूणान्तु मोक्ष एव श्रेय इति षष्ठे वक्ष्यते ॥२२४ ॥

GRAMMAR.—1. धर्म्मः अर्थश्च धर्म्मार्थौ धर्म्मादिष्वनियम इति सूत्रेण धर्म्मार्थौ अर्थधर्म्मौ इत्यपि स्यात्। द्वन्द्वः। Same case with श्रेयः। 2. कामार्थौ कामश्च अर्थश्च कामार्थौ अर्थकामौ वा same case with श्रेयः। 3. धर्म्मः। 4. अर्थः do. श्रेयः विधेयविशेषणम् of (1) (2) (3) and (4). 5. त्रिवर्गः त्रयाणां धर्म्मार्थकामानां वर्गः गणः त्रिवर्गः उद्देश्य of श्रेयः। 6. श्रेयः विधेय of त्रिवर्गः। 7. इति stands for the sentence उद्देश्य of स्थितिः। स्थिति विधेय of इति स्था+क्तिन्।

*Change of voice.*—धर्म्मार्थौ अर्थकामौ, धर्म्मं अर्थं श्रेयः वक्ति। त्रिवर्गं एव श्रेयः इति स्थित्या भूयते ॥ २२४ ॥

BENGALI.—কেহ বলেন ধর্ম্ম ও অর্থ কামের হেতুস্বরূপ, অতএব ধর্ম্মার্থই শ্রেয়ঃ; কেহ বলেন অর্থ ও কাম সুখের কারণ, অতএব অর্থকামই শ্রেয়ঃ; কেহ বলেন ধর্ম্মই অর্থকামের হেতু, অতএব ধর্ম্মই শ্রেয়ঃ; কেহ বলেন অর্থই ধর্ম্ম ও কামের হেতু, অতএব অর্থই শ্রেয়ঃ; কিন্তু মনুর মত এই যে ধর্ম্ম, অর্থ ও কাম পরস্পর অবিরুদ্ধভাবে সেবিত এই তিনটিই শ্রেয়ঃ। কিন্তু এই নিয়ম ভোগীলোকের পক্ষে, মুক্তিকাঙ্ক্ষী লোকের পক্ষে মোক্ষই শ্রেয়ঃ ॥২২৪॥

ENGLISH.—Law (the Sastric injunctions—mandatory and prohibitory) and wealth are said by some to be the highest good; others say that the satisfaction of desires and wealth are the supreme good; (a third class) say that the observance of the Sastric injunctions is the greatest good; (while a fourth class hold) that wealth is the highest bliss. But the true view or settled rule is that the threefold human pursuit (a harmonious combination of observance of Sastric injunctions, wealth, and satisfaction of desires) is the summum bonum of life. (224).

**आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः।**
**माता पृथिव्या मूर्त्तिस्तु भ्राता स्वो मूर्त्तिरात्मनः ॥२२५॥**

PROSE.—आचार्य्यः ब्रह्मणः मूर्त्तिः, पिता प्रजापतेः मूर्त्तिः, माता तु पृथिव्याः मूर्त्तिः, स्वः भ्राता आत्मनः मूर्त्तिः ॥ २२५ ॥

*Note.*—इदं शरीरं कौन्तेय क्षेत्र मित्यभिधीयते। इति गीतावचनात् शरीरं क्षेत्रम्। तज् जानातीति क्षेत्रज्ञः शरीराधिष्ठाता जीव इत्यर्थः। स एवात्र आत्मशब्देन कथितः। तस्मात् उक्तं आत्मनः क्षेत्रज्ञस्य।

KULLUKA.—आचार्य्य इति। आचार्य्यो वेदान्तोदितस्य ब्रह्मणः परमात्मनो मूर्त्तिः शरीरं पिता हिरण्यगर्भस्य माता च धारणात् पृथिव्यामूर्त्तिः भ्राता च स्वः सगर्भः क्षेत्रज्ञस्य तस्मादेतदेवतारूपा एते नावमन्तव्याः ॥ २२५ ॥

GRAMMAR.—1. स्वः qualifies भ्राता।

*Change of voice.*—आचार्य्येण...मूर्त्या भूयते etc. ॥२२५॥

BENGALI.—আচার্য্য বেদান্ত প্রতিপাদ্য ব্রহ্মের মূর্ত্তিস্বরূপ, পিতা হিরণ্যগর্ভের মূর্ত্তিস্বরূপ, মাতা পৃথিবীর মূর্ত্তিস্বরূপ, সহোদর ভ্রাতা ক্ষেত্রজ্ঞের মূর্ত্তিস্বরূপ; ইহারা দেবতাস্বরূপ, ইহাদিগকে কদাচ অবমাননা করিবে না। ২২৫।

ENGLISH.—The *Acharya* or preceptor is a visible form (or embodiment) of the Supreme Being (Brahman), father is a visible shape (or incarnation) of the Creator (Brahmá), mother is an embodiment of the Earth; and one's owe (elder) brother is the embodiment of the (Divine) Soul. (225).

आचार्य्यश्च पिता चैव माता भ्राता च पूर्व्वजः।
नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः॥२२६॥

PROSE.—आचार्य्यश्च, पिता चैव, माता, पूर्व्वजः भ्राता, आर्त्तेन अपि न अवमन्तव्याः विशेषतः ब्राह्मणेन नावमन्तव्याः॥ २२६॥

KULLUKA.—आचार्य्यश्चेति। आचार्य्यो जनको जननी च भ्राता च सगर्भो ज्येष्ठः पीड़ितेनाप्यमी नावमाननीया विशेषतो ब्राह्मणेन॥२२६॥

GRAMMAR.—1. आर्त्तेन qualifies जनेन understood कर्त्तरि तृतीया 2. अवमन्तव्याः अव मन+तव्य। कर्म्मणि। ब्राह्मणेन कर्त्तरि तृतीया।

*Change of voice.*—आचार्य्यम् पिता माता पूर्व्वजेन भ्राता अवमन्तव्यैः भूयते॥ २२६॥

BENGALI.—আচাৰ্য্য, পিতা, মাতা ও জ্যেষ্ঠ ভ্রাতাকে নিতান্ত প্রপীড়িত হইয়াও অবমাননা করিবে না, বিশেষতঃ ব্রাহ্মণ কখনও ইহাদিগকে অবমাননা করিবে না॥২২৬॥

ENGLISH.—The preceptor (Acharya), father, mother, and elder brother should not be disrespected even by a distressed or diseased person, specially a Brahman. (226).

यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि॥ २२७॥

PROSE.—मातापितरौ नृणां सम्भवे यं क्लेशं सहेते तस्य निष्कृतिः वर्षशतैः अपि कर्त्तुं न शक्या॥ २२७॥

KULLUKA.—यस्मात् यमिति। नृणामपत्यानां सम्भवे गर्भाधाने सति अनन्तरं यं क्लेशं मातापितरौ सहेते, तस्य वर्षशतैरप्यनेकैरपि जन्मभिराहर्त्तुं कर्त्तुमशक्यम्। मातुस्तावत् कुक्षौ धारणदुःखं प्रसववेदनातिशयो जातस्य रक्षणवर्द्धनकष्टम्, पितुरपि.

बाल्ये रक्षया अर्ज्जनद्.स्वम् उपनयनात् प्रभृति वेदतदङ्गाध्यापनव्याख्यानादिक्लेशातिशय इति सर्व्वं सिद्धं तस्मात् देवतारूपा एते नावमन्तव्याः ॥२२७॥

GRAMMAR—1. सम्भवे भावे सप्तमी। 2. नृणाम् कर्त्तरि षष्ठी ऋदयोर्वा पक्षे नॄणाम् by नृ च नृ इत्यस्य नामि वा दीर्घः स्यात्। 3. मातापितरौ माता च पिता च मातापितरौ। आनङ् by आनङृतो द्वन्द्वे उत्तर पदे परे द्वन्द्व समासे ऋदन्तात् पूर्व्व पदात् आनङ् स्यात्। पिता मात्रा इत्यनेन एकशेषश्च। माता च पिता च माता-पितरौ पितरौ वा। 4. क्लेशम् Acc. of सहेते। 5. सह + आते। असहिष्ट। 6. निष्कृतिः निस् — कृ + क्तिन्। 7. शक्या शक + यत् कर्म्मणि। अशकत्। 8. वर्षशतैः वर्षाणां शतानि तैः करणे तृतीया। ननु अपवर्गे फलप्राप्तेरभावात्।

*Change of voice*....यः क्लेशः मातापितृभ्यां सह्यते तस्य निष्कृत्या कर्त्तुं अशक्यया न भूयते ॥ २२७ ॥

BENGALI.—গর্ভাধান হইবার পর হইতে মাতা ও পিতা সন্তানের জন্য যে ক্লেশ সহ্য করেন, সে ক্লেশজনিত ঋণ শত শত বৎসরে শত জন্মেও সন্তানগণ পরিশোধ করিতে সমর্থ হয় না। মাতা গর্ভে ধারণ, প্রসব বেদনা সহন, জাত শিশুর রক্ষণ ও বর্দ্ধনজনিত ক্লেশ এবং পিতা উপনয়ন হইতে বেদাদি অধ্যাপন ও পোষণাদি ক্লেশ সহ্য করেন। অতএব পিতা ও মাতা দেবতাস্বরূপ তাঁহাদিগকে অবমাননা করিবে না। ২২৭।

ENGLISH.—The troubles which the parents suffer in the birth or production of men cannot be made amends for even in hundreds of years. (227).

**तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्व्वदा।**
**तेष्वेव त्रिषु तुष्टेषु तपः सर्व्वं समाप्यते ॥ २२८ ॥**

PROSE.—तयोः नित्यं आचार्य्यस्य च सर्व्वदा प्रियं कुर्य्यात्, तेषु त्रिषु तुष्टेषु (सत्सु) एव सर्व्वं तपः समाप्यते ॥२२८॥

KULLUKA.—तयोर्नित्यमिति। तयोर्मातापित्रोः प्रत्यहमाचार्य्यस्य च सर्व्वदा प्रीतिमुत्पादयेत्। यस्मात्तेष्वेव त्रिषु प्रीतेषु सर्व्वं तपः चान्द्रायणादिकं फलद्वारेण सम्यक् प्राप्यते मातादित्रयतुष्ट्यैव सर्व्वस्य तपसः फलं प्राप्यते इत्यर्थः ॥२२८॥

GRAMMAR.—1. तुष्टेषु तेषु भावे सप्तमी। 2. समाप्यते सम् आप् कर्म्मणि लट् ते।

*Change of voice*—प्रियं क्रियेत। तपः समाप्नोति (त्रिषु:) ॥२२८॥

BENGALI.—অতএব প্রতিদিন মাতা পিতার ও সর্ব্বদা আচার্য্যের প্রিয়সাধন করিবে; এই তিনজন তুষ্ট হইলেই সমস্ত তপস্যা ফলপ্রদ হয় ॥২২৮॥

ENGLISH.—One should always do what is agreeable to them and to the preceptor. These three being pleased all penance is accomplished. (228).

तेषां त्रयाणां शुश्रूषा परमं तप उच्यते।
न तैरभ्यननुज्ञातो धर्म्ममन्यं समाचरेत् ॥ २२९ ॥

PROSE—तेषां त्रयाणां शुश्रूषा परमं तपः उच्यते तैः अननुज्ञातः अन्यं धर्म्मं समाचरेत् ॥ २२९ ॥

KULLUKA.—तेषामिति। तेषां मातापित्राचार्य्याणां परिचर्य्या सर्व्वं तपोमध्ये श्रेष्ठम् इतएव सर्व्वतपःफलप्राप्तेः। धर्म्मान्यमपि धर्म्मं कथञ्चित् करोति तदप्येतत्त्रयाणामनुमतिव्यतिरेकेण न कुर्य्यात् ॥ २२९ ॥

GRAMMAR.—1. शुश्रूषा – श्रु – सन + अ। 2. तपः विधेय विशेषणम् of शुश्रूषा। 3. तैः कर्त्तरि तृतीया। 4. न अनुज्ञातः अननुज्ञातः अनु – ज्ञा + क्तः कर्म्मणि।

*Change of voice.* – शुश्रूषां तपः वक्ति। तैः अननुज्ञातेन अन्यः धर्म्मः न समाचर्य्येत ॥ २२९ ॥

BENGALI.—মাতা পিতা ও আচার্য্য এই তিন জনের পরিচর্য্যাই পরম তপস্যা; তাঁহাদের অনুমতি ছাড়া অন্য কোন ধর্ম্মকার্য্যও করিবে না ॥২২৯॥

ENGLISH.—To attend upon and serve these three is said to be the highest penance. One should not set about any other virtue without being permitted by them. (229).

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

PROSE.—ते एव हि त्रयः लोकाः, ते एव हि त्रयः आश्रमाः, ते एव हि त्रयः वेदाः, ते एव त्रयः अग्नयः उक्ताः ॥ २३० ॥

KULLUKA.—त एवेति यस्मात्त एव मातापित्राचार्य्यास्त्रयो लोका लोकत्रयप्राप्ति-

हेतुत्वात् कारणे कार्य्योपचारः, तएव ब्रह्मचर्य्यादिभाववयरूपा आश्रमाः गार्हस्थ्याद्याश्रम-प्रदायकत्वात् तएव त्रयोवेदा वेदत्रयजपफलोपायत्वात् त एव हि त्रयोऽग्नयोऽभिहिताः त्रेताग्न्याधेयस्थादिफलदातृत्वात् ॥ २३० ॥

GRAMMAR.—1. ते उद्देश्य। 2. लोकाः विधेय विशेषणम् of ते।

*Note.* – त्रिलोकी – भूर्लोकः, भुवर्लोकः स्वर्लोकः।

*Change of voice.*—तैः एव त्रिभिः लोकैः भूयते &c. &c. ॥२३०॥

BENGALI—সেই তিন জনই তিন লোক কেননা ইঁহারাই ত্রিলোকপ্রাপ্তির কারণ; ইঁহারাই তিন আশ্রম, কেননা ইঁহারাই গার্হস্থ্যাদি আশ্রম প্রদান করেন; ইঁহারাই তিন বেদ, কেননা বেদত্রয় জপের ফলপ্রাপ্তির উপায় ইঁহারাই; ইঁহারাই গার্হপত্যাদি অগ্নিত্রয়, কেননা অগ্নিত্রয় দ্বারা সম্পাদ্য যজ্ঞের ফল ইঁহারাই দান করেন ॥ ২৩০ ॥

ENGLISH.—They three are surely the three regions, they three are the three stages of life; they three are indeed the three Vedas; and they three are said to be the three fires. (230).

पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ २३१ ॥

PROSE.—पिता वै गार्हपत्यः अग्निः, माता दक्षिणः अग्निः, गुरुः आहवनीयः अग्निः स्मृतः, सा अग्नित्रेता गरीयसी ॥ २३१ ॥

KULLUKA —पितेति वैशब्दोऽवधारणे। पितैव गार्हपत्योऽग्निः माता दक्षिणाग्निः आचार्य्य आहवनीयः सेयमग्नित्रेता श्रेष्ठतरा स्तुत्यर्थत्वाच्चास्य न वस्तुविरोधोऽत्र भावनीयः ॥ २३१ ॥

*Note.*—अग्नित्रयम् गरीयस्त्वात् अग्नित्वम् नतु साक्षात् अग्नित्वम् अग्निमनुष्ययो-र्भेदात्। तदाह: कुल्लूकभट्टः सेयमित्यादि।

GRAMMAR—1. गृहपतिना नित्यं युक्तः गृहपति + ण्यः। 2. आङ – हु + अनीयर्। 3. अग्नीनां त्रेता or अग्नय एव त्रेता। अग्नित्रयमिदं त्रेता इति अमर-वचनात्। 4. गुरु + ईयसु:।

*Change of voice.*—पित्रा गार्हपत्येन अग्निना भूयते इत्यादि ॥ २३१ ॥

BENGALI.— পিতাই গার্হপত্য অগ্নি, মাতাই দক্ষিণাগ্নি, গুরুই আহবনীয় অগ্নি; এই তিন অগ্নি গরীয়ান্ ॥ ২৩১ ॥

ENGLISH.—Father is regarded as the *Garhapatya* fire ; mother as the *Dakshina* fire ; and the preceptor as the *Ahabaniya* fire. This threefold fire is more important than (the tree actual fires). (231).

## त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्गृही ।
## दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥

PROSE.—गृही एतेषु त्रिषु अप्रमाद्यन् त्रीन् लोकान् विजयेत्, स्ववपुषा दीप्यमानः देववत् दिवि मोदते ॥ २३२ ॥

KULLUKA.—त्रिष्विति। एतेषु त्रिषु प्रमादमकुर्व्वन् ब्रह्मचारी तावत् जयत्येव गृहस्थोऽपि त्रीन् लोकान् संज्ञापूर्व्वकस्यात्मनेपदविधेरनित्यत्वात् विपराभ्यां जेरित्यात्मनेपदम्, त्रीन् लोकान् विजयेदिति त्रिष्वाधिपत्यं प्राप्नोति तथा स्ववपुषा प्रकाशमानः सूर्य्यादिदेववद्दिवि हृष्टो भवति ॥ २३२ ॥

GRAMMAR.—1. त्रिषु अधिकरणे सप्तमी। त्रिष्विति न पञ्चमी प्रमादार्थकधातुप्रयोगेऽपि। तेन सह त्रिशब्दस्य साक्षात् योगाभावात् धर्म्मात् प्रमाद्यतीति अत्र तु प्रमादेन धर्म्मस्य साक्षात् योगः। 2. अप्रमाद्यन् न प्रमाद्यन् अप्रमाद्यन् नञ् समासः। प्र—मद+शतृ। 3. लोकान् Acc. of विजयेत्। 4. विजयेत् it should be विजयेत as जि becomes आत्मनेपदी after वि and परा। But संज्ञापूर्व्वकविधेरनित्यत्वात् न आत्मनेपदमत्र। 5. स्वं वपुः स्ववपुः तेन करणे तृतीया। 6. दीप+शानच् कर्त्तरि। अदीपि अदीपिष्ट। 7. देव+वति। दीव्यति द्योतते इति देवः। 8. दिवि=अधिकरणे सप्तमी। 9. मोदते मुद+लट् ते।

*Change of voice.*—गृहिणा अप्रमाद्यता त्रयः लोकाः विजीयेरन् दीप्यमानेन मुद्यते ॥२३२॥

BENGALI.—এই তিনের প্রতি প্রমাদশূন্য হইলে ব্রহ্মচারী ত ত্রিলোক জয় করিবেই, এমন কি গৃহীও ত্রিলোক জয় করেন এবং সূর্য্যাদিবৎ দীপ্যমান শরীরে স্বর্গে হর্ষ প্রাপ্ত হয় ॥ ২৩২ ॥

ENGLISH.—A householder who is not careless of these three can conquer the three worlds. Shining with his own body like the sun in the firmament he rejoices and becomes bappy. (232).

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ २३३ ॥

PROSE. – (मनुष्यः) मातृभक्त्या इमं लोकं पितृभक्त्या मध्यमं लोकं गुरुशुश्रूषया तु ब्रह्मलोकं एव समश्नुते ॥ २३३ ॥

KULLUKA. – इममिति। इमं भूर्लोकं मातृभक्त्या, पितृभक्त्या मध्यममन्तरीक्षम्, आचार्य्यभक्त्या तु हिरण्यगर्भलोकमेव प्राप्नोति ॥ २३३ ॥

GRAMMAR. – 1. मातृभक्त्या मातुः भक्तिः मातृभक्तिः or मातरि भक्तिः तया करणे तृतीया। 2. गुरुशुश्रूषया गुरोः शुश्रूषा तया करणेन। 3. ब्रह्मणः चतुर्मुखस्य लोकः स्थानम् तम् Acc. of समश्नुते। 4. सम् – अश – लट् ते। आशिष्ट।

*Change of voice.*—अयं लोकः......मध्यमः ब्रह्मलोकः अश्यते ॥२३३॥

BENGALI.—মনুষ্য মাতৃভক্তি দ্বারা ভূর্লোক, পিতৃভক্তি দ্বারা ভুবর্লোক এবং গুরুভক্তি দ্বারা হিরণ্যগর্ভব্রহ্মলোক প্রাপ্ত হয় ॥ ২৩৩ ॥

ENGLISH.—One obtains this world by devotion to his mother, the middle world by devotion to his father, and the reason of Brahma by serving his preceptor. (233).

सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः ॥ २३४ ॥

PROSE. – यस्य एते त्रयः आदृताः तस्य सर्व्वे धर्म्माः आदृताः, यस्य तु एते अनादृताः तस्य सर्व्वाः क्रियाः अफलाः ॥ २३४ ॥

KULLUKA.—सर्व्वे तस्येति। यस्यैते त्रयः मातापित्राचार्य्या आदृता सत्कृताः तस्य सर्व्वे धर्म्माः फलदा भवन्ति। यस्यैते अथोऽनादृतास्तस्य सर्व्वाणि श्रौतस्मार्त्तकर्म्माणि निष्फलानि भवन्ति ॥ २३४ ॥

GRAMMAR.—1. आदृताः आङ् – दृ + क्तः कर्म्मणि। आद्रियते। आदृत। 2. न आदृताः अनादृताः। 3. अफलाः न विद्यते फलं यासां ताः बहुव्रीहिः।

*Change of voice.*—यस्य त्रिभिः आदृतैः भूयते तस्य सर्व्वैः धर्म्मैः आदृतैः भूयते यस्य एतैः अनादृतैः भूयते तस्य सर्व्वाभिः क्रियाभिः निष्फलाभिः भूयते ॥ २३४ ॥

BENGALI.—যিনি এই তিনকে সমাদর করেন তাঁহার সকল ধর্ম্মই ফলপ্রদ হয়, যিনি এই তিনকে অনাদর করেন তাঁহার বৈদিক ও স্মার্ত্ত সমস্ত কর্ম্ম নিষ্ফল হয়।২৩৪।

ENGLISH.—Whoever honours these three, honours also all virtues and duties. But all acts of him are fruitless by whom these three are disrespected. (234).

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः॥ २३५॥

PROSE.—ते त्रयः यावत् जीवेयुः तावत् अन्यं न समाचरेत्, नित्यं प्रियहिते रतः तेषु एव शुश्रूषां कुर्य्यात्॥ २३५॥

KULLUKA.—यावदिति। ते त्रयो यावज्जीवन्ति तावदन्यं धर्म्मं स्वातन्त्र्येण नानुतिष्ठेत्। तदनुज्ञया तु धर्म्मानुष्ठानं प्राश्चित्तमेव किन्तु तेष्वेव प्रत्यहं प्रियहितपरः शुश्रूषां कुर्य्यात्, तदर्थे प्रीतिसाधनं प्रियं भैषज्यपानादिवत् आयत्यामिष्टसाधनं हितम्॥ २३५॥

*Note.*—प्रियम् is explained तदर्थे इति, हितम् is explained आयत्या मिति।

GRAMMAR.—1 प्रियञ्च तत् हितञ्च प्रियहितम् तस्मिन्।

*Change of voice.*—तैः त्रिभिः जीव्येत अन्यः न समाचर्य्येत; एतैः शुश्रूषा क्रियेत॥ २३५॥

BENGALI.—সেই তিনজন যাবৎ জীবিত থাকেন তাবৎকাল অন্য কোন ধর্ম্মকার্য্য করিবে না, কিন্তু প্রত্যহ তাঁহাদের প্রিয়কার্য্য ও হিতকর কার্য্যে নিযুক্ত থাকিয়া তাঁহাদের শুশ্রূষা করিবে। ২৩৫।

ENGLISH.—One should do nothing else as long as these three would live, but he should serve them everyday, intent on what is agreeable and beneficial (to them.) (235).

तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्।
तत्तन्निवेदयेत् तेभ्यो मनोवचनकर्म्मभिः॥ २३६॥

PROSE.—तेषां अनुपरोधेन मनोवचनकर्म्मभिः यत् यत् पारत्र्यं आचरेत् तत्तत् तेभ्यः निवेदयेत् ॥ २३६ ॥

KULLUKA.—तेषामिति। तेषां शुश्रूषाया अविरोधेन तदनुज्ञातो यद्यन्मनोवचनकर्म्मभिः परलोकफलं कर्म्मानुष्ठितं तन्मयैतदनुष्ठितमिति पश्चात्तेभ्यो निवेदयेत ॥२३६॥

GRAMMAR.—1. तेषाम् कर्म्मणि षष्ठी कृद्योगात्। 2. न उपरोधः व्याघातः अनुपरोधः उप – रुध + घञ् प्रकृत्यादिभ्य तृतीया। 3. मनश्च वचनञ्च कर्म्म च तानि तैः करणे तृतीया। 4. पारत्र्यम् पर + त्रल्। परत्र + ष्यञ्। 5. तत् तत् वीप्सायां द्विः। 6. तेभ्यः क्रियायाकर्म्मणमपि कर्त्तव्यमिति चतुर्थी।

*Change of voice.* – पारत्र्यं आचर्य्येत......तत् तत्......निवेद्येत ॥२३६॥

BENGALI.—তাহাদের শুশ্রূষার কোন অংশে ব্যাঘাত না করিয়া মন, বাক্য অথবা কর্ম্মদ্বারা পরলোকে ফলপ্রদ কোন কর্ম্ম যদি কেহ করেন, তবে আমি এই এইরূপ কর্ম্ম করিয়াছি এরূপ তাঁহাদের নিকট তিনি নিবেদন করিবেন। ২৩৬ ॥

ENGLISH.—Whatever he may perpetrate in thought, in speech, and in act with a view to reap the fruit in the next world, without disturbing or interrupting his service to them, he should report it to them. (236).

त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते।
एष धर्म्मः परः साक्षादुपधर्म्मोऽन्य उच्यते ॥ २३७ ॥

PROSE.—हि एतेषु त्रिषु पुरुषस्य कृत्यं इति समाप्यते ( तस्मात् ) एषः साक्षात् परः धर्म्मः अन्यः उपधर्म्मः उच्यते ॥ २३७ ॥

KULLUKA.—त्रिष्विति। इतिशब्दः कात्स्न्र्ये। हिशब्दो हेतौ। यस्मादेतेषु त्रिषु शुश्रूषितेषु पुरुषस्य सर्व्वं श्रौतस्मार्त्तं कर्त्तव्यं सम्पूर्णमनुष्ठितं भवति तत्फलावाप्तेः तस्मादेष श्रेष्ठो धर्म्मः साक्षात सर्व्वपुरुषार्थसाधनः। अन्यस्त्वग्निहोत्रादिः प्रतिनियतस्वर्गादिहेतुरुपधर्म्मो जघन्यधर्म्मइति शुश्रूषास्तुतिः ॥ २३७ ॥

GRAMMAR.—1. त्रिषु भावे सप्तमी। 2. कृत्यं कृ + क्यप्। 3. इति अव्ययम् means fully. 4. सम् – आप + ते कर्म्मणि। 5. उपधर्म्मः उपगतः निकृष्टः धर्म्मः उपधर्म्मः प्रादि समासः।

*Change of voice.*—कृत्यं समाप्नोति एतेन परेण धर्म्मेण भूयते अन्येन उपधर्म्मेण वक्ति ॥२३७॥

BENGALI.—যখন এই তিনজনকে শুশ্রূষা করিলেই পুরুষের শ্রৌতস্মার্তাদি সকল ধর্ম্ম সম্পূর্ণরূপে অনুষ্ঠান করা হয়, কেননা ইহারা তুষ্ট হইলেই ধর্ম্মের ফললাভ হয়, তখন ইহারাই সমস্ত পুরুষার্থসাধক উৎকৃষ্ট ধর্ম্ম, এবং যজ্ঞাদি অন্য ধর্ম্মকে নিকৃষ্ট বলা যায়। ২৩৭।

ENGLISH.—Because all the duties of a man are fully done when these three (are adored), it is directly the chief of all duties. Other duties are called secondary or minor duties. (237).

श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि ॥ २३८ ॥

PROSE.—श्रद्दधानः सन् अवरात् अपि शुभां विद्यां, अन्त्यात् अपि परं धर्म्मं दुष्कुलात् अपि स्त्रीरत्नं आददीत ॥ २३८ ॥

KULLUKA.—श्रद्दधान इति । श्रद्धायुक्तः शुभां दृष्टशक्तिं गारुडादिविद्याम् अवराच्छूद्रादपि गृह्णीयात् अन्त्यश्चाण्डालः तस्मादपि जातिस्मरादेर्विहितयोगप्रकर्षात् दुष्कृतशेषोपभोगार्थमवाप्तचाण्डालजन्मनः परं धर्म्मं मोक्षोपायमात्मज्ञानमाददीत तथा मोक्षमेवोपक्रम्य मोक्षधर्म्मे प्राप्यज्ञानं ब्राह्मणात् क्षत्रियात् वैश्यात् शूद्रादपि नीचादभीक्ष्णं श्रद्धातव्यं श्रद्दधानेन नित्यश इतिहासं प्रति जन्मसमृत्यविशेषता। मेधातिथिस्तु श्रुतिस्मृत्यपेक्षया परधर्म्मो लौकिकः, धर्म्मशब्दो व्यवस्थायामपि युज्यते। यदि चाण्डालोऽप्यत्र प्रदेशे मा चिरंस्थाः मा चास्मिन्नम्भसि स्नाया इति वदति तमपि धर्म्ममनुतिष्ठेत्। प्रामाण्याल्लौकिकं वस्तु परं धर्म्ममिति ब्रूवन्। चित्रं तथापि सर्व्वत्र श्लाघ्यो मेधातिथिः सताम्। स्त्रीरत्नम् आत्मापेक्षया निकृष्टकुलादपि परिणेतुं स्वीकुर्य्यात् ॥ २३८ ॥

GRAMMAR.—1. श्रत्—धा+शानच्। 2. अवरात् अपादाने पञ्चमी। 3. विद्याम् Acc. of आददीत। 4. अन्त्यात् अन्ते भवः अन्त्यः अन्त्यजः इत्यर्थः तस्मात् अपादाने पञ्चमी। 5. दुष्टं कुलं दुष्कुलं तस्मात्। 6. स्त्री एव रत्नम् स्त्रीरत्नम् तत् Acc. of आददीत। 7. आङ्—दा+ईत आददीत। आदित आदिषाताम्।

*Change of voice*—श्रद्दधानेन शुभा विद्या, परःधर्म्मः.........स्त्रीरत्नम् आदेयित ॥ २३८ ॥

BENGALI.—শ্রদ্ধান্বিত হইয়া গারুড়াদি বিদ্যা শূদ্র হইতেও গ্রহণ করিবে, জাতিস্মর যোগযুক্ত পাপাবশেষ ভোগার্থে চাণ্ডালাদি কুলে জাত ব্যক্তি হইতেও পরধর্ম্ম অর্থাৎ আত্মজ্ঞান গ্রহণ করিবে, এবং নিজ হইতে নিকৃষ্ট কুলজাত উত্তম কন্যা বিবাহ করিবে। ২৩৮।

ENGLISH.—One should acquire with faith good knowledge from even an inferior person, learn excellent virtues from even one of the lowest caste and secure a gem of a woman even from a bad family. (238).

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्॥ २३९॥

PROSE.—विषात् अपि अमृतं बालात् अपि सुभाषितं अमित्रात् अपि सद्वृत्तं अमेध्यात् अपि काञ्चनं ग्राह्यम्॥ २३९॥

KULLUKA.—विषादिति। विषं यद्यमृतयुक्तं भवति तदा विषमपसार्य्य तस्मादमृतं ग्राह्यं, बालादपि हितवचनं ग्राह्यं शत्रुतोऽपि सज्जनवृत्तम् अमेध्यादपि सुवर्णादिकं ग्रहीतव्यम्॥ २३९॥

GRAMMAR.—1. विषात्। 2. बालात्। 3. अमित्रात्। 4. अमेध्यात् अपादाने पञ्चमी। 5. अमित्रात् अमित्रः शत्रुः तस्मात् मित्र शब्दस्तु वान्त इति सूत्रेण नपुंसकम्। अमित्र शब्दस्तु पुंलिङ्ग एव न मित्रं अमित्रः इति सिद्धान्तकौमुदीवचनात्। 6. सतां वृत्तम् सद्वृत्तम्। 7. न मेध्यं अमेध्यम् मेध+यत्। 8. ग्रह+ण्यत्।

*Change of voice.*—अमृतेन सुभाषितेन सद्वृत्तेन काञ्चनेन ग्राह्येन भूयते॥ २३९॥

BENGALI.—বিষামৃত একত্র মিশ্রিত থাকিলেও বিষ বাছিয়া অমৃত গ্রহণ করিবে, বালক হইতেও হিতবাক্য গ্রহণ করিবে, শত্রু হইতেও সচ্চরিত্র গ্রহণ করিবে, অপবিত্র স্থান হইতেও কাঞ্চন গ্রহণ করিবে। ২৩৯।

ENGLISH.— Nectar is to be accepted even from poison, a good saying even from a boy; good conduct even from an enemy, and gold even from an impure thing. (239).

स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्व्वतः॥ २४०॥

PROSE.—स्त्रियः रत्नानि अथ विद्या धर्मः शौचं सुभाषितं विविधानि च शिल्पानि सर्व्वतः समादेयानि॥ २४०॥

KULLUKA.—स्त्रिय इति। अत्र स्त्र्यादीनामनुक्तानामपि दृष्टान्तत्वेनोपादानं, यथा स्त्र्यादयो निकृष्टकुलादिभ्यो गृह्यन्ते तथा अन्यान्यपि हितानि चित्रलिखनादीनि सर्व्वतः प्रतिगृहीतव्यानि ॥ २४० ॥

GRAMMAR.—1. समादेयानि qualifying एतानि। सामान्ये नपुंसकम् सम्—आ—दा+य। 2. सर्व्वतः सर्व्वस्मात् अपादाने पञ्चमी।

*Change of voice.*—स्त्रीभिः रत्नैः विद्यया धर्म्मेण शौचेन सुभाषितेन विविधैः शिल्पैः सर्व्वतः समादेयैः भूयते ॥ २४० ॥

BENGALI.—স্ত্রী, রত্ন, বিদ্যা, ধর্ম্ম, শৌচ, হিতবাক্য এবং বিবিধ শিল্প সকলের নিকট হইতেই গ্রহণ করিবে ॥ ২৪০ ॥

ENGLISH.—Women, gems learning, virtue, purity good saying and various fine or mechanical arts are to be accepted from all. (240,.

**अब्राह्मणादध्ययनमापत्काले विधीयते।**

**अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥ २४१ ॥**

PROSE.—अब्राह्मणात् आपत्काले अध्ययनं विधीयते, यावत् अध्ययनं तावत् गुरोः (क्षत्रियादेः) शुश्रूषा अनुव्रज्या च विधीयते ॥ २४१ ॥

KULLUKA.—अब्राह्मणादिति। ब्राह्मणादन्यो यो द्विजः क्षत्रियस्तदभावे वैश्यो वा तस्मादध्ययनमापत्काले ब्राह्मणाध्यापकासम्भवे ब्रह्मचारिणो विधीयते। अनुव्रज्यादिरूपा गुरोः शुश्रूषा यावदध्ययनं तावत् कार्य्या गुरुत्वेन पादप्रक्षालनोच्छिष्टप्रोञ्छनादिरूपा शुश्रूषा प्रसक्ता सा न कार्य्या तदर्थमनुव्रज्या चेति विशेषितम्। गुरुत्वमपि यावदध्ययनमेव क्षत्रियस्याह व्यासः—मन्त्रदः क्षत्रियो विप्रैः शुश्रूष्योऽनुगमादिना। प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः ॥ २४१ ॥

GRAMMAR.—1. न ब्राह्मणः अब्राह्मणः तदन्यत्वं तदल्पता इत्यत्र नञ्शब्दस्य तदन्यत्वं अर्थः। ब्राह्मणात् अन्यः अब्राह्मण इत्यर्थः। आख्यातोपयोगे इति पञ्चमी नियमपूर्व्वकविद्यास्वीकारप्रकरणात्। 2. आपदां काले। 3. गुरोः शेषे षष्ठी। 4. अनु+व्रज+क्यप्।

*Change of voice.*—अध्ययनं विधत्ते। शुश्रूषां अनुव्रज्यां विधत्ते ॥२४१॥

BENGALI.—আপৎকালেই কেবল ব্রাহ্মণের অভাবে অব্রাহ্মণ দ্বিজ (ক্ষত্র ও বৈশ্য) হইতে অধ্যয়ন করা বিহিত আছে এবং যাবৎকাল অধ্যয়ন করিবে তাবৎকাল ক্ষত্রিয়

বা বৈশ্য গুরুর অনুগমন ও শুশ্রূষা করিবে কিন্তু পাদপ্রক্ষালন ও উচ্ছিষ্ট মোচনাদি করিবে না; পাঠ সমাপ্ত হইলে শিষ্য ব্রাহ্মণ গুরু হইবে এবং শিক্ষক ক্ষত্রিয় বা বৈশ্য শিষ্য তুল্য হইবে। ইহা উপকুর্ব্বাণ নামক ব্রহ্মচারী অনুষ্ঠান করিবে, নৈষ্ঠিক ব্রহ্মচারী তাহা করিবে না॥ ২৪১॥

ENGLISH.—Reading (the Vedas) from one who is not a Brahman is enjoined in times of danger and distress. To follow and serve (such) a preceptor lasts as long as reading continues. (241).

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम्॥ २४२॥

PROSE.—अनुत्तमां गतिं काङ्क्षन् शिष्यः अब्राह्मणे गुरौ अननूचाने ब्राह्मणे च गुरौ आत्यन्तिकं वासं न वसेत्॥ २४२॥

KULLUKA.—ब्रह्मचारित्वेन नैष्ठिकस्यापि अब्राह्मणादध्ययनं प्रसक्तं प्रतिषेधति नाब्राह्मण इति। आत्यन्तिकं वासं यावज्जीविकं ब्रह्मचर्य्यं चरिष्यादिकं गुरौ ब्राह्मणे वा साङ्गवेदानध्येतरि अनुत्तमां गतिं मोक्षलक्षणामिच्छन् शिष्यो नानुतिष्ठेत्॥२४२॥

*Note*—There are two classes of Brahmacharins, one class after finishing their study return home and become householders; the other class pass their whole life in study in the house of their preceptors. The former are called *upakurbanas*, and the latter the *naisthikas*.

GRAMMAR.—1. न विद्यते उत्तमा यस्याः सा अनुत्तमा ताम् बहुव्रीहिः। 2. गतिम् Acc. of काङ्क्षन्। 3. शिष्यः शास्+क्यप्। 4. न ब्राह्मणः अब्राह्मणः तस्मिन्। 5. आत्यन्तिकम् अन्तं अतिक्रान्तः अत्यन्तः (अत्यन्त+ठञ्।) अत्यन्तविषयकं आत्यन्तिकम् qualifies वासम्। 6. वासम् Acc. of वसेत्। 7. वसेत् अनुतिष्ठेत्। 8. अननूचाने न अनूचानः अननूचानः तस्मिन् qualifies ब्राह्मणे, उपेयिवाननाश्वाननूचानश्च इति निपातनात् अनुपूर्व्वात् वचेः कर्त्तरि कानच्। "वेदस्य अनुवचनं कृतवान् अनूचानः।" Bhatto.

*Change of voice.*—अनुत्तमां गतिं काङ्क्षता शिष्येण आत्यन्तिको वासः न उष्येत॥ २४२॥

BENGALI.—যে শিষ্য ব্রহ্মচর্য্যদ্বারা মোক্ষগতিলাভ করিতে ইচ্ছা করে, সে ক্ষত্রিয়াদি গুরুর গৃহে অথবা সাঙ্গবেদে অনধিকারী ব্রাহ্মণগুরুগৃহে যাবজ্জীবন নৈষ্ঠিক ব্রহ্মচারী হইয়া বাস করিবেনা। ২৪২।

ENGLISH.—A pupil knowing the law should make no gifts (or benefit) to his preceptor before (he finishes his student-life). One who will bathe (*i.e.* take the vow of a *Snataka*) should fetch, being ordered by his preceptor, the preceptor's fee according to his might. (245).

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।
धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत् ॥ २४६ ॥

PROSE.—क्षेत्रं हिरण्यं गां अश्वं छत्रोपानहम् आसनं धान्यं शाकं च वासांसि गुरवे (दत्त्वा) प्रीतिं आवहेत्॥ २४६ ॥

KULLUKA.—किं तत् तदाह क्षेत्रमिति। शक्त्या गुर्व्वर्थमाहरेदित्युक्तत्वात् क्षेत्रहिरण्यादिकं यथासामर्थ्यं विकल्पितं समुच्चितं वा गुरवे दत्त्वा तत्प्रीतिमर्जयेत्। विकल्पपक्षे चान्ततोऽप्यासम्भवे छत्रोपानहमपिदद्यादित्यन्तनिर्देशात् छसुच्चितदानं प्रदर्शनार्थं चैतत् सम्भवे चान्यदपि दद्यात्। अतएव लघुहारीतः—एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी भवेत् असम्भवे शाकमपि दद्यात् ॥ २४६ ॥

GRAMMAR.—1. छत्रोपानहम् छत्रयुक्ता उपानत् छत्रोपानत् ताम्। छत्रं च उपानच्च इति छत्रोपानहम्। समाहार द्वन्द्वात्‌ चवर्गान्तात् समाहारे इति टच्। Acc. of दत्त्वा understood. 2. गुरवे सम्प्रदाने चतुर्थी। 3. प्रीतिम् Acc. of आवहेत्।

*Change of voice.*—प्रीतिः आवह्येत ॥ २४६ ॥

BENGALI.—শিষ্য (শক্তি অনুসারে) গুরুকে ক্ষেত্র, সুবর্ণ, গো, অশ্ব, ছত্র, পাদুকা, আসন, ধান্য, শাক ও বস্ত্র দান করিয়া গুরুর প্রীতি উৎপাদন করিবে; না পারিলে ছত্র পাদুকা দিবে; অন্ততঃ শাক দিবে। ২৪৬।

ENGLISH.—He should minister to the satisfaction of his preceptor by giving him rice-field, gold; cow, horse, umbrella and shoe, seat or stool, paddy, vegetables and cloths. (246).

आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७ ॥

PROSE.—आचार्य्ये खलु प्रेते ( सति ) गुणान्विते गुरुपुत्रे गुरुदारे सपिण्डे वा गुरुवद्वृत्तिं आचरेत् ॥ २४७ ॥

KULLUKA.—नैष्ठिकस्यायमुपदेशः आचार्य्य इति। आचार्य्ये मृते तत्पुत्रे विद्यादिगुणयुक्ते तदभावे गुरुपत्न्यां तदभावे गुरोःसपिण्डे पितृव्यादौ गुरुवत् शुश्रूषामनुतिष्ठेत् ॥ २४७ ॥

GRAMMAR.—1. आचार्य्ये भावे सप्तमी। 2. गुणैरन्वितः गुणान्वितः तस्मिन्। 3. गुरोः दाराः गुरुदाराः तस्मिन्। दाराक्षतलाजासूनां बहुत्वञ्च इति बहुत्वमपि अतिक्रान्तम्। 4. सपिण्डे समानः पिण्डो यस्य इति सपिण्डः तस्मिन् गुरोः इत्यर्थः। सपिण्डशब्दो रूढ़ः।

*Change of voice.*—गुरुवद्वृत्तिः आचर्य्येत ॥ २४७ ॥

BENGALI.—আচার্য্যের মৃত্যু হইলে গুণযুক্ত গুরুপুত্র কি গুরুপত্নী, কি গুরুর পিতৃব্যাদি সপিণ্ডের প্রতি গুরুবৎ আচরণ করিবে। ২৪৭।

ENGLISH.—When the Acharyya or preceptor is dead, the pupil should adopt the same course of conduct towards the well-qualified son of his preceptor, the wife of the preceptor, or the *sapinda* (a kinsman connected by the offering of the rice-ball or *pinda*) of his preceptor as towards his preceptor. (247).

**एतेष्वविद्यमानेषु स्थानासनविहारवान्।**
**प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४८ ॥**

PROSE.—एतेषु अविद्यमानेषु ( अग्नेः समीपे ) स्थानासनविहारवान् अग्निशुश्रूषां प्रयुञ्जानः आत्मनः देहं साधयेत् ॥ २४८ ॥

KULLUKA.—एतेष्विति। एतेषु त्रिषु अविद्यमानेषु सततमाचार्य्यसेवाग्नेः समीपे स्थानासनविहारैः सायंप्रातरादौ समिद्धोमादिना अग्नेः शुश्रूषां कुर्व्वन् आत्मनो देहमात्मदेहावच्छिन्नं जीवं ब्रह्मप्राप्तियोग्यं साधयेत् ॥ २४८ ॥

GRAMMAR.—1. एतेषु भावे सप्तमी। 2. स्थानञ्च आसनञ्च विहारश्च स्थानासनविहाराः ततः मतुप्। 3. अग्नेः शुश्रूषा ताम्। Acc. of प्रयुञ्जानः 4. प्रयुञ्जानः प्र—युज कर्त्तरि शानच्। 5. देहम् Acc. of साधयेत्। 6. साधयेत् सिध—सिध् + यात्।

*Change of voice.*—स्थानासनविहारवता...प्रयुञ्जानेन देहः साध्येत ॥ २४८ ॥

BENGALI.—ঐ সকল ব্যক্তি না থাকিলে নৈষ্ঠিক ব্রহ্মচারী গুরুর অগ্নিসমীপেই

অবস্থান, উপবেশন ও বিহরণ করিয়া অগ্নির শুশ্রূষা করিতে করিতে নিজ দেহাবচ্ছিন্ন জীবকে ব্রহ্মপ্রাপ্তির যোগ্য করিবে। ২৪৮।

ENGLISH.—In the absence of these, the pupil should take to a careful service and worship of the fires of his preceptor, by staying and sitting near and walking about them and (in this manner) should make his body fit for (absorption into the Brahman). (248).

एवंचरति यो विप्रो ब्रह्मचर्य्यमविप्लुत:।
स गच्छत्युत्तमं स्थानं न चेहजायते पुन: ॥ २४९ ॥

## इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वितीयोऽध्याय: ॥ २ ॥

PROSE.—य: विप्र: एवं अविप्लुत: ब्रह्मचर्य्यं चरति स: उत्तमं स्थानं गच्छति न च इह पुन: जायते ॥ २४९ ॥

KULLUKA.—एवञ्चरतीति। या समाप्ति: शरीरस्येत्यनेन यावज्जीवनमाचार्य्यशुश्रूषया मोक्षलक्षणं फलमुक्तम्। इदानीमाचार्य्ये मृतेऽपि एवमित्यनन्तरोक्तविधिना आचार्य्यपुत्रादीनामप्यपिपर्य्यन्तानां शुश्रूषको यो नैष्ठिको ब्रह्मचर्य्यमखण्डितव्रतोऽनुतिष्ठति स उत्तमस्थानं ब्रह्मण्यात्यन्तिकलयलक्षणं प्राप्नोति न चेह संसारे कर्म्मवशादुत्पत्तिं लभते ॥ २४९ ॥

इति कुल्लुकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वितीयोऽध्याय:।

GRAMMAR.—1. अविप्लुत: न विप्लुत: प्लु + क्त। 2. ब्रह्मचर्य्यम् Acc. of चरति। चर + यत् चर्य्यम् भावे। ब्रह्मण: चर्य्यम् ब्रह्मचर्य्यम्। 3. जायते – जन लट् ते।

*Change of voice.*—येन विप्रेण अविप्लुतेन ब्रह्मचर्य्यं चर्य्यते तेन उत्तमं स्थानं गम्यते इह न जन्यते ( जायते वा ) ॥ २४९ ॥

BENGALI.—যে নৈষ্ঠিক ব্রহ্মচারী এইরূপে অক্ষতভাবে ব্রহ্মচর্য্য অনুষ্ঠান করে, সে উত্তম স্থান অর্থাৎ ব্রহ্মে লয়প্রাপ্ত হয়, এই সংসারে সে আর পুনর্ব্বার জন্মগ্রহণ করে না। ২৪৯॥

ENGLISH.—The Brahman, who observes the vow of religious studentship in this manner, withont deflecting from the proper course, attains to an excellent state, and is not born again in this world. (249).